## द्वितीयस्सर्गः ।

रजनियापनानन्तरं प्रातःकाले दिलीपो गां पुरतः कृत्वा वनं जगाम । मन्वर्थं पतिमनर्थैकस्य सुदक्षिणाऽपि तमनुगतवती । किञ्चिद्दूरं गता सा सुदक्षिणामनुचरन्ती च निवर्तयामास । मार्गे कश्चिदभिषज्यम्पमानैः कश्चित्(शाखानिपातनैव ताम् उपचयामास । वने गते दिलीपे तत्प्रभावेण तत्र न कश्चिदस्मिन्निदवर्थं कर्तुं शशाक । वनवह्निः शान्तिं प्राप । वृक्षाः फलपुष्पसमृद्धा बभूवुः । प्रबलः दुर्बलं न बाधयामास । एवं प्रतीतेऽपि सायंकाले तामनुगत आश्रमाय निवृत्तः सुदक्षिणा पथि विरतमात्म प्रथमत एव स्थिता गां पथि नामकोच्छ्रितवती । ततः उपचारवस्तुभिस्तां समभ्यर्च्य वत्सपरिकर्मोपरम्भोठितामपि धनवामतया पूर्वां प्रकृतीं विशेषत्वात्सम्भावं सपमनोरथं मेने । प्रहृतमां रात्रौ दिलीपोऽपरस्मृत्योद्वितमस्य गुरोः पादौ सम्पीड्य दोहनानन्तरं तां पुनः संसेव्य स्वयमपि सुष्वाप । प्रातः तस्याः प्रथमत एवोत्तस्थिवान् । एवं नियोगमात्रेण तेन एकविंशतिदिवसानि निन्यिरे । द्वाविंशेऽह्नि पशिवप्रमावाहनेनापि प्रवर्तयितुमशक्याऽप्यनुचरस्य मार्गं ज्ञातुमिच्छया कैलासस्य कन्दरां प्रविश्य केसरिसत्त्वेन समाक्रान्ता चक्रन्द । गिरिशोभाऽवलोकनप्रसक्तो दिलीपाऽप्य सिंहेनाक्रान्तां धेनुं ददर्श । झटिति तद्वधायोद्युक्तः, किन्तु चापमादाय प्रसारितः पाणिः शायकपुङ्ख एव लग्नः । एवं किञ्चिदपि विधातुमसमर्थमपि तं नृपं सिंहः "राजन् । गिरिशप्रसादात् मयि किञ्चिदपि भवान् कर्तुं समर्थः । गिरिशभक्तिरोऽहमेनां भक्षयित्वा तृप्तिं प्राप्स्यामि भवान् गृहं निवर्तताम्' इति सिंह उवाच । एवं वाक्यमाकर्ण्य दिलीप उवाच—'मृगेन्द्र । भगवान् गिरीशो गुरुर्विशिष्टश्च मे पूज्यः अत इमां परित्यज्य मम शरीरेण क्षुधां निवर्तय । "राजन् । शरीरं रक्ष एतेन बहवो विप्रमानव तुष्यन्ति' एवं तेन पुनः पुनराग्रहमानोऽपि स्वीयां तनुं दातुं मांस पिण्ड इव तस्याग्रतः स्थितः । तदा देवैः तस्योपरि पुष्पवृष्टिः विहिता सोऽपि 'वत्स उत्तिष्ठ' इत्यमृतकल्पं वाक्यं शुश्रोपि च । धेनुरुवाच—भद्र । गुरौ भक्त्या मय्यनुकम्पया च तवोपरि प्रीताऽस्मि वरं वृणीष्व मां कामधेनुं जानीहि । सम्पुटितपाणिर्दिलीपो मातः । सन्तानकामोऽस्मि इत्युवाच । साऽपि तथास्तु कथयित्वा मयीमं दुग्धं पिबेत्या' दिदेश । मातः । गुरोरपि विहितकर्माणि निवृत्ते तस्याज्ञयैव पातुं समीहे । इत्याकर्ण्य प्रसन्ना आश्रममियाय । गुरोराज्ञया पीतदुग्धः सुदक्षिणया समं राजधानीं निववृते । प्रीतिनेत्रैः प्रजाभिरवलोक्यमानो राज्यभारमारभत दधार, सुदक्षिणा च गर्भं धृतवती ।

कुपितमतङ्गमुनिकोपान्मया इक्ष्वाकुवंशीयोऽजस्ते ललाटं बाणेन भेत्स्यति तदेमां तनुं त्यक्त्वा पुनः स्वीयां तनुं प्राप्स्यसि । तदद्य भाग्येन भवन्तं प्राप्य शापान्मुक्तोऽस्मि तदिदं मदभिमन्त्रितं गान्धर्वमस्त्रं गृहाण एतेन रिपवो विनाऽपि प्रमृत्युमुपरि विजयं लप्स्यति । इत्याकर्ण्य अजितः कथञ्चित्तदस्त्रं स्वीकृत्य प्रतस्थे । मार्गे मेव क्रमेण च भोजराजधान्याः समीपं प्राप । तमागतमाकर्ण्य भोजस्तत्स्वागतं कर्तुममात्यैः सार्धं जगाम । महताऽऽदरेणाभिनन्द्य च तं स्वकां राजधानीम् । तत्र गत्वा तेन विहितं सत्कारमनुभूय इन्दुमतीगतमनस्कः शय्यामधिशिश्ये । प्रभाते वन्दिभिस्तत्तत्स्तोत्रपाठैर्जागरयाञ्चक्रिरे । स च झटिति समुत्थाय प्रातर्विधेयानि कर्माणि विदधे ॥

षष्ठः सर्गः ।

अथ अजो नानादेशसमागमस्य स्थितेषु तेषु तेषु मञ्चेषु स्वयम्वरमण्डपं प्राप । सर्वे एव महीपतयस्तमालोक्य इन्दुमतीलाभे निराशा बभूवुः । अथ तत्र गत्वा स्थिते सुभासने शिबिकामारूढा इन्दुमत्यपि समाजगाम । तां दृष्ट्वा सर्वे एव राजानो नानाविधाभिश्चेष्टाभिरात्मस्वनुरागं विदधिरे । ततः सुनन्दा नाम्नी द्वारपालिका अथ मगधदेशीयो राजा इत्थमस्य यशः ईदृशी कान्तिरिति कथयित्वा सर्वानेव नृपतीन् दर्शयन्ती अजस्य पुरतः प्राप । तमपि वर्ण्यं नृपाणां शिरोमणिः कश्चित् पुरञ्जय नाम्ना नृपतिर्बभूव यो वृषरूपधारिणं पुरन्दरमारुह्य असुरान् दैत्यान् जघान इन्द्रस्यार्धसिंहासनं च लेभे । तत्कुले रघुर्जातस्तस्य सूनुः शोभैकनिधिरजनामाऽयं कुमार एनं स्वीकृत्य भवती स्वर्णाङ्गुलिमुद्रिका रत्नमिव शोभां भास्यतीति जगाद । तद्रूपेण मुग्धा इन्दुमती तमेव वृतवती महताऽनुरागेण जयमालिकां तद्ग्रीवायामेव चिक्षेप । इत्थं तयोर्योग्यं परमवलोक्य सर्वे पौराः प्रशशंसिरे ।

सप्तमः सर्गः ।

अथ भोज इन्दुमतीं नीत्वा स्वपुरीं जगाम नृपतयोऽपि सासूयाः सन्तः स्वशिबिरं जग्मुः । अथ शुभे मुहूर्ते सुसज्जिते राजमार्गे गच्छन्तं तमजं नाना पौरकामिनीनां तास्ताश्चेष्टा ददर्श । तं राजमार्गे गच्छन्तं विलोकयितुं योषितः सर्वाणि कार्याणि सन्त्यज्य तदवस्था झटिति आलोकपथं प्रापुः । काचित् दासीभिर्बध्यमानमपि केशपाशं मोचयन्ती काचिदलक्तकरञ्जनाव्यग्राऽपि तदागमसम्भ्रमेण परित्यजन्ती काचिन्नेत्राञ्जनं सम्भावयन्त्यपि एकनेत्राञ्जना समवलोकयितुमना धाव

सावधानतया स्वकार्यं चक्रतुः । अथ समवर्ती रघुरजमभिषेच्य कतिचिद्वर्षाणि या-
पयित्वा शरीरं तत्याज । अजः पितुर्मरणमाकर्ण्य भृशं सन्तप्यमानः तस्य पितृ-
कार्यं निर्वर्तयामास । गते कियति काले तस्य दशरथनामा पुत्रो बभूव । कदाचिदजः
प्रियया सहोपवने विजहार, तदैव वायुमार्गेण नारदो गोकर्णगमनं ध्यायन्निव गच्छन् ।
तस्य वीणायां स्थिता मन्दारमाला वायुना प्रेरिता राज्ञः समीपे स्थितायाः इन्दुमत्या
उपरि पपात । अथ विह्वला इन्दुमती तां कथञ्चिद् दृष्ट्वैव प्राणान् जहौ । तदा सा
दं मृतां विह्वलोऽजोऽपि मूर्च्छया पपात । सेवकैरुपचारैः बोध्यमानः स उत्थितः
किन्तु सा तथैव स्थिता । सहसा ईदृशीं व्यवस्थामवलोक्य स धीरोऽपि मुहुर्मुहु-
र्विललाप । तमित्थं दुःखितमाकर्ण्य वसिष्ठः स्वशिष्यं तमाश्वासयितुं प्रजिघाय ।
स उवाच—राजन् ! मे गुरुस्ते तापभरं जानन्नपि यज्ञे दीक्षितत्वात्समाश्वासयितु-
मागतः । स भूतभविष्यद्वर्तमानं च सम्यग्वेत्ति ते यत्किञ्चिदाह तन्निवेदयामि ।
पुरा कश्चित्तृणबिन्दुनामा महर्षिस्तपोऽतपत् । तच्छ्रुत्वा भीत इन्द्रः हरिणीं देवाङ्गनां
तत्तपो नाशयितुं प्रेषयामास । तपसोऽपायेन क्रुद्धो महर्षिः "त्वं मानुषी भवे"ति
शशाप । पुनस्तयाऽनुनीतः "स्वर्गीयकुसुमदर्शनपर्यन्तं मानुषी भूत्वा पुनः स्वा-
वस्थां प्राप्स्यसी"त्युक्तवान् । सा क्रथकैशिकराजपुत्री भूत्वा कथमपि भवन्तं प्राप ।
अथ सुरपुष्पावलोकनेन शापान्मुक्ता दिव्यं धाम गता । तदेतदर्थं भवादृशाः शोचन्ति
पुनः पुनः रोदनेनापि न सा कथञ्चिल्लप्स्यते अतः पतितमेव शोकं परित्य-
ज । तत्सन्देशमाकर्ण्याप्यजस्तं विससर्ज । कतिचिदपि समाः यापयित्वा रोगेण
आक्रान्तः स्वसुतं राज्यासने नियुज्य स्वयमपि सद्गतिं प्राप ।

## नवमः सर्गः ।

अथ महाराजो दशरथः पृथ्वीं शशास कदाचित्तद्राज्ये सम्पूर्णमासमपि रोगेण
न प्रजाः दुर्भिक्षेण वा परं भेजे । सर्वाः प्रकृतयः प्रसन्ना अवर्तन्त । स निज-
तेजसा सर्वानेव नृपतीन् जित्वा पृथ्वीं निजवशगां चकार, सर्वतो नृपतयस्तच्चरणरज-
श्शिरसि धारयामासुः । अथ वसन्तर्तौ लोके पदमासक्तवति तदा दशरथो मृगयां कर्तुं
तदुपयुक्तवेषं धारयन् वनं जगाम तत्र कञ्चिन्मृगयूथमवलोक्य तत्पृष्ठतोऽनुजगाम ।
कस्मिंश्चिन्मृगमेवार्थं पातयितुमुद्युक्तः पतिं परिवार्य स्थितां मृगीमवलोक्य करुणा-
ऽऽक्रान्तमपि बाणं प्रतिसंजहार अन्यत्रापि कस्मिंश्चिन्मृगे बाणं पातयितुमियेष किन्तु
तस्य प्रियासहचरे नेत्रे विलोक्य प्रहर्तुं न शेके । इत्थं राजाऽपि तांस्तान् कस्तूर-

व्युषिताश्वस्य विश्वसहो बभूव तस्य हिरण्यनाभः सञ्जातः हिरण्यनाभस्य कौसल्यः कौसल्यो ब्रह्मिष्ठं सुतमासादयाञ्चकार। ब्रह्मिष्ठस्य पुत्राख्यः पुत्राख्यस्य पुष्यः पुष्यस्य ध्रुवसन्धिः सः सुदर्शनं समुत्पाद्य व्याघ्रेण व्यापादितः। ततोऽमात्याः प्रजाः सुदर्शनमभिषिषिचुः। बालोऽपि सुदर्शनस्तथा पृथ्वीं शशास येन न गुरुत्वं शासने किञ्चिदपेक्षितं जातम्।

## एकोनविंशः सर्गः।

वार्धके वयसि प्राप्ते सुदर्शनोऽग्निवर्णमभिषिच्य नैमिषं गतवान्। अग्निवर्णोऽपि राज्यं प्राप्य किञ्चिद्दिनं यावत्सम्यक् प्रजाः पालयामास। ततः स्त्रीषु समासक्तस्ताभिः सहैवाहर्निशं विहरन् कार्यं समर्पयितुमारेभे। तद्दर्शनाकाङ्क्षिताः प्रकृतयोऽपि यवाक्षविवरार्पितेनैकचरणेनैव पर्यन्तिस। इत्थं ताभिः सह विहारेण क्षीणप्रायो राजयक्ष्मणाऽऽक्रान्तः। "राजा सम्प्रति रहसि पुत्रार्थमिष्टिं करोति" इति कथया प्रकृतीः प्रतारयन्तो बुबुधुः। सतीष्वपि बह्वीषु भार्यासु नैकमपि रघुवंशकुलोद्योतनं सुतमुत्पादयाञ्चकार। अथ व्याधिः प्रबलो भिषग्भिः परिरक्ष्यमाणमपि तं प्राणैर्व्ययुयुजत। वसिष्ठाज्ञया तस्यौर्ध्वदैहिकं कर्म परोपवन एव निरवर्तत। ततः परं रघुवंशस्य बीजभूतं गर्भं दधाना तत्पत्नी राज्यं चकार।

इति श्री साहित्यशास्त्रि पं० रामतेजपाण्डेयेन विरचिता रघुवंशसंक्षिप्तकथा समाप्ता।

---

प्राप्तिस्थानम्—
चौखम्बा संस्कृत पुस्तकालय,
बनारस सिटी।

# —॥ अभिज्ञानशकुन्तल ॥—

## 'रुचिर'—'किशोरकेलि' संस्कृत हिन्दी टीका सहित।

परीक्षार्थियों की सुविधा के लिये कविताकिशोरक—पण्डित—श्रीमत्किशोर शास्त्री काव्यव्याकरणतीर्थ काव्यसाहित्यशास्त्राचार्य—व्याकरणवैशेषिकवेदान्ताचार्योंने वैदर्भिरीति तथा प्रसादगुणरञ्जित 'किशोरकेलि' नामकी संस्कृत टीका तथा 'रुचिरा' नामकी भाषा टीका बनाई है। जितनी टीका टिप्पणी इस ग्रन्थ पर छपी हैं उन सबसे उत्तम परीक्षाके ढङ्ग पर यह टीका बनी है। किशोर ( बालक ) लोगोंका केलि अर्थात् खेल जैसा आनन्द प्रदान करता है। ऐसी ही यह 'किशोरकेलि' टीका किशोर अवस्था वाले छात्रों के लिये अत्यन्त आनन्ददायिनी हुई है। सस्ते संस्करण का मूल्य लागत मात्र १॥)

राजसंस्करण विस्तृत भूमिका महाभारतीय तथा पद्मपुराणोक्त शकुन्तलोपाख्यान, विस्तृत नाटकीय पदार्थ सूची (जो किसी भी संस्करण में नहीं है) सहित का मूल्य १॥।=)

---

प्राप्तिस्थानम्—

**चौखम्बा संस्कृत पुस्तकालय,**

बनारस सिटी।

॥ श्रीगुरुशरणम् ॥

# रघुवंशमहाकाव्यम् ।

## श्रीमल्लिनाथकृतसञ्जीविन्या समेतम् ।

### प्रथमः सर्गः ।

मातापितृभ्यां जगतो नमो वामार्धजानये ।
सद्यो दक्षिणदृक्पातसंकुचद्वामदृष्टये ॥ १ ॥
अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तन्नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥ २ ॥
शरणं करवाणि शर्मदं ते चरणं वाणि चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब कृतार्थसार्थवाहम् ॥ ३ ॥
वाणीं काणभुजीमजीगणदवासासीच्च वैयासिकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाकलयद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥ ४ ॥
मल्लिनाथकविः सोऽयं मन्दात्मानुजिघृक्षया ।
व्याचष्टे कालिदासीयं काव्यत्रयमनाकुलम् ॥ ५ ॥
कालिदासगिरां सारं कालिदासः सरस्वती ।
चतुर्मुखोऽथवा साक्षाद्विदुर्नान्ये तु मादृशाः ॥ ६ ॥
तथापि दक्षिणावर्तनाथाद्यैः क्षुण्णवर्त्मसु ।
वयं च कालिदासोक्तिष्ववकाशं लभेमहि ॥ ७ ॥
भारती कालिदासस्य दुर्व्याख्याविषमूर्छिता ।
एषा संजीवनी टीका तामद्योज्जीवयिष्यति ॥ ८ ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते ॥ ९ ॥

इह खलु सकलकविशिरोमणिः कालिदासः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे' ॥ इत्यालङ्कारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनताम्, 'काव्यालापांश्च वर्जयेत्' इत्यस्य निषेधशास्त्रस्यासत्काव्यविषयतां च पश्यन्, रघुवंशाख्यं महाकाव्यं चिकीर्षुः, चिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनभूतविशिष्टदेवतानमस्कारस्य शिष्टाचारपरिप्राप्तत्वात्, 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात्काव्यनिर्माणस्य विशिष्टशब्दार्थप्रतिपत्तिमूलकत्वेन विशिष्टवागर्थयोः "शब्दजातमशेषं तु धत्ते शर्वस्य वल्लभा । अर्थरूपं यदखिलं धत्ते मुग्धेन्दुशेखरः" इति वायुपुराणसंहितावचनबलेन पार्वतीपरमेश्वरायत्तत्वात्तत्प्रतिपित्सया तावभिवादयते—

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ १ ॥

वागिति । वागर्थाविवेत्येकं पदम् । इवेन सह नित्यसमासो विभक्त्यलोपश्च पूर्वपदप्रकृतिस्वरत्वं चेति वक्तव्यम् । एवमन्यत्रापि द्रष्टव्यम् । वागर्थाविव शब्दार्थाविव सम्पृक्तौ नित्यसम्बद्धावित्यर्थः । नित्यसम्बद्धयोरुपमानत्वेनोपादानात् । 'नित्यः शब्दार्थसम्बन्धः' इति मीमांसकाः । जगतो लोकस्य पितरौ । माता च पिता च पितरौ । 'पिता मात्रा' इति द्वन्द्वैकशेषः । 'मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ' इत्यमरः । एतेन शर्वशिवयोः सर्वजगज्जनकतया वैशिष्ट्यमिष्टार्थप्रदानशक्तिः परमकारुणिकत्वं च सूच्यते । पर्वतस्यापत्यं स्त्री पार्वती । 'तस्यापत्यम्' इत्यण् । 'टिड्ढाणञ्द्वयसज्दघ्नञ्—' इत्यादिना ङीप् । पार्वती च परमेश्वरश्च पार्वतीपरमेश्वरौ । परमशब्दः सर्वोत्तमत्वद्योतनार्थः । मातुरभ्यर्हितत्वादल्पाक्षरत्वाच्च पार्वतीशब्दस्य पूर्वनिपातः । वागर्थप्रतिपत्तये शब्दार्थयोः सम्यग्ज्ञानार्थं वन्देऽभिवादये । अत्रोपमालङ्कारः स्फुट एव । तदुक्तम्—"स्वतःसिद्धेन भिन्नेन सम्पन्नेन च धर्मतः । साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकगोपमा' ॥ इति प्रायिकोपमालङ्कारः कालिदासोक्त्यनुसारी । भूदेवताकस्य सर्वगुरोर्मगणस्य

प्रयोगाच्च कुमारसम्भवे । तदुक्तम्— सुमदो मो भूमिमय इति । मधुर
स्वादुबीजत्वात्प्रबन्धममतासिद्धिः ॥ १ ॥

सम्प्रति कविः स्वाहङ्कारं परिहरति 'क्व सूर्य—' इत्यादिश्लोकद्वयेन—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ २ ॥

क्वेति । प्रभवत्यस्मादिति प्रभवः कारणम् । अकर्तर्यप् "अकर्तरि च कारके संज्ञायाम्" इति साधु । सूर्यः प्रभवो यस्य स सूर्यप्रभवो वंशः क्व । अल्पो विषयो ज्ञेयोऽर्थो यस्याः सा मे मतिः प्रज्ञा च क्व । द्वौ क्वशब्दौ महदन्तरं सूचयतः । सूर्यवंशमाख्यातुं न शक्नोमीत्यर्थः । तथा च तद्विषयप्रबन्धनिर्माणं तु दूरापास्तमिति भावः । तथा हि—दुस्तरं तरितुमशक्यम् 'ईषद्दुःसुषु—' इत्यादिना खल्प्रत्ययः । सागरं मोहादज्ञानादुडुपेन प्लवेन । उडुपं तु प्लवः कोलः इत्यमरः । अथवा चर्मावनद्धेन पात्रेण । 'चर्मावनद्धमुडुपं प्लवः काष्ठं करण्डवत्' इति सज्जनः । तितीर्षुस्तरीतुमिच्छुरस्मि भवामि । तरतेः सन्नन्तादुप्रत्ययः । अल्पसाधनैरधिकारम्भो न सुकर इति भावः । इदं च वंशोत्कर्षकथनं स्वप्रबन्धमहत्त्वार्थमेव । तदुक्तम्— प्रतिपाद्यमहिम्ना च प्रबन्धो हि महत्तरः इति ॥ २ ॥

मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥ ३ ॥

मन्द इति । किं च मन्दो मूढः । मूढाल्पापटुनिर्भाग्या मन्दाः स्युः इत्यमरः । तथापि कवियशःप्रार्थी । कवीनां यशः काव्यनिर्माणेन जातं तत्प्रार्थनाशीलोऽहं प्रांशुनोन्नतपुरुषेण लभ्ये प्राप्ये फले फलविषये लोभादुद्बाहुः फलग्रहणायोच्छ्रितहस्तो वामनः खर्व इव । खर्वो ह्रस्वश्च वामन इत्यमरः । उपहास्यतामुपहासविषयताम् । "ऋहलोर्ण्यत्" इति ण्यत्प्रत्ययः । गमिष्यामि प्राप्स्यामि ॥ ३ ॥

मन्दश्चेत्तर्हि त्यज्यतामयमुद्योग इत्यत आह—

अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥ ४ ॥

अथवेति । अथवा पक्षान्तरे पूर्वैः सूरिभिः कविभिर्वाल्मीकादिभिः कृतवाग्द्वारे कृतं रामायणादिप्रबन्धरूपा या वाक् सैव द्वारं प्रवेशो यस्य तस्मिन् । अस्मिन्सूर्यप्रभवे वंशे कुले । अन्वनेकलक्षणः सन्तानो वंशः । वज्रेण मणिवेधकसूची-

विशेषेण । 'वज्रं त्वस्त्री कुलिशशस्त्रयोः' । 'मणिर्वेधे रत्नभेदे' इति केशवः । समुत्कीर्णे विद्धे मणौ रत्ने सूत्रस्येव मे मम गतिः सञ्चारोऽस्ति । वर्णनीये रघुवंशे मम वाक्प्रसरोऽस्तीत्यर्थः ॥ ४ ॥

एवं रघुवंशे वाक्प्रवेशसामर्थ्यं प्रतिज्ञाय सोऽहम् इत्यादिभि पञ्चभिः श्लोकैः कुलकेनाह—

सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥ ५ ॥

स इति । सोऽहम् 'रघूणामन्वयं वक्ष्ये' इत्युत्तरेण सम्बन्धः । विशेषणानि रघूणामित्यनेनोक्तान्यपि विशेषणानि योज्यानि । आ जन्मनः । जन्मारभ्येत्यर्थः । 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावः । शुद्धानाम् । सुप्सुपेति समासः । एवमुत्तरत्रापि द्रष्टव्यम् । आजन्मशुद्धानाम् । निषेकादिसर्वसंस्कारसम्पन्नानामित्यर्थः । आफलोदयमाफलसिद्धेः कर्म येषां ते तथोक्तास्तेषाम् । प्रारब्धान्तगामिनामित्यर्थः । आसमुद्रं क्षितेरीशानाम्, सार्वभौमानामित्यर्थः । आनाकं रथवर्त्म येषां तेषाम् इन्द्रसहचारिणामित्यर्थः । अत्र सर्वत्राङोऽभिविध्यर्थत्वं द्रष्टव्यम् । अन्यथा मर्यादार्थत्वे जन्मादिषु शुद्ध्यभावप्रसङ्गात् ॥ ५ ॥

यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।
यथाऽपराधदण्डानां यथाकालप्रबोधिनाम् ॥ ६ ॥

यथेति । विधिमनतिक्रम्य यथाविधि । "यथाऽसादृश्ये' इत्यव्ययीभावः । तथा हुतशब्देन सुप्सुपेति समासः । एवं यथाकामार्चित— इत्यादीनामपि द्रष्टव्यम् । यथाविधि हुता अग्नयो यैस्तेषाम् । यथाकाममभिलाषमनतिक्रम्यार्चितार्थिनाम् । यथाऽपराधमपराधमनतिक्रम्य दण्डो येषां तेषाम् । यथाकालं कालमनतिक्रम्य प्रबोधिनां प्रबोधनशीलानाम् । चतुर्भिर्विशेषणैर्देवतायजनयथार्थिसत्कारदण्डधरत्वप्रजापालनसमयजागरूकत्वादीनि विवक्षितानि ॥ ६ ॥

त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥ ७ ॥

त्यागायेति । त्यागाय सत्पात्रे विनियोगस्त्यागस्तस्मै । 'त्यागो विहापितं दानम्' इत्यमरः । सम्भृतार्थानां सञ्चितधनानाम् । न तु दुर्व्ययाय । सत्याय मितभाषिणां मितभाषणशीलानाम् । न तु पराभवाय । यशसे कीर्तये । 'यशः की

र्थिः समता च' इत्यमरः । विजिगीषूणां विजेतुमिच्छूनाम् । न त्वर्थसङ्ग्रहाय । प्रजायै सन्तानाय गृहमेधिनां दारपरिग्रहाणाम् । न तु कामोपभोगाय । अत्र त्यागाय' इत्यादिषु "चतुर्थी तदर्थार्थ—" इत्यादिना तादर्थ्ये चतुर्थीसमासविधानसामर्थ्याच्चतुर्थी । गृहैर्दारैर्मेधन्ते सङ्गच्छन्त इति गृहमेधिनः । दारेष्वपि गृहाः इत्यमरः । 'मात्रा च पृथिवी पद्मम्' इति हलायुधः । 'मेधृ सङ्गमे' इति धातोर्णिनिः । एभिर्विशेषणैः परोपकारित्वं सत्यवचनत्वं यशःपरत्वं पितृणां ऋणत्वं च विवक्षितानि ॥ ७ ॥

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ ८ ॥

शैशव इति । शिशोर्भावः शैशवं बाल्यम् । "प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्"– इत्यञ्प्रत्ययः । 'शिशुत्वं शैशवं बाल्यम्' इत्यमरः । तस्मिन्नभ्यस्तविद्यानाम् । एतेन ब्रह्मचर्याश्रमो विवक्षितः । यूनो भावो यौवनं तारुण्यम् । युवादित्वादण्प्रत्ययः । 'तारुण्यं यौवनं समे' इत्यमरः । तस्मिन्वयसि विषयैषिणां भोगाभिलाषिणाम् । एतेन गृहस्थाश्रमो विवक्षितः । वृद्धस्य भावो वार्धकं वृद्धत्वम् । 'द्वन्द्वमनोज्ञादिभ्यश्च' इति वुञ्प्रत्ययः । 'वार्धकं वृद्धसङ्घाते वृद्धत्वे वृद्धकर्मणि' इति विश्वः । सङ्घातार्थे च 'वृद्धाच्च' इति वक्तव्यात्सामूहिके वुञ् । तस्मिन्वार्धके वयसि मुनीनां वृत्तिरिव वृत्तिर्येषां तेषाम् । एतेन वानप्रस्थाश्रमो विवक्षितः । अन्ते शरीरत्यागकाले योगेन परमात्मध्यानेन । 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । तनुं देहं त्यजन्तीति तनुत्यजस्तेषां देहत्यागिनाम् । 'कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । एतेन भिक्षाश्रमो विवक्षितः ॥ ८ ॥

रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥ ९ ॥

रघूणामिति । सोऽहं कालिदासः तनुवाग्विभवोऽपि स्वल्पवाक्प्रसारोऽपि सन् । तेषां रघूणां गुणैस्तद्गुणैः आजन्मशुद्धत्वादिभिः कर्णमागत्य कर्णं मम श्रोत्रमागत्य चापलाय चापलं चपलकर्माविमृश्यकारित्वरूपं कर्तुम् । युवादित्वादण्प्रत्ययः । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इत्यनेन चतुर्थी । प्रचोदितः प्रेरितः सन् । रघूणामन्वयं तद्विषयप्रबन्धं वक्ष्ये ॥ ९ ॥ युग्मकम् ।

सम्प्रति स्वप्रबन्धपरीक्षार्थं सतः प्रार्थयते—

तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा ॥ १० ॥

तमिति । तं रघुवंशाख्यं प्रबन्धं सदसतोर्गुणदोषयोर्व्यक्तेर्हेतवः कर्तारः सन्तः श्रोतुमर्हन्ति । तथा हि—हेम्नो विशुद्धिर्निर्दोषस्वरूपं श्यामिकाऽपि लोहान्तरसंसर्गात्मको दोषोऽपि वाऽग्नौ संलक्ष्यते नान्यत्र । तद्वदत्रापि सन्त एव गुणदोषविवेकाधिकारिणः । नान्य इति भावः ॥ १० ॥

वर्ण्यं वस्तूपक्षिपति—

वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।
आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥ ११ ॥

वैवस्वत इति । मनस ईषिणो मनीषिणो धीराः । विद्वांस इति यावत् । पृषोदरादित्वात्साधुः । तेषां माननीयः पूज्यः । छन्दसां वेदानाम् । "छन्दः पद्ये च वेदे च" इति विश्वः । प्रणव ओंकार इव । महीं क्षियन्तीशत इति महीक्षितः क्षितीश्वराः । क्षियतेरैश्वर्यार्थात्क्विप् तुगागमश्च । तेषामाद्य आदिभूतः । विवस्वतः सूर्यस्यापत्यं पुमान्वैवस्वतो नाम वैवस्वत इति प्रसिद्धो मनुरासीत् ॥ ११ ॥

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥ १२ ॥

तदिति । शुद्धिरस्यास्तीति शुद्धिमान् । तस्मिञ्शुद्धिमति तदन्वये तस्य मनोरन्वये वंशे । "अन्ववायोऽन्वयो वंशो गोत्रं चाभिजनं कुलम्" इति हलायुधः । अतिशयेन शुद्धिमाञ्शुद्धिमत्तरः । "द्विवचनविभज्योप" इत्यादिना तरप् । दिलीप इति प्रसिद्धो राजा इन्दुरिव राजेन्दू राजश्रेष्ठः । उपमितं व्याघ्रादिभिः इत्यादिना समासः । क्षीरनिधाविन्दुरिव प्रसूतो जातः ॥ १२ ॥

व्यूढ— इत्यादिभिः षड्भिर्दिलीपं विशिनष्टि—

व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः ।
आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥ १३ ॥

व्यूढेति । व्यूढं विपुलमुरो यस्य स व्यूढोरस्कः । "उरःप्रभृतिभ्यः कप्" इति कप्प्रत्ययः । "व्यूढं विपुलं भद्रं स्फारं समं वरिष्ठं च" इति यादवः । वृषस्य स्कन्ध इव स्कन्धो यस्य स तथा । "सप्तम्युपमान—" इत्यादिनोत्तरपदलोपी बहु

अनाकृष्टस्येति । विषयैः शब्दादिभिः । 'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी' इत्यमरः । अनाकृष्टस्य वशीकृतस्य विद्यानां वेदवेदाङ्गादीनां पारदृश्वनः पारमन्तं दृष्टवतः । दृशेः क्वनिप् । धर्मे रतिर्यस्य तस्य राज्ञो जरसा जरया विना । 'विस्रसा जरा' इत्यमरः । 'षिद्भिदादिभ्योऽङ्' इत्यङ्प्रत्ययः । 'जराया जरसन्यतरस्याम्' इति जरसादेशः । वृद्धत्वं वार्धकमासीत् । तस्य यूनो विषयवैराग्यविज्ञानगुणसम्पत्त्या ज्ञानतो वृद्धत्वमासीदित्यर्थः । वयस्तु चतुर्विधं वृद्धत्वमिति ज्ञात्वा अनाकृष्टस्य इत्यादिना विशेषणत्रयेण वैराग्यज्ञानशीलवृद्धत्वान्युक्तानीति बोध्यम् ॥२३॥

प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥२४॥

प्रजानामिति । प्रजायन्त इति प्रजा जनाः । 'उपसर्गे च संज्ञायाम्' इति डप्रत्ययः । 'प्रजा स्यात्सन्ततौ जने' इत्यमरः । तासां विनयस्य शिक्षाया आधानात् करणात् । सन्मार्गप्रवर्तनादिति यावत् । रक्षणात् भयहेतुभ्यस्त्राणात् । आपन्निवारणादिति यावत् । भरणादन्नपानादिभिः पोषणादपि । अपिः समुच्चये । स राजा पिताऽभूत् । तासां पितरस्तु जन्महेतवो जन्ममात्रकर्तारः । केवलमुत्पादका एवाभूवन् । जननमात्र एव पितॄणां व्यापारः । सदा शिक्षारक्षणादिकं तु स एव करोतीति तस्मिन्पितृत्वव्यपदेशः । आहुश्च— 'स पिता यस्तु पोषकः' इति ॥२४॥

स्थित्यै दण्डयतो दण्ड्यान्परिणेतुः प्रसूतये ।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥२५॥

स्थित्या इति । दण्डमर्हन्तीति दण्ड्याः । 'दण्डादिभ्यो यः' इति यप्रत्ययः । 'अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैव गच्छति ॥' इति शास्त्रवचनात् । तान्दण्ड्यानेव स्थित्यै लोकप्रतिष्ठायै दण्डयतः शिक्षयतः । प्रसूतये सन्तानायैव परिणेतुर्दारान्परिगृह्णतः । मनीषिणो विदुषः । दोषज्ञस्येति यावत् । 'विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः । धीरो मनीषी' इत्यमरः । तस्य दिलीपस्यार्थकामावपि धर्म एवास्तां जातौ । अस्तेर्लङ् । अर्थकामसाधनयोर्दण्डविवाहयोर्लोकस्थापनप्रजोत्पादनरूपधर्मार्थत्वेनानुष्ठानादर्थकामावपि धर्मशेषतामापादयन्स राजा धर्मोत्तरोऽभूदित्यर्थः । आह च गौतमः— 'न पूर्वाह्णमध्यन्दिनापराह्णानफलान्कुर्याद्यथाशक्ति धर्मार्थकामेभ्यस्तेषु धर्मोत्तरः स्यात्' ॥ इति ॥२५॥

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥ २६ ॥

दुदोहेति । स राजा यज्ञाय यज्ञं कर्तुं गां भुवं दुदोह । करग्रहणेन रिक्तां चकारेत्यर्थः । मघवा देवेन्द्रः सस्याय सस्यं वर्धयितुं दिवं स्वर्गं दुदोह । द्युलोकान्महीलोके वृष्टिमुत्पादयामासेत्यर्थः । क्रियार्थोपपदस्य—" इत्यादिना यज्ञसस्याभ्यां चतुर्थी । एवमुभौ सम्पदो विनिमयेन परस्परमादानप्रतिदानाभ्यां भुवनद्वयं दधतुः पुपुषतुः । राजा यज्ञैरिन्द्रलोकमिन्द्रश्च वर्षणेन भूलोकं पुपोषेत्यर्थः । उक्तं च दण्डनीतौ— राजा त्वर्थान्समाहृत्य कुर्यादिन्द्रमहोत्सवम् । प्रीणितो मेघवाहस्तु महतीं वृष्टिमावहेत् ॥ इति ॥ २६ ॥

न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥ २७ ॥

नेति । राजानोऽन्ये यथा रक्षितुर्यशो नानुययुस्तस्य राज्ञो यशो नानुययुः किल नानुचक्रुः खलु । कुतः । यद्यस्मात्तस्करता चौर्यं परस्वेभ्यः परधनेभ्यः व्यावृत्ता सती श्रुतौ वाचकशब्दे स्थिता प्रवृत्ता अर्थान्तराभावात्तस्करशब्द एवास्तीत्यर्थः । अथवा । अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि इति न्यायेन शब्दे स्थिता स्फुरिता न तु तस्करोऽस्तीत्यर्थः ॥ २७ ॥

द्वेष्योऽपि सम्मतः शिष्टस्तस्यार्तस्य यथौषधम् ।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥ २८ ॥

द्वेष्य इति । शिष्टो जनो द्वेष्यः शत्रुरपि । आर्तस्य रोगिण औषधं यथैव इव । तस्य सम्मतोऽनुमत आसीत् । दुष्टो जनः प्रियोऽपि प्रेमास्पदीभूतोऽपि उरगक्षता सर्पदष्टाङ्गुलीव । त्यजेत् बाहुमपि दुष्टमात्मनः इति न्यायात् त्याज्य आसीत् । तस्य शिष्ट एव बन्धुर्दुष्ट एव शत्रुरित्यर्थः ॥ २८ ॥

तस्य परोपकारित्वमाह—

तं वेधा विदधे नूनं महाभूतसमाधिना ।
तथा हि सर्वे तस्यासन्परार्थैकफला गुणाः ॥ २९ ॥

तमिति । वेधाः स्रष्टा । स्रष्टा प्रजापतिर्वेधाः इत्यमरः । तं दिलीपम् । समाधीयतेऽनेनेति समाधिः कारणसामग्री । महाभूतानां समाधिस्तेन महाभूतसमाधिना विदधे ससर्ज । नूनं ध्रुवम् । इत्युत्प्रेक्षा । तथा हि—तस्य राज्ञः सर्वे गुणा

आत्मजन्मा पुत्रः । तस्मिन्समुत्सुकः । यद्वा—आत्मनो जन्मनि पुत्ररूपेणोत्पत्तौ समुत्सुकः सन् । 'आत्मा वै पुत्रनामासि' इति श्रुतेः । विलम्बितं फलं पुत्रप्राप्तिरूपं येषां तैर्मनोरथैः कदा मे पुत्रो भवेदित्यादिभिः कालं निनाय यापयामास ॥ ३३ ॥

सन्तानार्थाय विधये स्वभुजादवतारिता ।
तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥ ३४ ॥

सन्तानेति । तेन दिलीपेन । सन्तानोऽर्थः प्रयोजनं यस्य तस्मै सन्तानार्थाय विधयेऽनुष्ठानाय । स्वभुजादवतारितावरोपिता जगतो लोकस्य गुर्वी धूर्भारः सचिवेषु निचिक्षिपे निहिता ॥ ३४ ॥

अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।
तौ दम्पती वसिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥ ३५ ॥

अथेति । अथ धुरोऽवतारणानन्तरं पुत्रकाम्यया आत्मनः पुत्रेच्छया । 'सुप आत्मनः क्यच्' इति पुत्रशब्दात्क्यच्प्रत्ययः । 'अप्रत्ययात्' इति पुत्रकाम्यतेरप्रत्ययः । ततष्टाप् । तौ दम्पती जायापती । राजदन्तादिषु जायाशब्दस्य दमिति निपातनात्साधुः । प्रयतौ शुचौ विधातारं ब्रह्माणमभ्यर्च्य 'स एव पुत्रार्थिभिरुपास्यते' इति मान्त्रिकाः । गुरोः कुलगुरोर्वसिष्ठस्याश्रमं जग्मतुः । पुत्रप्राप्त्युपायापेक्षयेति शेषः ॥ ३५ ॥

स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ ।
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥ ३६ ॥

स्निग्धेति । स्निग्धो मधुरो गम्भीरो निर्घोषो यस्य तमेकं स्यन्दनं रथम् । प्रावृषि भवः प्रावृषेण्यः । 'प्रावृष एण्यः' इत्येण्यप्रत्ययः । तं प्रावृषेण्यं पयोवाहं मेघं विद्युदैरावताविव । आस्थितावारूढौ । जग्मतुरिति पूर्वेण सम्बन्धः । इरा आपः । 'इरा भूवाक्सुराप्सु स्यात्' इत्यमरः । इरावान्समुद्रः । तत्र भव ऐरावतो-ऽभ्रमातङ्गः । 'ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः' इत्यमरः । अभ्रमातङ्गस्य स्वाभाव्यरूपत्वात् इति क्षीरस्वामी । अत एव मेघारोहणं विद्युदारोहणं च घटते । किं च विद्युत ऐरावतशब्दवाच्यत्वादैरावती संज्ञा । ऐरावतस्य स्त्री ऐरावतीति क्षीरस्वामी । तस्मात्सुष्ठूक्तं विद्युदैरावताविवेति । एवं रथारोहणोपमया कार्यसिद्धि-बीजं दम्पत्योरसम्भ्रान्तमनस्त्वं सूचयति ॥ ३६ ॥

गगनस्पर्शमनाम्भोजपत्रमालि इति हलायुधः । मेघश्यामयोर्गजयोरिवेत्यर्थः । धुरन्ध धुरन्ध धुरा । युगमभिनयान् इत्येव्वेषः । तैरा द्वन्द्वेषु मिथुनेषु । स्त्रीपुंसौ मिथुनं द्वन्द्वम्' इत्यमरः । परस्पराभ्यां सादृश्यं पश्यन्तौ । द्वन्द्वपरस्परमन्योन्ययोः पुरुषिभक्षिसादृश्यं विजातिसादृश्यं च मृगेषु द्वन्द्वमिथ्यैव विशेष्यम् ॥४०॥

श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजम् ।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥ ४१ ॥

श्रेणीबन्धादिति । श्रेणीबन्धात्पङ्क्तिबन्धनाद्धेतोरस्तम्भामाधारस्तम्भरहिताम् । तोरणं बहिर्द्वारम् । 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः । तत्र या स्रक्तां तोरणस्रजं वितन्वद्भिः कुर्वद्भिरित्यर्थः । अस्तम्भां तोरणस्रजमित्यनेनोपमानेऽपि गम्योत्प्रेक्षेयम् । कलनिर्ह्रादैरव्यक्तमधुरध्वनिभिः सारसैः पक्षिविशेषैः करणैः । क्वचिदुन्नमिताननौ । 'सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः' इति यादवः ॥४१॥

पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः ।
रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥ ४२ ॥

पवनस्येति । प्रार्थनासिद्धिशंसिनोऽनुकूलत्वेन मनोरथसिद्धिसूचकस्य पवनस्यानुकूलत्वात् गन्तव्यदिशमभिमुखत्वात् । तुरगोत्कीर्णै रजोभिरस्पृष्टा अलकाः केश्याः वेष्टनमुष्णीषं च ययोस्तौ तथोक्तौ । 'शिरसा वेष्टनशोभिना सुतः' इति वक्ष्यति ॥ ४२ ॥

सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् ।
आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥ ४३ ॥

सरसीष्विति । सरसीषु वीचिविक्षोभशीतलमभिधट्टनेन शीतलं स्वनिःश्वासमनुकर्तुं शीलमस्येति स्वनिःश्वासानुकारिणम् । एतेन तयोरुत्कृष्टपुंस्त्वजाति गम्यते । अरविन्दानामामोदमुपजिघ्रन्तौ घ्राणेन गृह्णन्तौ ॥ ४३ ॥

ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम् ।
अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥ ४४ ॥

ग्रामेष्विति । आत्मविसृष्टेषु दत्तेषु । यूपो नाम संस्कृतः पशुबन्धाय दारुविशेषः । यूपा एव चिह्नानि येषां तेषु ग्रामेष्वमोघाः सफला यज्वनां विधिनेष्टवताम् । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । सुयजोर्ङ्वनिप्' इति ङ्वनिप्प्रत्ययः । आशीर्वादान् । अर्घः पूजाविधिः । तदर्थं द्रव्यमर्घ्यम् । "पादार्घाभ्यां

च इति यत्प्रत्ययः । 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' इत्यमरः । अर्घ्यस्यानुपदमन्वक् । अर्घ्यस्वीकारानन्तरमित्यर्थः । प्रतिगृह्णन्तौ स्वीकुर्वन्तौ । पदस्य पश्चादनुपदम् । पश्चादर्थेऽव्ययीभावः । 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबम व्ययम्' इत्यमरः ॥ ४४ ॥

हैयंगवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥ ४५ ॥

हैयंगवीनमिति । ह्यस्तनगोदोहोद्भवं घृतं हैयंगवीनम् । 'तत्तु हैयंगवीनं यद्ध्योगोदोहोद्भवं घृतम्' इत्यमरः । "हैयंगवीनं संज्ञायाम्" इति निपातः । तदादायोपस्थितान्घोषवृद्धान् । 'घोष आभीरपल्ली स्यात्' इत्यमरः । वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ । "दुहाच्—" इत्यादिना पृच्छतेर्द्वि-कर्मकत्वम् । कुलकम् ॥ ४५ ॥

काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेषयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ ४६ ॥

कापीति । व्रजतोर्गच्छतोः शुद्धवेषयोरुज्ज्वलनेपथ्ययोस्तयोः सुदक्षिणादिलीपयोः । हिमनिर्मुक्तयोश्चित्राचन्द्रमसोरिव योगे सति काऽप्यनिर्वाच्याऽभिख्या शोभा ऽऽसीत् । अभिख्या नामशोभयोः' इत्यमरः । "आतश्चोपसर्गे" इत्यङ्प्रत्ययः । चित्रा नक्षत्रविशेषः । शिशिरापगमे चैत्र्यां चित्रापूर्णचन्द्रमसोरित्यर्थः ॥ ४६ ॥

तत्तद्भूमिपतिः पत्न्यै दर्शयन्प्रियदर्शनः ।
अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ॥ ४७ ॥

तत्तदिति । प्रियं दर्शनं स्वरूपं यस्यासौ प्रियदर्शनः सौम्यदर्शन इत्यर्थः । भूमिपतिः पत्न्यै तत्तदद्भुतं वस्तु दर्शयँल्लङ्घितमतिवाहितमप्यध्वानं न बुबुधे न ज्ञातवान् । बुधः सौम्य उपमोपमानं यस्येति विग्रहः । इदं विशेषणं तत्त-द्दर्शनाभिज्ञत्वोपयोगितयैवास्य ज्ञातृत्वसूचनार्थम् ॥ ४७ ॥

स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥ ४८ ॥

स इति । दुष्प्रापयशा दुष्प्रापमन्यदुर्लभं यशो यस्य स तथोक्तः । श्रान्त-वाहनो दूरोपगमनात्क्लान्तयुग्यः । महिष्याः सखा महिषीसखः । 'राजाहःसखि-भ्यष्टच्' इति टच्प्रत्ययः । सहायान्तरनिरपेक्ष इति भावः । स राजा सायं सायं

काले संयमिनो नियमवतस्तस्य महर्षेर्वसिष्ठस्याश्रमं प्रापतुः प्रापतुः । पुष्पभिरत्यादयः ॥४८॥

तमाश्रमं विशिनष्टि—

वनान्तरादुपावृत्तैः समित्कुशफलाहरैः ।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥ ४९ ॥

वनान्तरादिति । वनान्तरादन्यस्माद्वनादुपावृत्तैः प्रत्यावृत्तैः । समिधश्च कुशाश्च फलानि चाहर्तुं शीलं येषामिति समित्कुशफलाहरास्तैः "आङि ताच्छील्ये" इति हरतेरच्प्रत्ययः । अदृश्यैर्दृश्यमानैरग्निभिर्वैतानिकैः प्रत्युद्याताः प्रत्युद्गतास्तैस्तपस्विभिः पूर्यमाणम् । "प्रोष्यागच्छन्तमाहिताग्निमग्नयः प्रत्युत्तिष्ठन्ति" इति श्रुतेः । यथाह— "यथा पितरं प्रोषितवन्तं पुत्राः प्रत्याधावन्ति । एवमेतमग्नयः प्रत्याधावन्ति सशकलानस्याभिहरन्" इति ॥ ४९ ॥

आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः ।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः ॥ ५० ॥

आकीर्णमिति । नीवाराणां भाग एव भागधेयोंऽशः । "भागरूपनामभ्यो धेयः" इति वचनात्स्वार्थे धेयप्रत्ययः । तस्योचितैः । अत एवोटजानां पर्णशालानां द्वाररोधिभिर्द्वाररोधकैर्मृगैः ऋषिपत्नीनामपत्यैरिव आकीर्णं व्याप्तम् ॥ ५० ॥

सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम् ॥ ५१ ॥

सेकान्त इति । सेकान्ते वृक्षमूलसेचनावसाने मुनिकन्याभिः सेक्त्रीभिः । आलवालेषु जलाधारप्रदेशेषु यदम्बु तत्पायिनाम् । "स्यादालवालमावालमावापः" इत्यमरः । विहङ्गानां पक्षिणां विश्वासाय विश्रम्भाय "समौ विश्रम्भविश्वासौ" इत्यमरः । तत्क्षणे सेकक्षण उज्झितास्त्यक्ता वृक्षका ह्रस्ववृक्षा यस्मिंस्तम् । ह्रस्वार्थे कप्रत्ययः ॥ ५१ ॥

आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।
मृगैर्वर्तितरोमन्थमुटजाङ्गनभूमिषु ॥ ५२ ॥

आतपेति । आतपस्यात्ययेऽपगमे सति संक्षिप्ता राशीकृता नीवारास्तृणधान्यानि यासु तासु । "नीवारास्तृणधान्यानि" इत्यमरः । उटजानां पर्णशालानामङ्गनभूमिषु चत्वरप्रदेशेषु । "पर्णशालोटजोऽस्त्रियाम्" इति "अङ्गनं चत्वराजिरे" इति चामरः । निषादिभिरुपविष्टैर्मृगैर्वर्तितो निष्पादितो रोमन्थश्चर्वितचर्वणं यस्मिंस्तदाश्रमे तम् ॥ ५२ ॥

अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।
पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥ ५३ ॥

अभ्युत्थितेति । अभ्युत्थिताः प्रज्वलिता होमयोग्या इत्यर्थः । "समिधेऽग्नावाहुतीर्जुहोति" इति वचनात् । तेषामग्नीनां पिशुनैः सूचकैः पवनोद्धूतैः । आहुतिगन्धो येषामस्तीत्याहुतिगन्धिनः तैर्धूमैराश्रमोन्मुखानतिथीन्पुनानं पवित्रीकुर्वाणम् । कुलकम् ॥ ५३ ॥

अथ यन्तारमादिश्य धुर्यान्विश्रामयेति सः ।
तामवारोहयत्पत्नीं रथादवततार च ॥ ५४ ॥

अथेति । अथाश्रमप्राप्त्यनन्तरं स राजा यन्तारं सारथिम् । धुरं वहन्तीति धुर्या अश्वाः । "धुरो यड्ढकौ" इति यत्प्रत्ययः । "धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः" इत्यमरः । धुर्यान्विश्रामयेत्यादिश्याज्ञाप्य तां पत्नीं रथादवारोहयदवतारितवान्स्वयं चावततार । विश्रमय इति ह्रस्वपाठे "जनी जृष्—" इति मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वः । दीर्घपाठे "मितां ह्रस्वः" इति सूत्रे 'वा चित्तविरागे' इत्यतो 'वा' इत्यनुवृत्तेर्व्यवस्थितविभाषाऽऽश्रयणाद् ह्रस्वाभाव इति वृत्तिकारः ॥ ५४ ॥

तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः ।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥ ५५ ॥

तस्मा इति । सभायां साधवः सभ्याः । "सभाया यः" इति यप्रत्ययः । गुप्ततमेन्द्रिया अत्यन्तनियमितेन्द्रिया मुनयः सभार्याय गोप्त्रे रक्षकाय । नय एव चक्षुस्तत्त्वावेदकं प्रमाणं यस्य तस्मै नयचक्षुषे । अत एवार्हते प्रशस्ताय पूज्यायेत्यर्थः । "अर्हः प्रशंसायाम्" इति शतृप्रत्ययः । तस्मै राज्ञेऽर्हणां पूजां चक्रुः । "पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः" इत्यमरः ॥ ५५ ॥

विधेः सायंतनस्यान्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥ ५६ ॥

विधेरिति । स राजा सायंतनस्य सायंभवस्य । 'सायंचिरम्—' इत्यादिना ट्युप्रत्ययः । विधेर्जपहोमाद्यनुष्ठानस्यान्तेऽवसानेऽरुन्धत्यान्वासितं पश्चादुपवेशनेनोपसेवितम् । कर्मणि क्तः । उपसर्गवशात्सकर्मकत्वम् । 'अन्वास्यैनाम्' इत्यादिवदुपपत्तिः । तपोनिधिं वसिष्ठम् । स्वाहया स्वाहादेव्या । अन्वासितो स्वा-

दा च हुतभुक्शिखा' इत्यमरः । अन्वासितं हविर्भुजमिव ददर्श । समित्पुष्पकुशाम्ब्वम्बुमृदन्नाक्षतपाणिकः । जपं होमं च कुर्वाणो नाभिवाद्यो द्विजो भवेत्' ॥ इत्यनुष्ठानस्य मध्येऽभिवादननिषेधाद्विधेरन्ते ददर्शेत्युक्तम् । अन्वासनं चात्र पतिव्रताधर्मत्वेनोक्तं न तु कर्माङ्गत्वेन । विधेरन्ते इति कर्मणः समाप्त्यभिधानात् ॥ ५६ ॥

तयोर्जगृहतुः पादान्राजा राज्ञी च मागधी ।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥ ५७ ॥

तयोरिति । मागधी मगधराजपुत्री राज्ञी सुदक्षिणा राजा च तयोररुन्धतीवसिष्ठयोः पादाञ्जगृहतुः । 'पादाः पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । पादग्रहणमभिवादनम् । गुरुपत्नी गुरुश्च अरुन्धती सा च स च तौ सुदक्षिणादिलीपौ कर्मभूतौ । प्रीत्या हर्षेण प्रतिननन्दतुः । आशीर्वादादिभिः सम्भावयामासतुरित्यर्थः ॥ ५७ ॥

तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।
पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥ ५८ ॥

तमिति । मुनिः । अतिथ्यमातिथ्यम् । 'अतिथेर्ञ्यः' इति ञ्यप्रत्ययः । आतिथ्यस्य क्रिया तया शान्तो रथक्षोभेण यः परिश्रमः स यस्य स तं तथोक्तम् । राज्यमेवाश्रमस्तत्र मुनिं मुनितुल्यमित्यर्थः । तं दिलीपं राज्ये कुशलं पप्रच्छ पृच्छतेस्तु द्विकर्मकत्वमित्युक्तम् । यद्यपि राज्यशब्दः पुरोहितपरिच्छन्नतयात्राज्ञ कर्मवचनः तथाऽप्यत्र सप्ताङ्गवचनः । 'सप्ताङ्गं मनु स्थितं सप्तस्वङ्गेषु' इत्युक्तविरोधात् । तथाह मनुः— 'स्वाम्यमात्यपुरं राष्ट्रं कोशदण्डौ तथा सुहृत् । सप्तैतानि समस्तानि लोकेऽस्मिन्राज्यमुच्यते' ॥ इति । तत्र 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च' ॥ इति मनुवचने सत्यपि तस्य राज्ञो महानुभावत्वात् ब्राह्मणोचितः कुशलप्रश्न एव कृत इत्यनुसन्धेयम् । अत एवोक्तम् 'राज्याश्रममुनिम्' इति ॥ ५८ ॥

अथाथर्वनिधेस्तस्य विजितारिपुरःसरः ।
अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥ ५९ ॥

अथेति । अथ प्रश्नानन्तरं विजितारिपुरो विजितशत्रुनगरो वदतां वक्तॄणां वरः श्रेष्ठः 'यतश्च निर्धारणम्' इति षष्ठी । अर्थपती राजाऽथर्वणोऽथर्ववेदस्य निधेस्तस्य मुनेः पुरोऽग्रेऽर्थ्यामर्थादनपेताम् । "धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः । वाचमाददे, वक्तुमुपक्रान्तवानित्यर्थः । अथर्वनिधेरित्यनेन पुरो

हितस्वामित्वात्सर्वकर्मनिर्वाहकत्वं मुनेरस्तीति सूच्यते । यथाह कामन्दकः— त्रय्यां च दण्डनीत्यां च कुशलः स्यात्पुरोहितः । अथर्वविहितं कुर्यान्नित्यं शान्तिकपौष्टिकम् ॥ इति ॥ ५९ ॥

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥ ६० ॥

उपपन्नमिति । हे गुरो ! सप्तस्वङ्गेषु स्वाम्यमात्यादिषु । स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि इत्यमरः । शिवं कुशलमुपपन्नं ननु युक्तमेव । ननु चावधारणे । प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु इत्यमरः । कथमित्यत आह— यस्य मे दैवीनां देवेभ्य आगतानां दुर्भिक्षादीनाम् मानुषीणां मनुष्येभ्य आगतानां चोरभयादीनाम्। उभयत्रापि तत आगतः" इत्यण् । "टिड्ढाणञ्—" इत्यादिना ङीप् । आपदां व्यसनानां त्वं प्रतिहर्ता वारयितासि । अत्राह कामन्दकः— हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा । इति पञ्चविधं दैवं मानुषं व्यसनं ततः । आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम् ॥ इति ॥ ६० ॥

तत्र मानुषापत्प्रतीकारमाह—

तव मन्त्रकृतो मन्त्रैर्दूरात्संशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥ ६१ ॥

तवेति । दूरात्परोक्ष एव संशमितारिभिः । मन्त्रान्करोतीति मन्त्रकृत् । सुकर्मपापमन्त्रपुण्येषु कृञः इति क्विप् । तस्य मन्त्रकृतो मन्त्राणां स्रष्टुः प्रयोक्तुर्वा तव मन्त्रैः कर्तृभिः दृष्टं प्रत्यक्षं लक्ष्यं तन्मात्रं भिन्दन्तीति दृष्टलक्ष्यभिदो मे शराः प्रत्यादिश्यन्त इव । वयमेव समर्थाः । किमेभिः सेवकैरिति निराक्रियन्त इवेत्युत्प्रेक्षा । प्रत्यादेशो निराकृतिः इत्यमरः । त्वन्मन्त्रसामर्थ्यादेव मे पौरुषं फलतीति भावः ॥ ६१ ॥

सम्प्रति दैव्यापत्प्रतीकारमाह—

हविरावर्जितं होतस्त्वया विधिवदग्निषु ।
वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम् ॥ ६२ ॥

हविरिति । हे होतः ! त्वया विधिवदग्निष्वावर्जितं प्रक्षिप्तं हविराज्यादिकं कर्तृ अवग्रहो वर्षप्रतिबन्धः । अवे ग्रहो वर्षप्रतिबन्धे इत्यप्प्रत्ययः । "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः । तेन विशोषिणां विशुष्यतां सस्यानां वृष्टि-

भवति । वृष्टिरूपेण सस्यान्युपजीवयतीति भावः ॥ अत्र मनुः— 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' इति ॥ ६२ ॥

पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ ६३ ॥

पुरुषायुषेति । आयुर्जीवितकालः । पुरुषस्यायुः पुरुषायुषम् । वर्षशतमित्यर्थः । "शतायुर्वै पुरुषः" इति श्रुतेः । "अचतुरविचतुरसुचतुर—" इत्यादिसूत्रेणाजन्तत्वान्तो निपातः । मदीयाः प्रजाः पुरुषायुषं जीवन्तीति पुरुषायुषजीविन्यः । निरातङ्का निर्भयाः । 'आतङ्को भयमाशङ्का' इति हलायुधः । निरीतयोऽतिवृष्ट्यादिरहिता इति यत्तस्य सर्वस्य त्वद्ब्रह्मवर्चसं तव अध्ययनसम्पत्तिरेव हेतुः । 'अध्ययनसम्पत्तिरित्येतद्ब्रह्मवर्चसम्' इति हलायुधः । ब्रह्मणो वर्चो ब्रह्मवर्चसम् । 'ब्रह्महस्तिभ्यां वर्चसः' इत्यच्प्रत्ययः । "अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः । प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥" इति कामन्दकः ॥ ६३ ॥

त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
सानुबन्धाः कथं न स्युः संपदो मे निरापदः ॥ ६४ ॥

त्वयैवमिति । ब्रह्म योनिः कारणं यस्य तेन ब्रह्मपुत्रेण गुरुणा त्वयैवमुक्तप्रकारेण चिन्त्यमानस्यानुध्यायमानस्य । अत एव निरापदो व्यसनहीनस्य मे सम्पदः सानुबन्धा अविच्छिन्ना इति यावत् । कथं न च स्युः स्युरेवेत्यर्थः ॥ ६४ ॥

सम्प्रत्यागमनप्रयोजनमाह—

किन्तु वध्वां तवैतस्यामदृष्टसदृशप्रजम् ।
न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ६५ ॥

किन्त्विति । किन्तु तवैतस्यां वध्वां स्नुषायाम् । 'वधूर्जाया स्नुषा स्त्री चेत्यमरः । अदृष्टा सदृशरूपा प्रजा येन तं मां सद्वीपाऽपि । रत्नानि सूत इति रत्नसूरपि । "सत्सूद्विष—" इत्यादिना क्विप् । मेदिनी नावति न प्रीणयति । अवधातू रक्षणगतिप्रीत्याद्यर्थेषूपदेशादत्र प्रीणने । रत्नसूरपीत्यनेन सर्वरत्नेभ्यः पुत्ररत्नमेव श्लाघ्यमिति सूचितम् ॥ ६५ ॥

तदेव प्रतिपादयति—

नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।
न प्रकाममुजः श्राद्धे स्वधासंग्रहतत्पराः ॥ ६६ ॥

तया हीनं विधातर्मां कथं पश्यन्न दूयसे।
सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम् ॥ ७० ॥

तयेति। हे विधातः! अतः तया सन्तत्या हीनमनपत्यं माम्। स्नेहात्प्रेम्णा स्वयमेव सिक्तं जलसेकेन वर्धितं वन्ध्यमफलम् 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः। आश्रमस्य वृक्षकं वृक्षपोतमिव। पश्यन्कथं न दूयसे न परितप्यसे। विधातरित्यनेन समर्थोऽप्युपेक्षस इति गम्यते ॥ ७० ॥

असह्यपीडं भगवन्नृणमन्त्यमवेहि मे।
अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः ॥ ७१ ॥

असह्यपीडमिति। हे भगवन्! मे ममान्त्यमृणं पैतृकमृणम्। अनिर्वाणस्य अमज्जनशीलस्य। 'निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने' इति यादवः। दन्तिनो गजस्य। अरुर्मर्म तुदतीत्यरुन्तुदं मर्मस्पृक् 'व्रणोऽस्त्रियामीर्ममरुः' इति अरुन्तुदं तु मर्मस्पृक् इति चामरः। 'विध्वरुषोस्तुदः' इति खश्प्रत्ययः। 'अरुर्द्विषद्–' इत्यादिना मुमागमः। आलानं बन्धनस्तम्भमिव। 'आलानं बन्धस्तम्भे' इत्यमरः। असह्या सोढुमशक्या पीडा दुःखं यस्मिंस्तदवेहि। दुःखहेतु जानक विद्धीत्यर्थः। 'निर्वाणमित्यालानभयनानि त्रीणि गजकर्माणि' इति पालकाप्ये। 'ऋणं देवस्य यागेन ऋषीणां दानकर्मणा। सन्तत्या पितृलोकानां शोधयित्वा परिव्रजेत्' ॥ ७१ ॥

तस्मान्मुच्ये यथा तात संविधातुं तथार्हसि।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥ ७२ ॥

तस्मादिति। हे तात! तस्मात्पैतृकादृणाद्यथा मुच्ये मुक्तो भवामि। कर्मणि लट्। तथा संविधातुं कर्तुमर्हसि। हि यस्मात्कारणादिक्ष्वाकूणामिक्ष्वाकुवंश्यानाम्। तद्राजत्वाद्बहुष्वणो लुक्। दुरापे दुष्प्रापेऽर्थे सिद्धयस्त्वदधीनास्त्वदायत्ताः। इक्ष्वाकूणामिति कर्तरि षष्ठी 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इत्यनेन कर्मणि षष्ठीनिषेधात् ॥ ७२ ॥

इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥ ७३ ॥

इतीति। इति राज्ञा विज्ञापित ऋषिर्ध्यानेन स्तिमिते लोचने यस्य स ध्यानस्तिमितलोचनो निश्चलाक्षः सन् क्षणमात्रं सुप्तमीनो ह्रद इव तस्थौ ॥ ७३ ॥

सोऽपश्यत्प्रणिधानेन सन्ततेः स्तम्भकारणम् ।
भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥ ७४ ॥

स इति । स मुनिः प्रणिधानेन चित्तैकाग्र्येण भावितात्मा शुद्धान्तःकरणो भुवो भर्तुर्नृपस्य सन्ततेः स्तम्भकारणं सन्तानप्रतिबन्धकारणमपश्यत् । अथानन्तरमेनं नृपं प्रत्यबोधयत् स्वदृष्टं ज्ञापितवानित्यर्थः । एनमिति 'गतिबुद्धिप्रत्यवसानार्थ—' इत्यादिनाणि कर्तुः कर्मत्वम् ॥ ७४ ॥

पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।
आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥ ७५ ॥

पुरेति । पुरा पूर्वं शक्रमिन्द्रमुपस्थाय सेवित्वोर्वीं प्रति भुवमुद्दिश्य यास्यतो गमिष्यतस्तव पथि वर्त्मनि कल्पतरुच्छायामाश्रिता सुरभिः कामधेनुरासीत् तत्र स्थितेत्यर्थः ॥ ७५ ॥

ततः किमित्यत आह—

धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥ ७६ ॥

धर्मेति । ऋतुः पुष्पम् रज इति यावत् । 'ऋतुः स्त्रीकुसुमेऽपि च' इत्यमरः । ऋतुना निमित्तेन स्नातामिमां राज्ञीं सुदक्षिणां धर्मस्यर्तुकालाभिगमनलक्षणस्य लोपाद् भ्रंशाद्भयं तस्मात्स्मरन्ध्यायन् । 'मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत विज्ञातांश्च वनस्पतीन्' ॥ इति शास्त्रात्प्रदक्षिणक्रियार्हायां प्रदक्षिणकरणयोग्यायां तस्यां धेन्वां त्वं साधु प्रदक्षिणादि सत्कारं नाचरो नाचरितवानसि । व्यासक्ता हि विस्मरन्तीति भावः । ऋतुकालाभिगमने मनुः— 'ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा' इति । अकरणे दोषमाह पराशरः— 'ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपगच्छति । बालवृद्धातुरादेन विमुक्ते नात्र संशयः ॥' इति । तथा च— 'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः' । इति ॥ ७६ ॥

अवजानासि मां यस्मादतस्ते न भविष्यति ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥ ७७ ॥

अवजानासीति । यस्मात्कारणान्मामवजानासि तिरस्करोषि । अतः कारणान्मत्प्रसूतिं मम सन्ततिमनाराध्यासेवयित्वा ते तव प्रजा न भविष्यतीति सा सुरभिस्त्वां शशाप । 'शप आक्रोशे' ॥ ७७ ॥

कथं तदस्माभिर्न श्रुतमित्याह—

स शापो न त्वया राजन्न च सारथिना श्रुतः ।
नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥ ७८ ॥

स इति । हे राजन् ! स शापस्त्वया न श्रुतः सारथिना च न श्रुतः अश्रवणे हेतुमाह—स्रोतार्थमागता उद्दामानो दाम्न उद्गता दिग्गजा यस्मिंस्तथोक्ते आकाशगङ्गाया मन्दाकिन्याः स्रोतसि प्रवाहे नदति सति ॥ ७८ ॥

अस्तु । प्रस्तुते किमायातमित्यत्राह—

ईप्सितं तदवज्ञानाद्विद्धि सार्गलमात्मनः ।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥७९॥

ईप्सितमिति । तदवज्ञानात्तस्या धेनोरवज्ञानादपमानादात्मनः स्वस्याप्तुमिष्टमीप्सितं मनोरथम् । आप्नोतेः सन्नन्तात्क्तः ईत्वं च । सार्गलं सप्रतिबन्धं विद्धि जानीहि । तथा हि । पूज्यपूजाया व्यतिक्रमोऽतिक्रमणं श्रेयः प्रतिबध्नाति ॥ ७९ ॥

तर्हि गत्वा तामाराधयामि । सा वा कथमिदागमिष्यतीत्याशा न कर्तव्येत्याह—

हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः ।
भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥ ८० ॥

हविष इति । सा च सुरभिरिदानीं दीर्घं सत्रं चिरकालसाध्यो यागविशेषो यस्य तस्य प्रचेतसो हविषे दध्याज्यादिहविरर्थं भुजङ्गपिहितद्वारं तथो दुष्प्रवेशं पातालमधितिष्ठति पाताले तिष्ठतीत्यर्थः । "अधिशीङ्स्थासां कर्म" इति कर्मत्वम् ॥ ८० ॥

तर्हि का गतिरित्यत आह—

सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।
आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥ ८१ ॥

सुतामिति । तस्याः सुरभेरियं तदीया तां सुतां सुरभेः प्रतिनिधिं कृत्वा शुचिः शुद्धः । सह पत्न्या वर्तते इति सपत्नीकः सन् । "नद्यृतश्च" इति कप्प्रत्ययः । आराधय । हि यस्मात्कारणात्सा प्रीता तुष्टा सती कामान्दोग्धीति कामदुघा भवति । "दुहः कब्घश्च" इति कप्प्रत्ययः घादेशश्च ॥ ८१ ॥

इति वादिन एवास्य होतुराहुतिसाधनम् ।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥ ८२ ॥

इतीति । इति वादिनो वदत एव होतुर्हवनशीलस्य । "तृन्" इति तृन्प्रत्य

सोऽपश्यत्प्रणिधानेन सन्ततेः स्तम्भकारणम् ।
भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥ ७४ ॥

स इति । स मुनिः प्रणिधानेन चित्तैकाग्र्येण भावितात्मा शुद्धान्तःकरणो भुवो भर्तुर्नृपस्य सन्ततेः स्तम्भकारणं सन्तानप्रतिबन्धकारणमपश्यत् । अथानन्तरमेनं नृपं प्रत्यबोधयत् स्वयं ज्ञापितवानित्यर्थः । एनमिति 'गतिबुद्धिप्रत्यवसानार्थ—' इत्यादिनाणि कर्तुः कर्मत्वम् ॥ ७४ ॥

पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।
आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥ ७५ ॥

पुरेति । पुरा पूर्वं शक्रमिन्द्रमुपस्थाय सेवित्वोर्वीं प्रति भुवमुद्दिश्य यास्यतो गमिष्यतस्तव पथि वर्त्मनि कल्पतरुच्छायामाश्रिता सुरभिः कामधेनुरासीत् तत्र स्थितेत्यर्थः ॥ ७५ ॥

ततः किमित्याह—

धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥ ७६ ॥

धर्मेति । ऋतुः पुष्पम् रज इति यावत् । 'ऋतुः स्त्रीकुसुमेऽपि च' इत्यमरः । ऋतुना निमित्तेन स्नातामिमां राज्ञीं सुदक्षिणां धर्मस्यातिक्रमणलक्षणस्य लोपाद् भ्रंशाद्भयं तस्मात्स्मरन्ध्यायन् । "सर्वे यां दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत विज्ञातांश्च वनस्पतीन्" ॥ इति शास्त्रात्प्रदक्षिणक्रियार्हायां प्रदक्षिणकरणयोग्यायां तस्यां धेन्वां त्वं साधु प्रदक्षिणादि सत्कारं नाचरो नाचरितवानसि । व्यासङ्गाद्धि विस्मरन्तीति भावः । ऋतुकालाभिगमने मनुः— 'ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा' इति । अकरणे दोषमाह पराशरः— 'ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपगच्छति । बालगोघ्नापराधेन लिप्यते नात्र संशयः' ॥ इति । तथा च— 'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः' । इति ॥ ७६ ॥

अवजानासि मां यस्मादतस्ते न भविष्यति ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥ ७७ ॥

अवजानासीति । यस्मात्त्वं मामवजानासि तिरस्करोषि । अतः कारणान्मत्प्रसूतिं मम सन्ततिमनाराध्यासेवयित्वा ते तव प्रजा न भविष्यतीति सा सुरभिस्त्वां शशाप । 'शप आक्रोशे' ॥ ७७ ॥

य । अस्य मुनेराहुतीनां साधनं कारणम् । नन्दयतीति व्युत्पत्त्या नन्दिनीनाम्नी निन्द्याऽप्रमा प्रशस्ता धेनुर्वनाद्यागतवती प्रत्यागता । "अभ्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्" इति भावः ॥ ८२ ॥

सम्प्रति धेनुं विशिनष्टि—

ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।
बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम् ॥ ८३ ॥

ललाटेति । पल्लववत्स्निग्धा चासौ पाटला च । सन्ध्यायामप्येतद्विशेषणं योज्यम् । ललाटे उदयो यस्य स ललाटोदयः । तमाभुग्नमीषद्वक्रम् । 'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमरः । शौक्लित्य इति निघ्नस्य मतम् । श्वेतरोमाण्येवाङ्कस्तं बिभ्रती । नवं शशिनं बिभ्रती सन्ध्येव स्थिता ॥ ८३ ॥

भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।
प्रस्नवेनाभिवर्षन्ती वत्सालोकप्रवर्तिना ॥ ८४ ॥

भुवमिति । कोष्णेन किंचिदुष्णेन । 'कवं चोष्णे' इति चकारात्कादेशः । अवभृथादप्यवभृथस्नानादपि मेध्येन पवित्रेण । 'पूतं पवित्रं मेध्यं च' इत्यमरः । वत्सस्यालोकेन दर्शनेन प्रवर्तिना प्रवृत्तेन प्रस्नवेन क्षीराभिस्यन्दनेन भुवमभिवर्षन्ती सिञ्चन्ती । कुण्डमिवोध आपीनं यस्याः सा कुण्डोध्नी । 'ऊधस्तु क्लीबमापीनम्' इत्यमरः । 'ऊधसोऽनङ्' इत्यनङादेशः । 'बहुव्रीहेरूधसो ङीष्' ॥ ८४ ॥

रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।
तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ॥ ८५ ॥

रज इति । खुरोद्धूतैरन्तिकात्समीपे गात्रं स्पृशद्भिः । 'दूरान्तिकार्थेभ्यो द्वितीया च' इति चकारात्पञ्चमी । रजसां कणैः । मह्याः क्षियत ईष्ट इति महीक्षित् तस्य । तीर्थाभिषेकेण जातां तीर्थाभिषेकजाम् । शुद्धिमादधाना कुर्वाणा । एतेन वायव्यं स्नानमुक्तम् । तदुक्तं च मनुना— 'आग्नेयं भस्मना स्नानमवगाह्यं तु वारुणम् । आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम्' ॥ इति ॥ ८५ ॥

तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः ।
याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥ ८६ ॥

तामिति । निमित्तज्ञः शकुनज्ञस्तपोनिधिः पुण्यं दर्शनं यस्यास्तां धेनुं दृष्ट्वा । आशंसितं मनोरथः । नपुंसके भावे क्तः । तत्रावन्ध्यं प्रार्थ-

च । अस्य मुनेराहुतीनां साधनं धनम् । नन्दयतीति व्युत्पत्त्या नन्दिनीनाम्ना अनिन्द्या प्रशस्ता धेनुर्वनादाववृते प्रत्यागता । 'अनन्तराक्षेपो भविष्यत्कार्यसिद्धेर्हि लक्षणम्' इति भावः ॥ ८२ ॥

सम्प्रति धेनुं विशिनष्टि—

ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।
बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम् ॥ ८३ ॥

ललाटेति । पल्लववत्स्निग्धा चासौ पाटला च । सन्ध्यापक्षेऽप्येतद्विशेषणं योज्यम् । ललाट उदयो यस्य स ललाटोदयः । तमाभुग्नमीषद्वक्रम् । 'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमरः । 'ओदितश्च' इति निष्ठातस्य नत्वम् । श्वेतरोमाण्येवाङ्कस्तं बिभ्रती । नवं शशिनं बिभ्रती सन्ध्येव स्थिता ॥ ८३ ॥

भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।
प्रस्रवेणाभिवर्षन्ती वत्सालोकप्रवर्तिना ॥ ८४ ॥

भुवमिति । कोष्णेन किंचिदुष्णेन । 'कवं चोष्णे' इति चकारात्कादेशः । अवभृथादप्यवभृथस्नानादपि मेध्येन पवित्रेण । 'पूतं पवित्रं मेध्यं च' इत्यमरः । वत्सस्यालोकेन दर्शनेन प्रवर्तिना प्रवृत्तेन प्रस्रवेण क्षीरनिस्यन्देन भुवमभिवर्षन्ती सिञ्चन्ती । कुण्डमिवोधः आपीनं यस्याः सा कुण्डोध्नी । 'ऊधस्तु क्लीबमापीनम्' इत्यमरः । 'ऊधसोऽनङ्' इत्यनङादेशः । 'बहुव्रीहेरूधसो ङीष्' ॥ ८४ ॥

रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।
तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ॥ ८५ ॥

रज इति । खुरोद्धूतैरन्तिकात्समीपे गात्रं स्पृशद्भिः । 'दूरान्तिकार्थेभ्यो द्वितीया च' इति चकारात्पञ्चमी । रजसां कणैः । मही क्षियत ईष्ट इति महीक्षित् तस्य । तीर्थाभिषेकेण जातां तीर्थाभिषेकजाम् । शुद्धिमादधाना कुर्वाणा । एतेन वायव्यं स्नानमुक्तम् । उक्तं च मनुना— 'आग्नेयं भस्मना स्नानमवगाह्यं तु वारुणम् । आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम्' ॥ इति ॥ ८५ ॥

तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः ।
याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥ ८६ ॥

तामिति । निमित्तज्ञः शकुनज्ञस्तपोनिधिर्वसिष्ठः पुण्यं दर्शनं यस्यास्तां तां धेनुं दृष्ट्वा । आशंसितं मनोरथः । नपुंसके भावे क्तः । तत्रावन्ध्यं सफ-

कं प्रार्थनं यस्य स तम् अवन्ध्यमनोरथमित्यर्थः । याचयित्वा धोरवं याज्यं पार्थि वं पुनरब्रवीत् ॥ ८६ ॥

अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः ।
उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥ ८७ ॥

अदूरवर्तिनीमिति । हे राजन्, आत्मनः कार्यस्य सिद्धिरदूरवर्तिनीं समीपवर्ति नीं विगणय्य विद्धि यदस्मात्कारणात्कल्याणी मङ्गलमूर्तिः । 'बह्वादिभ्यश्च' इति ङीप् । इयं धेनुर्नाम्नि कीर्तिते कथिते सत्येवोपस्थिता ॥ ८७ ॥

वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥ ८८ ॥

वन्यवृत्तिरिति । वने भवं वन्यं कन्दमूलादिकं वृत्तिराहारो यस्य तथाभूतः सन् । इमां गां शश्वत्सदा । आ प्रसादादविच्छेदेनेत्यर्थः । आत्मनस्तव कर्तुः अनुगमनेनानु- सरणेन । अभ्यसनेनाभ्यासेनाभ्यासेन विद्यामिव प्रसादयितुं प्रसन्नां कर्तुमर्हसि ॥ ८८ ॥

तथानुसरणप्रकारमाह—

प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः ।
निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ॥ ८९ ॥

प्रस्थितायामिति । अस्यां नन्दिन्यां प्रस्थितायां प्रतिष्ठेथाः प्रयाहि । सम वप्रविभ्यः स्थः इत्यात्मनेपदम् । स्थितायां निवृत्तगतिकायां स्थितिमाचरेः स्थितिं कुरु इत्यर्थः । निषण्णायामुपविष्टायां निषीदोपविश । विध्यर्थे लोट् । पीतमम्भो यया तस्यां पीताम्भसि सत्यामपः पिबेः पिब ॥ ८९ ॥

वधूर्भक्तिमती चैनामर्चितामा तपोवनात् ।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥ ९० ॥

वधूरिति । वधूर्जाया च भक्तिमती गन्धादिभिरर्चितामेनां प्रयता तपोवनात् । आङ् मर्यादायाम् । पदद्वयं चैतत् । अन्वेतु अनुगच्छतु । सायमपि प्रत्युद्व्रजेत्प्रत्यु- द्गच्छेत् । विध्यर्थे लिङ् ॥ ९० ॥

इत्याप्रसादादस्यास्त्वं परिचर्यापरो भव ।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥ ९१ ॥

इतीति । इत्यनेन प्रकारेण त्वमा प्रसादात्प्रसादपर्यन्तम् । आङ्मर्यादायामिति भ्यौः । इदं वैयधिकरण्यसमासान्तम् । अस्या धेनोः परिचर्यापरः शुश्रूषापरो

र्थं प्रार्थनं यस्य स तम्, अवन्ध्यमनोरथमित्यर्थः । वाग्मितु मौर्य वाक्यं पार्थिवं पुनरब्रवीत् ॥ ८६ ॥

अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः ।
उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥ ८७ ॥

अदूरवर्तिनीमिति । हे राजन्! आत्मनः कार्यस्य सिद्धिरदूरवर्तिनीं शीघ्रभाविनीं विगणय विद्धि यद्यस्मात्कल्याणी मङ्गलमूर्तिः । 'बह्वादिभ्यश्च' इति ङीप् । इयं धेनुर्नाम्नि कीर्तिते कथिते सत्येवोपस्थिता ॥ ८७ ॥

वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥ ८८ ॥

वन्यवृत्तिरिति । वने भवं वन्यं कन्दमूलादिकं वृत्तिराहारो यस्य तथाभूतः सन् । इमां गां शश्वत्सदा । आ प्रसादात्प्रसन्नतापर्यन्तम् । आत्मनस्तव कर्तुः अनुगमनेनानुसरणेन । अभ्यसनेनावृत्त्याभ्यासेन विद्यामिव प्रसादयितुं प्रसन्नां कर्तुमर्हसि ॥ ८८ ॥

यथानुसरणप्रकारमाह—

प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः ।
निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ॥ ८९ ॥

प्रस्थितायामिति । अस्यां नन्दिन्यां प्रस्थितायां प्रतिष्ठेथाः प्रयाहि । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । स्थितायां निवृत्तगतिकायां स्थितिमाचरेः स्थितिं कुरु । विध्यर्थे लिङ् । निषण्णायामुपविष्टायां निषीदोपविश । विध्यर्थे लोट् । पीतमम्भो यया तस्यां पीताम्भसि सत्यामपः पिबेः पिब ॥ ८९ ॥

वधूर्भक्तिमती चैनामर्चितामा तपोवनात् ।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥ ९० ॥

वधूरिति । वधूर्जाया च भक्तिमती गन्धादिभिरर्चितामेनां प्रयता तपोवनात् । आङ् मर्यादायाम् । पदद्वयं चैतत् । अन्वेत्वनुगच्छतु । सायमपि प्रत्युद्व्रजेत्प्रत्युद्गच्छेत् । विध्यर्थे लिङ् ॥ ९० ॥

इत्याप्रसादादस्यास्त्वं परिचर्यापरो भव ।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥ ९१ ॥

इतीति । इत्यनेन प्रकारेण त्वम् आ प्रसादात्प्रसादपर्यन्तम् । 'आङ्मर्यादाभिविध्योः' इत्यस्य वैभाषिकत्वादसमासत्वम् । अस्या धेनोः परिचर्यापरः शुश्रूषापरः

श्याश्रमभ्यासादितिप्रम तस्यामधिशयनं कृत्वेत्यर्थः । 'अधिशीङ्स्थासां कर्म' इत्यनेनाधारस्य कर्मत्वम् । "कर्मणि द्वितीया" । प्रयतो नियतः परिग्रहः पत्नी द्वितीयो यस्येति स तथोक्तः । कुशानां शयने संविष्टः सुप्तः सन् । तस्य वसिष्ठस्य शिष्याणामध्ययनेनापररात्रे वेदपाठेन निवेदितमवसानं यस्यास्तां निशां निनाय गमयामास । अपररात्रेऽध्ययने मनुः— 'निशान्ते च परिश्रान्तो ब्रह्म चाधीत्य पुनः स्वपेत्' । 'न चापररात्रमधीत्य पुनः स्वपेत्' इति गौतमश्च । प्रहर्षिणीवृत्तमेतत् । तदुक्तम्— म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ॥ ९५ ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया
व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये
वसिष्ठाश्रमाभिगमनो नाम प्रथमः सर्गः ।

---

## द्वितीयः सर्गः ।

आपातु राधीमवदङ्गभोमाशीष वाणीश्लथगुम्फसिन्धुम् ।
मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दासनसुन्दरि त्वाम् ॥

**अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।**
**वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥**

अथेति । अथ निशानयनानन्तरं यशोधनः प्रजानामधिपः प्रजेश्वरः प्रभाते प्रातःकाले जायया सुदक्षिणया प्रतिग्राहिताभ्यां प्रतिग्राहिते स्वीकारिते गन्ध माल्ये यया सा जायाप्रतिग्राहितगन्धमाल्या तां तथोक्ताम् । पीतं पान मस्यास्तीति पीतः पीतवानित्यर्थः । अर्श आदिभ्योऽच् इत्यच्प्रत्ययः । 'पीता गावो भुक्ता ब्राह्मणाः' इति महाभाष्ये दर्शनात् । पीतः प्रतिबद्धो वत्सो यस्यास्तामृषेर्धेनुं वनाय वनं गन्तुम् । क्रियार्थोपपदस्य च कर्मणि स्थानिनः इत्यनेन चतुर्थी । मुमोच मुक्तवान् । जायापदसामर्थ्यात्सुदक्षिणायां पुत्रजननयोग्यत्वमनुसन्धेयम् । तथा हि श्रुतिः— 'पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते पुनः ॥' इति । यशोधन इत्यनेन पुत्रवत्यशोर्हिंसीमात्राप्यन्तरं गोरक्षणे प्रवृत्त

पुत्रान्तराणाम् । कुतः । हि यस्मात्मनुप्रभवाणां प्रसूयत इति प्रसूतिः सन्ततिः स्ववीर्यगुप्ता स्ववीर्येणैव रक्षिता । न हि स्वनिर्वाहकस्य परापेक्षेति भावः ॥ ४ ॥

आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥ ५ ॥

आस्वादवद्भिरिति । सम्राण्मण्डलेश्वरः । 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः । स राजा आस्वादवद्भी रसवद्भिः स्वादुभिरित्यर्थः । तृणानां कवलैर्ग्रासैः । 'ग्रासस्तु कवलः पुमान्' इत्यमरः । कण्डूयनैः खर्जनैः । दंशानां वनमक्षिकाणां निवारणैः । 'दंशस्तु वनमक्षिका' इत्यमरः । अव्याहतैरप्रतिहतैः स्वैरगतैः स्वच्छन्दगमनैश्च । तस्या धेन्वाः समाराधनतत्परः शुश्रूषासक्तोऽभूत् । तदेव परं प्रधानं यस्येति तत्परः । 'तत्परे प्रसितासक्तौ' इत्यमरः ॥ ५ ॥

स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥ ६ ॥

स्थित इति । भूपतिस्तां गां स्थितां सतीं स्थितः सन् । स्थितिरूर्ध्वावस्थानम् । प्रयातां प्रस्थितामुच्चलितः प्रस्थितः । निषेदुषीं निषण्णाम्, उपविष्टामित्यर्थः । "भाषायां सदवसश्रुवः" इति क्वसुप्रत्ययः । "उगितश्च" इति ङीप् । आसनबन्ध उपवेशने धीरः स्थिरः उपविष्टः सन्नित्यर्थः । जलमाददानां जलं पिबन्तीं जलाभिलाषी जलं पिबन्नित्यर्थः । इत्थं छायेवान्वगच्छदनुसृतवान् ॥ ६ ॥

स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः ।
आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः ॥ ७ ॥

स इति । न्यस्तानि परिहृतानि चिह्नानि छत्रचामरादीनि यस्यास्तां तथाभूतामपि तेजोविशेषेण प्रभावातिशयेनानुमिताम् । सर्वथा राजैवायं भवेदित्यूहितां राजलक्ष्मीं दधानः स राजा । अनाविष्कृतदानराजिरप्रकटितमदरेखः । अन्तर्गता मदावस्था यस्य सोऽन्तर्मदावस्थः । तथाभूतो द्विपेन्द्र इवासीत् ॥ ७ ॥

लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम् ।
रक्षापदेशान्मुनिहोमधेनोर्वन्यान्विनेष्यन्निव दुष्टसत्त्वान् ॥ ८ ॥

लतेति । लतानां वल्लीनां प्रतानैः कुटिलतन्तुभिरुद्ग्रथिता उन्नम्य ग्रथिता ये केशास्तैरुपलक्षितः । "इत्थंभूतलक्षणे" इति तृतीया । स राजा । अधिज्यधन्वा

इति गम्यते । अस्मिन्सर्गे वृत्तमुपजातिः – "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति ॥ १ ॥

तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया ।
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥२॥

तस्या इति । पांसवो दोषा आसां सन्तीति पांसुलाः स्वैरिण्यः । 'स्वैरिणी पांसुला' इत्यमरः । सिध्मादिभ्यश्च इति लच्प्रत्ययः । अपांसुलानां पतिव्रतानां धुरि अग्रे कीर्तनीया परिगणनीया मनुष्येश्वरधर्मपत्नी । खुरन्यासैः पवित्राः पांसवो यस्य तम् 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः' इत्यमरः । तस्या धेनोर्मार्गम् । स्मृतिर्मन्वादिवाक्यं श्रुतेर्वेदवाक्यस्यार्थमभिधेयमिव अन्वगच्छदनुसृतवती च । यथा स्मृतिः श्रुतिक्षुण्णमेवार्थमनुसरति तथा सापि गोखुरक्षुण्णमेव मार्गमनुससारेत्यर्थः । धर्मपत्नीत्यत्राश्वघासादिवत्तादर्थ्ये षष्ठीसमासः प्रकृतिविकारभावाभावात् । पांसुलपदप्रयुक्तानामप्यपांसुलानामिति विरोधालंकारो गम्यते ॥ २ ॥

निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥

निवर्त्येति । दयालुः कारुणिकः । 'स्याद्दयालुः कारुणिकः' इत्यमरः । 'स्पृहिगृहि–' इत्यादिनाऽऽलुच्प्रत्ययः । यशोभिः सुरभिर्मनोज्ञः । 'सुरभिः स्यान्मनोज्ञेऽपि' इति विश्वः । राजा तां दयितां निवर्त्य सौरभेयीं कामधेनुसुतां नन्दिनीम् । धरन्तीति धराः । पचाद्यच् । पयसां धराः पयोधराः स्तनाः । 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः । अपयोधराः पयोधराः सम्पद्यमानाः पयोधरीभूताः । अभूततद्भावे च्विः । 'कुगतिप्रादयः' इति समासः । पयोधरीभूताश्चत्वारः समुद्रा यस्यास्ताम् । अनेकमन्यपदार्थे इत्यनेकपदार्थग्रहणसामर्थ्यात्त्रिपदो बहुव्रीहिः । गोरूपधरामुर्वीमिव जुगोप ररक्ष । भूरक्षणप्रयत्नेनैव ररक्षेति भावः । धेनुपक्षे—पयसा दुग्धेनाधरीभूताश्चत्वारः समुद्रा यया सा तथोक्ताम् दुग्धतिरस्कृतसागरामित्यर्थः ॥ ३ ॥

व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः ।
न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥ ४ ॥

व्रतायेति । व्रताय धेनोरनुचरेण । न तु जीवनायेति भावः । तेन दिलीपेन शेषोऽवशिष्टोऽप्यनुयायिवर्गोऽनुचरवर्गो न्यषेधि निवर्तितः । शेषत्वं सुदक्षिणापेक्षया । कथं तर्ह्यात्मरक्षणमत आह—न चेति । तस्य दिलीपस्य शरीररक्षा अन्यतः

इति गम्यते । अस्मिन्सर्गे वृत्तमुपजातिः—"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदी-यावुपजातयस्ताः" इति ॥ १ ॥

तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया ।
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥२॥

तस्या इति । पांसवो दोषा आसां सन्तीति पांसुलाः स्वैरिण्यः । 'स्वैरिणी पांसुला' इत्यमरः । "सिध्मादिभ्यश्च" इति लच्प्रत्ययः । अपांसुलानां पतिव्रतानां धुर्यग्रे कीर्तनीया परिगणनीया मनुष्येश्वरधर्मपत्नी । खुरन्यासैः पवित्राः पांसवो यस्य तम् 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः' इत्यमरः । तस्या धेनोर्मार्गम् । स्मृतिर्मन्वादिवाक्यं श्रुतेर्वेदवाक्यस्यार्थमभिधेयमिव अन्वगच्छदनुसृतवती च । यथा स्मृतिः श्रुतिक्षुण्णमेवार्थमनुसरति तथा सापि गोखुरक्षुण्णमेव मार्गमनुससारेत्यर्थः । धर्मपत्नीत्यत्राश्वघासादिवत्तादर्थ्ये षष्ठीसमासः प्रकृतिविकारभावाभावात् । पांसुलपदश्रवणादपांसुलानामिति विरोधालङ्कारो व्यज्यते ॥ २ ॥

निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥

निवर्त्येति । दयालुः कारुणिकः । 'स्याद्दयालुः कारुणिकः' इत्यमरः । "स्पृहिगृहि—" इत्यादिनाऽऽलुच्प्रत्ययः । यशोभिः सुरभिर्मनोज्ञः । 'सुरभिः स्यान्मनोज्ञेऽपि' इति विश्वः । राजा तां दयितां निवर्त्य सौरभेयीं कामधेनुसुतां नन्दिनीम् । धरन्तीति धराः । पचाद्यच् । पयसां धराः पयोधराः स्तनाः । 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः । अपयोधराः पयोधराः सम्पद्यमानाः पयोधरीभूताः । अभूततद्भावे च्विः । 'कुगतिप्रादयः' इति समासः । पयोधरीभूताश्चत्वारः समुद्रा यस्यास्ताम् । अनेकमन्यपदार्थे इत्यनेकपदार्थग्रहणसामर्थ्यात्त्रिपदो बहुव्रीहिः । गोरूपधरामुर्वीमिव जुगोप ररक्ष । भूरक्षणप्रयत्नेनैव ररक्षेति भावः । धेनुपक्षे—पयसा दुग्धेनाधरीभूताश्चत्वारः समुद्रा यया सा तथोक्ताम् दुग्धतिरस्कृतसागरामित्यर्थः ॥ ३ ॥

व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः ।
न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥ ४ ॥

व्रतायेति । व्रताय धेनोरनुचरेण । न तु जीवनायेति भावः । तेन दिलीपेन शेषोऽवशिष्टोऽप्यनुयायिवर्गोऽनुचरवर्गो न्यषेधि निवर्तितः । शेषत्वं सुदक्षिणापेक्षया । कथं तर्ह्यात्मरक्षणमत आह—न चेति । तस्य दिलीपस्य शरीररक्षा अन्यतः

पुरुषान्तराच्च । कुतः । हि यस्मान्मनोः प्रसूतिः सन्ततिः स्ववीर्यगुप्ता स्ववीर्येणैव रक्षिता । न हि स्वनिर्वाहकस्य परापेक्षेति भावः ॥ ४ ॥

आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥ ५ ॥

आस्वादवद्भिरिति । सम्राण्मण्डलेश्वरः । "येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्" इत्यमरः । स राजा आस्वादवद्भी रसवद्भिः स्वादुभिरित्यर्थः । तृणानां कवलैर्ग्रासैः । "ग्रासस्तु कवलः पुमान्" इत्यमरः । कण्डूयनैः खर्जनैः । दंशानां वनमक्षिकाणां निवारणैः । "दंशस्तु वनमक्षिका" इत्यमरः । अव्याहतैरप्रतिहतैः स्वैरगतैः स्वच्छन्दगमनैश्च । तस्या धेन्वाः समाराधनतत्परः शुश्रूषासक्तोऽभूत् । तदेव परं प्रधानं यस्येति तत्परः । "तत्परे प्रसितासक्तौ" इत्यमरः ॥ ५ ॥

स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥ ६ ॥

स्थित इति । भूपतिस्तां गां स्थितां सतीं स्थितः सन् । स्थितिरूर्ध्वावस्थानम् । प्रयातां प्रस्थितामुच्चलितः प्रस्थितः । निषेदुषीं निषण्णाम् उपविष्टामित्यर्थः । "भाषायां सदवसश्रुवः" इति क्वसुप्रत्ययः । "उगितश्च" इति ङीप् । आसनबन्ध उपवेशने धीरः स्थिर उपविष्टः सन्नित्यर्थः । जलमाददानां जलं पिबन्तीं जलाभिलाषी जलं पिबन्नित्यर्थः । इत्थं छायेवान्वगच्छदनुसृतवान् ॥ ६ ॥

स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः ।
आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः ॥ ७ ॥

स इति । न्यस्तानि परिहृतानि चिह्नानि छत्रचामरादीनि यस्यास्तां तथाभूतामपि तेजोविशेषेण प्रभावातिशयेनानुमिताम् । सर्वथा राजैवायं भवितुमर्हतीत्यूहितां राजलक्ष्मीं दधानः स राजा । अनाविष्कृतदानराजिर्बहिरप्रकटितमदरेखः । अन्तर्गता मदावस्था यस्य सोऽन्तर्मदावस्थः । तथाभूतो द्विपेन्द्र इवासीत् ॥ ७ ॥

लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम् ।
रक्षापदेशान्मुनिहोमधेनोर्वन्यान्विनेष्यन्निव दुष्टसत्त्वान् ॥ ८ ॥

लतेति । लतानां वल्लीनां प्रतानैः कुटिलतन्तुभिरुद्ग्रथिता उन्नमय्य ग्रथिता ये केशास्तैरुपलक्षितः । "इत्थंभूतलक्षणे" इति तृतीया । स राजा । अधिज्यमा

सञ्चारेति। पल्लवस्य रागो वर्णः पल्लवरागः। 'रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु' इति यादवः। तद्वत् ताम्रा पल्लवरागताम्रा पतङ्गस्य सूर्यस्य प्रभा कान्तिः। 'पतङ्गः पक्षिसूर्ययोः' इति यादवः। मुनेर्धेनुश्च। दिगन्तराणि दिगवकाशान्। 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः। सञ्चारेण पूतानि शुद्धानि कृत्वा दिनान्ते सायंकाले निलयायास्तमयाय। धेनुपक्षे— आलयाय च। गन्तुं प्रचक्रमे ॥ १५ ॥

तां देवतापित्रतिथिक्रियार्थामन्वग्ययौ मध्यमलोकपालः।
बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद्विधिनोपपन्ना ॥१६॥

तामिति। मध्यमलोकपालो भूपालः। देवतापित्रतिथीनां क्रिया यागश्राद्धदानानि ता एवार्थः प्रयोजनं यस्यास्तां धेनुमन्वगनुपदं ययौ। 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः। सतां मतेन सद्भिर्मान्येन। "मतिबुद्धि–" इत्यादिना वर्तमाने क्तः। "क्तस्य च वर्तमाने" इति षष्ठी। तेन राज्ञोपपन्ना युक्ता सा धेनुः। सतां मतेन विधिनाऽनुष्ठानेनोपपन्ना युक्ता साक्षात्प्रत्यक्षा श्रद्धाऽऽस्तिक्यबुद्धिरिव बभौ च ॥ १६ ॥

स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि।
ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् ॥१७॥

स इति। स राजा। पल्वलेभ्योऽल्पजलाशयेभ्य उत्तीर्णानि निर्गतानि वराहाणां यूथानि कुलानि येषु तानि। बर्हाण्येषां सन्तीति बर्हिणो मयूराः। 'मयूरो बर्हिणो बर्ही' इत्यमरः। "फलबर्हाभ्यामिनच्प्रत्ययो वक्तव्यः"। आवासवृक्षोन्मुखा बर्हिणो येषु तानि श्यामायमानानि वराहबर्हिणादिमलिनिम्ना अश्यामानि श्यामानि भवन्तीति श्यामायमानानि। "लोहितादिडाज्भ्यः क्यष्" इति क्यष्प्रत्ययः। 'वा क्यषः' इत्यात्मनेपदे शानच्। मृगैरध्यासिता अधिष्ठिताः शाद्वला येषु तानि। शादाः शष्पाणि एषु देशेषु सन्तीति शाद्वलाः शष्पश्यामदेशाः। 'शाद्वलः शादहरिते' इत्यमरः। शादः कर्दमशष्पयोः इति विश्वः। नडशादाड्ड्वलच् इति ड्वलच्प्रत्ययः। वनानि पश्यन्ययौ ॥ १७ ॥

आपीनभारोद्वहनप्रयत्नाद्गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः।
उभावलञ्चक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम् ॥१८॥

आपीनेति। गृष्टिः सकृत्प्रसूता गौः। 'गृष्टिः सकृत्प्रसूता गौः' इति हला

सुपः । मरेभश्च । उभौ यथाक्रमम् । आपीनमूधः । 'ऊधस्तु क्लीबमापीनम्' इत्यमरः । आपीनस्य भारोद्वहने मन्दप्रयासात् वपुषो गुरुत्वाधिक्याच्च अभिराम्या चारुण्या गत्या गमनाभ्यां तपोवनमावृत्ते । पश्चात्तं तपोवनाद्बहिर्विषयम् । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यनेन समासात्पूर्वोऽप्रयोगः । असम्भाव्यर्भूषितमेतत् ॥१८॥

वसिष्ठधेनोरनुयायिनं तमावर्तमानं वनिता वनान्तात् ।
पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥१९॥

वसिष्ठेति । वसिष्ठधेनोरनुयायिनमनुचरं वनान्तादावर्तमानं प्रत्यागतं तं दिलीपं वनिता सुदक्षिणा निमेषेष्वलसा मन्दा पक्ष्मणां पङ्क्तिर्यस्याः सा निर्निमेषा सतीत्यर्थः । लोचनाभ्यां करणाभ्याम् । उपोषिताभ्यामिव उपवासो भोजननिवृत्तिः तद्वद्भ्यामिव । वसतेः कर्तरि क्तः । पपौ । यथोपोषितोऽतितृष्णया जलमतिशयं पिबति तद्वदतितृष्णयाऽतिशयं ददर्शेत्यर्थः ॥ १९ ॥

पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या ।
तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या ॥ २० ॥

पुरस्कृतेति । वर्त्मनि पार्थिवेन पृथिव्या ईश्वरेण । 'तस्येश्वरः' इत्यञ्प्रत्ययः । 'पुरस्कृताऽग्रतः' कृता धर्मस्य पत्नी धर्मपत्नी धर्मार्थपत्नीत्यर्थः । अश्वघासादिवत्तादर्थ्ये षष्ठीसमासः । पार्थिवस्य धर्मपत्न्या प्रत्युद्गता सा धेनुस्तदन्तरे तयोर्दम्पत्योर्मध्ये । दिनक्षपयोर्दिनरात्र्योर्मध्यगता सन्ध्येव विरराज ॥ २० ॥

प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साक्षतपात्रहस्ता ।
प्रणम्य चानर्च विशालमस्याः शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥२१॥

प्रदक्षिणीकृत्येति । अक्षतानां पात्रेण सह वर्तत इति साक्षतपात्रौ हस्तौ यस्याः सा सुदक्षिणा पयस्विनी प्रशस्तक्षीरां तां धेनुं प्रदक्षिणीकृत्य प्रणम्य च । अस्या धेन्वा विशालं शृङ्गान्तरं शृङ्गमध्यम् । अर्थसिद्धेः कार्यसिद्धेर्द्वारं प्रवेशमार्गमिव आनर्च अर्चयामास । अर्चतेर्भौवादिकाल्लिट् ॥ २१ ॥

वत्सोत्सुकापि स्तिमिता सपर्यां प्रत्यग्रहीत्सेति ननन्दतुस्तौ ।
भक्त्योपपन्नेषु हि तद्विधानां प्रसादचिह्नानि पुरःफलानि ॥ २२ ॥

वत्सोत्सुकापि । सा धेनुर्वत्सोत्सुकापि वत्से उत्कण्ठितापि स्तिमिता निश्चला सती सपर्यां पूजां प्रत्यग्रहीदिति हेतोस्तौ दम्पती ननन्दतुः । पूजास्वीकारस्यानन्दहेतुत्वमाह—भक्त्येति । पूज्येष्वनुरागो भक्तिः तयोपपन्नेषु युक्तेषु विषये तद्विधा

तत इति । ततः सिंहदर्शनानन्तरं मृगेन्द्रगामी सिंहगामी शरण्यं रक्षणम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । शरणं रक्षणे गृहे' इति यादवः । शरणे साधुः शरण्यः । तत्र साधुः इति यत्प्रत्ययः । प्रसभेन बलात्कारेणोद्धृता अरयो येन स नृपतो राजा जाताभिषङ्गो जातपराभवः सन् । अभिषङ्गः पराभवे' इत्यमरः । वध्यस्य वधार्हस्य । दण्डादिभ्यो यः इति यप्रत्ययः । मृगेन्द्रस्य वधाय विनाशाय तूणीरात् । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः । शरमुद्धर्तुमैच्छत् ॥ ३० ॥

वामेतरस्तस्य करः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे ॥३१॥

वामेतर इति । प्रहर्तुस्तस्य वामेतरो दक्षिणः करः । नखप्रभाभिर्भूषितानि विस्फुरितानि कङ्कस्य पक्षिविशेषस्य पत्राणि यस्य तस्मिन् । कङ्कः पक्षिविशेषे स्यात्क्षत्रियाकारे युधिष्ठिरे' इति विश्वः । कङ्कस्तु कर्कटः' इति यादवः । सायकस्य पुङ्ख एव कर्तर्याख्ये मूलप्रदेशे । कर्तरीपुङ्खौ' इति यादवः । सक्ताङ्गुलिः सन् । चित्रार्पितारम्भश्चित्रलिखितशरोद्धरणोद्योग इव । अवतस्थे ॥ ३१ ॥

बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्यः ॥३२॥

बाहुप्रतिष्टम्भेति । बाहोः प्रतिष्टम्भेन प्रतिबन्धेन । प्रतिबन्धः प्रतिष्टम्भः इत्यमरः । विवृद्धमन्युः प्रवृद्धरोषो राजा मन्त्रौषधिभ्यां रुद्धवीर्यः प्रतिबद्धशक्तिर्भोगी सर्प इव । 'भोगी राजभुजङ्गयोः' इति शाश्वतः । अभ्यर्णमन्तिकम् । उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः । आगस्कृतमपराधकारिणमस्पृशद्भिः स्वतेजोभिरन्तरदह्यत । 'अविशेषपापयोरस्त्री तेजः प्राणस्य रेतसोऽपि' इति यादवः ॥ ३२ ॥

तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन्विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥३३॥

तमिति । निगृहीता पीडिता धेनुर्येन स सिंहः । आर्याणां सतां गृह्यं पक्ष्यम् । पदास्वैरिबाह्यापक्ष्येषु च' इति क्यप् । मनुवंशस्य केतुं चिह्नं केतुवद्व्यावर्तकम् । सिंह इवोरुसत्त्वो महाबलस्तम् । आत्मवृत्तौ स्वीये बाहुस्तम्भरूपे व्यापारेऽभूतपूर्वत्वाद्विस्मितम् । कर्तरि क्तः । तं दिलीपं मनुष्यवाचा करणेन पुनर्विस्माययन्विस्मयमाश्चर्यं प्रापयन्निजगाद । 'स्मिङ् ईषद्धसने' इति धातोर्णिचि नित्यमात्वे सेत्यात्मनेपदे च सति विस्मापयन्निति रूपं सिद्धम् । 'विस्मापयन्' इति पाठे पुमागम-

मात्रं वचनम् । 'तत्र नित्यं स्मयतेः' इति हेतुभयविवक्षायामेवेति "भीस्म्योर्हेतुभये" इत्यात्मनेपदे विस्मापयमान इति स्यात् । तस्मान्मनुष्यवाचा विस्मापयन्निति रूपं सिद्धम् । करणविवक्षायां न कश्चिद्दोषः ॥ ३३ ॥

अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥३४॥

अलमिति । हे महीपाल ! तव श्रमेणालम् । साध्याभावाच्छ्रमो न कर्तव्य इत्यर्थः । अत्र गम्यमानसाधनक्रियापेक्षया श्रमस्य करणत्वात्तृतीया । उक्तं च न्यासोद्योते— न केवलं श्रूयमाणैव क्रियानिमित्तं करणभावस्य अपि तर्हि गम्यमानापि इति । अलं भूषणपर्याप्तिशक्तिवारणवाचकम् इत्यमरः । इतोऽस्मिन्नपि । सार्वविभक्तिकस्तसिः । प्रयुक्तमप्यस्त्रं वृथा स्यात् । तथाहि पादपोन्मूलने शक्तिर्यस्य तत्तथोक्तं मारुतस्य रंहो वेगः शिलोच्चये पर्वते न मूर्च्छति न प्रसरति ॥३४॥

कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किङ्करमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥३५॥

कैलासेति । कैलास इव गौरः शुभ्रस्तम् । 'चामीकरं च शुभ्रं च गौरमाहुर्मनीषिणः' इति शाश्वतः । वृषं वृषभमारुरुक्षोरारोढुमिच्छोः तस्योपरि पदं निक्षिप्य वृषभमारोढुमिच्छोरित्यर्थः । अष्टौ मूर्तयो यस्य स तस्याष्टमूर्तेः शिवस्य पादार्पणं पादन्यासस्तदेवानुग्रहः प्रसादस्तेन पूतं पृष्ठं यस्य तं तथोक्तं निकुम्भमित्रं कुम्भोदरं नाम किङ्करं मामवेहि विद्धि । 'पृथिवी सलिलं तेजो वायुराकाशमेव च । सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्तयः ॥' इति यादवः ॥ ३५ ॥

अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥३६॥

अमुमिति । पुरोऽग्रतोऽमुं देवदारुं पश्यसि इति काकुः । असौ देवदारुः । वृषभो ध्वजे यस्य स तेन शिवेन पुत्रीकृतः पुत्रत्वेन स्वीकृतः । अभूततद्भावे च्विः । यो देवदारुः स्कन्दस्य मातुर्गौर्या हेम्नः कुम्भ एव स्तनः तस्मान्निःसृतानां पयसां अम्बूनां रसज्ञः स्वादज्ञः । स्कन्दपक्षे—हेमकुम्भ इव स्तन इति विग्रहः । पयसां क्षीराणाम् । पयः क्षीरं पयोऽम्बु च इत्यमरः । स्कन्दसमानप्रेमास्पदमिति भावः ॥ ३६ ॥

कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ॥ ३७ ॥

कण्डूयमानेनेति । कदाचित्कटं कपोलं कण्डूयमानेन घर्षता । "कण्ड्वादिभ्यो यक्" इति यक् । ततः शानच् । वन्यद्विपेनास्य देवदारोस्त्वगुन्मथिता । अथाद्रेस्तनया गौरी असुरास्त्रैरालीढं क्षतम् । सेनां नयतीति सेनानीः स्कन्दः । 'पार्वतीनन्दनः स्कन्दः सेनानीः' इत्यमरः । 'सत्सूद्विष—' इत्यादिना क्विप् । तमिव एनं देवदारुं शुशोच ॥ ३७ ॥

तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति ॥ ३८ ॥

तदा प्रभृतीति । तदा तत्प्रभृति प्रभृतिरवधिर्यस्मिन्कर्मणि तत्तथा तदाप्रभृत्येव वनद्विपानां त्रासार्थं भयार्थं शूलभृता शिवेन अङ्कं समीपमागताः प्राप्ताः सत्त्वाः प्राणिनो वृत्तिर्यस्मिंस्तत् । 'अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयोः' इति केशवः । सिंहत्वं विधाय । अस्मिन्नद्रिकुक्षौ गुहायामहं व्यापारितो नियुक्तः ॥ ३८ ॥

तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥ ३९ ॥

तस्येति । परमेश्वरेण प्रदिष्टो निर्दिष्टः कालो भोजनवेला यस्याः सोपस्थिता प्राप्तैषा धेनुः शोणितपारणा रुधिरस्य व्रतान्तभोजनम् । सुरद्विषो राहोः चन्द्रमस इयं चान्द्रमसी सुधेव । क्षुधितस्य बुभुक्षितस्य तस्याङ्कागतसत्त्ववृत्तेर्मम सिंहस्य तृप्त्या अलं पर्याप्ता । 'नमः स्वस्ति स्वाहास्वधालंवषड्योगाच्च' इत्यनेन चतुर्थी ॥ ३९ ॥

स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः ।
शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ॥ ४० ॥

स इति । स एवमुपायशून्यस्त्वं लज्जां विहाय निवर्तस्व । भवांस्त्वं गुरोर्दर्शिता प्रकाशिता शिष्यस्य कर्तव्या भक्तिर्येन स तथोक्तोऽसि । ननु गुरुधनं विनाश्य कथं तत्समीपं गच्छेयमत आह—शस्त्रेणेति । रक्ष्यं धनं शस्त्रेणायुधेन । 'शस्त्रमायुधलोहयो' इत्यमरः । अशक्या रक्षा यस्य तदशक्यरक्षम् रक्षितुमशक्यमित्यर्थः । तद्रक्ष्यं नश्यदपि शस्त्रभृतां यशो न क्षिणोति न हिनस्ति । अशक्यार्थे प्रतिविधानं न दोषायेति भावः ॥ ४० ॥

इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥ ४१ ॥

इतीति । पुरुषाणामधिराजो नृप इति प्रगल्भं मृगाधिराजस्य वचो निशम्य श्रुत्वा गिरिशस्येश्वरस्य प्रभावात्प्रत्याहतास्त्रः कुण्ठितास्त्रः सन्नात्मनि विषयेऽवज्ञाम् अपमानं शिथिलीचकार तत्याजेत्यर्थः । अवज्ञातोऽहमिति निर्वेदं न प्रापेत्यर्थः । समानेषु हि क्षत्रियाभिमानिनां न सर्वेश्वरं प्रतीति भावः ॥ ४१ ॥

प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभङ्गे वितथप्रयत्नः ।
जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः ॥ ४२ ॥

प्रतीति । स एव पूर्वः प्रथमो भङ्गः प्रतिबन्धो यस्य तस्मिंस्तत्पूर्वभङ्गे इषुप्रयोगे वितथप्रयत्नो विफलप्रयासः । अत एव वज्रं कुलिशं मुमुक्षन्मोक्तुमिच्छन् । अस्तर्क इति छन्दः । 'रागद्विषेप्रमोचनपश्चिमेषनान्मकेश्वराशीति इति हलायुधः । त्र्यम्बकस्य यस्य स त्र्यम्बको हरः तस्य वीक्षणेन जडीकृतो निष्पन्दीकृतः वज्रं पाणौ यस्य स वज्रपाणिरिन्द्र । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्" इति पाणेः सप्तम्यन्तस्योत्तरनिपातः । स इव स्थितो नृप एनं सिंहं प्रत्यब्रवीच्च । 'नाहु सवज्र वज्रस्य स्तम्भयामास सम्प्रभुः इति महाभारते ॥४२॥

संरुद्धचेष्टस्य मृगेन्द्र कामं हास्यं वचस्तद्यदहं विवक्षुः ।
अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोऽभिधास्ये ॥ ४३ ॥

संरुद्धचेष्टस्येति । हे मृगेन्द्र ! संरुद्धचेष्टस्य प्रतिबद्धव्यापारस्य मम तद्वचो वाक्यं कामं हास्यं परिहसनीयम् । यद्वचः स त्वं मदीनेन इत्यादिकमहं विवक्षुर्वक्तुमिच्छुरस्मि । तर्हि तूष्णीं स्थीयतामित्याशङ्क्य वेश्वरभिहरत्वात्सर्वज्ञं त्वां प्रति न हास्यमित्याह—अन्तरिति । हि यतो भवान्प्राणभृतामन्तर्गतं हृद्गतं बाह्यदृष्ट्या बहिरप्रकाशितमेव सर्वं भावं वेद वेत्ति । "विदो लटो वा इति णलादेशः । अतोऽहमभिधास्ये वक्ष्यामि । वच इति प्रकृतं कर्म सम्बध्यते । अन्ये त्वीदृशवचनमाकर्ण्यासम्भावितार्थमेतदित्युपहसन्ति । अतस्तु मौनमेव युक्तम् । त्वं तु बाह्ममवसरोचितमेव एवाममिति जानासि । अतोऽभिधास्ये वक्ष्येऽहं विवक्षुरित्यर्थः॥४३॥

मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम् ॥४४॥

मान्य इति । प्रत्यवहारः प्रलयः । स्थावराणां तरुशैलादीनां जङ्गमानां

महदादीनां सर्गस्थितिप्रत्याहारेषु हेतुः स ईश्वरो मे मम मान्यः पूज्यः । अन-ल्पशासन इत्यर्थः । शासनं च 'शिरसामलङ्घ्यतमस्मदादिभिः' इत्युक्तम् । तर्हि विसृज्य गम्यताम् । नेत्याह—गुरोरपीति । पुरस्तान्मे मत्समक्षमाहिताग्नेर्गुरोर्धन-मपि गोरूपमुपेक्षणीयम् । आहिताग्नेरिति विशेषणेनानुपेक्षाकारणं हविःसाधनत्वं सूचयति ॥ ४४ ॥

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥४५॥

स इति । सोऽनागतसत्त्ववृत्तिस्त्वं मदीयेन देहेन शरीरस्य वृत्तिं जीवनं निर्वर्तयितुं सम्पादयितुं प्रसीद । दिनावसाने उत्सुको माता समागमिष्यतीत्युत्क-ण्ठितो बालवत्सो यस्याः सा महर्षेरियं धेनुर्विसृज्यताम् ॥ ४५ ॥

अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्ती किंचिद्विहस्यार्थपतिं बभाषे ॥४६॥

अथेति । अथ भूतेश्वरस्य पार्श्ववर्त्यनुचरः स सिंहो गिरेर्गह्वराणां गुहानाम् । 'देवखातबिले गुहा । गह्वरम्' इत्यमरः । अन्धकारं ध्वान्तं दंष्ट्रामयूखैः शकलानि खण्डानि कुर्वन् निरस्यन्नित्यर्थः । किंचिद्विहस्यार्थपतिं नृपं भूयो बभाषे । हास-कारणम् 'अल्पस्य हेतोर्बहु हातुमिच्छन्' इति वक्ष्यमाणं द्रष्टव्यम् ॥ ४६ ॥

एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥४७॥

एकातपत्रमिति । एकातपत्रमेकच्छत्रं जगतः प्रभुत्वं स्वामित्वम् । नवं वयो यौवनम् । इदं कान्तं रम्यं वपुश्च इत्येवं बहु अल्पस्य हेतोरल्पेन कारणेन अल्प-फलायेत्यर्थः । 'षष्ठी हेतुप्रयोगे' इति षष्ठी । हातुं त्यक्तुमिच्छंस्त्वं विचारे कार्या-कार्यविमर्शे मूढो मूर्खो मे मम प्रतिभासि ॥ ४७ ॥

भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते ।
जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ पितेव पासि ॥४८॥

भूतानुकम्पेति । तव भूतेष्वनुकम्पा कृपा चेत् । 'कृपा दयानुकम्पा स्यात्' इत्यमरः । इयं वर्तते चेदित्यर्थः । तर्हि त्वदन्ते तव नाशे सतीयमेका गौः अस्ति क्षेममस्या अस्तीति स्वस्तिमती भवेत् जीवेदित्यर्थः । 'स्वस्त्याशीः क्षेम पुण्यादौ' इत्यमरः । हे प्रजानाथ । जीवन्पुनः पितेव प्रजा उपप्लवेभ्यो विघ्नेभ्यः

तस्मिन्दयालुः कृपावान् भव । 'स्यादयालुः कारुणिकः' इत्यमरः । ननु मुख्यमुपेक्ष्यामुख्यशरीरे कोऽयमभिनिवेशोऽत्र आह—एकान्तेति । मद्विधानां मादृशानां विवेकिनामेकान्तविध्वंसिषु अवश्यविनाशिषु भौतिकेषु पृथिव्यादिभूतविकारेषु पिण्डेषु शरीरे अनास्था अनपेक्षैव । अतस्त्वामस्मदस्थानवस्थापेक्षासु कल्प्यते इति भावः ॥५७॥

सौहार्दादप्यनुपरोध्योऽस्मीत्याह—

सम्बन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ सङ्गतयोर्वनान्ते ।
तद्भूतनाथानुग नार्हसि त्वं सम्बन्धिनो मे प्रणयं विहन्तुम् ॥५८॥

सम्बन्धमिति । सम्बन्धं सख्यम् । आभाषणमालापः पूर्वं कारणं यस्य तमाहुः । 'स्यादाभाषणमालापः' इत्यमरः । स तादृक्सम्बन्धो वनान्ते सङ्गतयोर्नावावयोर्वृत्तो जातः । तत्तस्माद्धेतोर्हे भूतनाथानुग शिवानुचर । एतेन तस्य महत्त्वं सूचयति । अत एव सम्बन्धिनो मित्रस्य मे प्रणयं याच्ञाम् । प्रणयास्त्वमी । 'विश्रम्भयाच्ञाप्रेमाणः' इत्यमरः । हन्तुं नार्हसि ॥ ५८ ॥

तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः ।
स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥ ५९ ॥

तथेतीति । तथेति गामुक्तवते हरये सिंहाय । 'कपौ सिंहे सुवर्णे च वर्णे विष्णौ हरिं विदुः' इति शाश्वतः । सद्यस्तत्क्षणे प्रतिष्टम्भात्प्रतिबन्धाद्विमुक्तो बाहुर्यस्य स दिलीपः । न्यस्तशस्त्रस्त्यक्तायुधः सन् । स्वदेहम् । आमिषस्य मांसस्य । 'पललं क्रव्यमामिषम्' इत्यमरः । पिण्डं कवलमिव उपानयत्समर्पितवान् । एतेन निर्ममत्वमुक्तम् ॥ ५९ ॥

तस्मिन्क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥ ६० ॥

तस्मिन्निति । तस्मिन्क्षणे उग्रं सिंहनिपातमुत्पश्यत उत्प्रेक्षमाणस्य तर्कयतोऽवाङ्मुखस्याधोमुखस्य । 'स्यादवाङप्यधोमुखः' इत्यमरः । प्रजानां पालयितू राज्ञ उपर्युपरिष्टात् । 'उपर्युपरिष्टात्' इति निपातः । विद्याधराणां देवयोनिविशेषाणां हस्तैर्मुक्ता पुष्पवृष्टिः पपात ॥ ६० ॥

उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन् ।
ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहम् ॥६१॥

उत्तिष्ठेति । राजा अमृतमिवाचरतीत्यमृतायमानं तत् 'उपमानादाचारे'

इति क्रमात् । तत्र धात्वर्थः । उत्थितमुत्थानम् । 'हे वत्स ! उत्तिष्ठ' इति वचो निशम्य श्रुत्वा । उत्थितः सन् । वत्सेः पतुरम्बमम्बः । अग्रतोऽग्रे प्रस्रवं क्षीरस्रावोऽस्ति यस्याः सा तां प्रस्रविणीं गां स्वां जननीमिव ददर्श सिंहं न ददर्श ॥ ६१ ॥

तं विस्मितं धेनुरुवाच साधो मायां मयोद्भाव्य परीक्षितोऽसि ।
ऋषिप्रभावान्मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥६२॥

तमिति । विस्मितमाश्चर्यं गतम् । कर्तरि क्तः । तं दिलीपं धेनुरुवाच । किमुवाच—हे साधो ! मया मायामुद्भाव्य कल्पयित्वा परीक्षितोऽसि । ऋषिप्रभावान्मय्यन्तकोऽपि यमोऽपि प्रहर्तुं न प्रभुर्न समर्थः । अन्ये हिंस्रा घातुकाः । 'शरारुर्घातुको हिंस्रः' इत्यमरः । "नमिकम्पिस्म्यजसकमहिंसदीपो रः" इत्यनेन रप्रत्ययः । किमुत सुतरां न प्रभव इति योज्यम् । 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' इत्यमरः ॥ ६२ ॥

भक्त्या गुरौ मय्यनुकम्पया च प्रीतास्मि ते पुत्र वरं वृणीष्व ।
न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ॥ ६३ ॥

भक्त्येति । हे पुत्र ! गुरौ भक्त्या मय्यनुकम्पया च ते तुभ्यं प्रीतास्मि 'क्रियाग्रहणमपि कर्तव्यम्' इति चतुर्थी । वरं देवेभ्यो वरणीयमर्थम् । 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये' इत्यमरः । वृणीष्व स्वीकुरु । तथा हि—मां केवलानां पयसां प्रसूतिं कारणं मावेहि न विद्धि । किन्तु प्रसन्नां माम् । कामान् दोग्धीति कामदुघा तामवेहि । "दुहः कब्घश्च" इति कप्रत्ययः ॥ ६३ ॥

ततः समानीय स मानितार्थी हस्तौ स्वहस्तार्जितवीरशब्दः ।
वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे ॥ ६४ ॥

तत इति । ततो मानितार्थी । स्वहस्तार्जितो वीर इति शब्दो येन सः । एतेनास्य क्षत्रियत्वं दैन्यराहित्यं चोक्तम् । स राजा हस्तौ समानीय सन्धाय कृताञ्जलिः सन्नित्यर्थः । वंशस्य कर्तारं प्रवर्तयितारम् । अत एव रघुकुलमिति प्रसिद्धिः । अनन्तकीर्तिं स्थिरयशसं तनयं सुदक्षिणायां ययाचे ॥ ६४ ॥

सन्तानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा ।
दुग्ध्वा पयः पत्रपुटे मदीयं पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥ ६५ ॥

सन्तानेति । सा पयस्विनी गौः । सन्तानं कामयत इति सन्तानकामः । "कर्मण्यण्" । तस्मै राज्ञे तथेति कामयत इति कामो वरः कर्मणि घञ्प्रत्ययः । तं

प्रतिभुङ्क्ष्व प्रतिसम्म । हे पुत्र ! मदीयं पयः पत्रपुटे पत्रनिर्मिते पात्रे दुग्ध्वोपभुङ्क्ष्व । 'उपभुङ्क्ष्व' इति वा पाठः । 'पिब' इति तस्मान्निदेशात्पितवती ॥ ६५ ॥

वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः ।
औधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः ॥६६॥

वत्सस्येति । हे मातः वत्सस्य वत्सपीतस्य शेषम् वत्सपीतावशिष्टमित्यर्थः । होम एवार्थः । तस्य विधिरनुष्ठानम् । तस्य च शेषम् होमावशिष्टमित्यर्थः । तव ऊधसि भवमौधस्यं क्षीरम् । "शरीरावयवाच्च" इति यत्प्रत्ययः । रक्षितायाः उर्व्याः षष्ठांशं षष्ठभागमिव ऋषेरनुज्ञामधिगम्य उपभोक्तुमिच्छामि ॥ ६६ ॥

इत्थं क्षितीशेन वसिष्ठधेनुर्विज्ञापिता प्रीततरा बभूव ।
तदन्विता हैमवताच्च कुक्षेः प्रत्याययावाश्रममश्रमेण ॥ ६७ ॥

इत्थमिति । इत्थं क्षितीशेन विज्ञापिता वसिष्ठस्य धेनुः प्रीततरा । पूर्वं शुश्रूषया प्रीता सम्प्रत्यनया विज्ञापनया प्रीततरातिसन्तुष्टा बभूव । तदन्विता तेन दिलीपेनान्विता हैमवताद्धिमवत्सम्बन्धिनः कुक्षेर्गुहायाः सकाशादश्रमेणानायासेनाश्रमं प्रत्याययावागता च ॥ ६७ ॥

तस्याः प्रसन्नेन्दुमुखः प्रसादं गुरुर्नृपाणां गुरवे निवेद्य ।
प्रहर्षचिह्नानुमितं प्रियायै शशंस वाचा पुनरुक्तयेव ॥ ६८ ॥

तस्या इति । प्रसन्नेन्दुरिव मुखं यस्य स नृपाणां गुरुर्दिलीपः प्रहर्षचिह्नैर्मुखरागादिभिरनुमितमूहितं तस्या धेनोः प्रसादमनुग्रहं प्रहर्षचिह्नैरेव प्रकाशत्पुनरुक्तयेव वाचा गुरवे निवेद्य विज्ञाप्य पश्चात्प्रियायै शशंस । कथितस्यैव कथनं पुनरुक्तिः । न चेह तदस्ति । किन्तु चिह्नैः कथितप्रायत्वात्पुनरुक्तयेव स्थितयेत्युत्प्रेक्षा ॥ ६८ ॥

स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम् ।
पपौ वसिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्तमिवातितृष्णः ॥६९॥

स इति । अनिन्दितः प्रशस्तः आत्मा स्वभावो यस्य सः । सत्सु वत्सलः प्रेमवान् सद्वत्सलः । "वत्सांसाभ्यां कामबले" इति लच्प्रत्ययः । वसिष्ठेन कृताभ्यनुज्ञः कृतानुमतिः स राजा वत्सस्य हुतस्य चावशेषं पीतहुतावशिष्टं नन्दिन्याः स्तन्यं क्षीरम् । शुभ्रं मूर्तं परिच्छिन्नं यश इव अतितृष्णः सन्पपौ ॥ ६९ ॥

प्रातर्यथोक्तव्रतपारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य ।
तौ दम्पती स्वां प्रति राजधानीं प्रस्थापयामास वशी वसिष्ठः ॥७०॥

मातरिति । वसौ वसिष्ठः प्रातः । यथोक्तस्य पूर्वोक्तस्य व्रतस्य पारणारूप संस्कारमूला या पारणा तस्या अन्ते प्रास्थानिकं प्रस्थानकाले भवम्, तत्कालोचितमित्यर्थः । "कालाट्ठञ्" इति ठञ्प्रत्ययः । 'यथाकथञ्चिद्गुणवृत्त्यापि काले वर्तमानत्वात्प्रत्ययः स्मृतः' इति वृत्तिकारः । ईयते प्राप्यतेऽनेनेत्ययनं स्वस्त्ययनं शुभावहमाशीर्वादं प्रयुज्य । तौ दम्पती स्वां राजधानीं पुरीं प्रति प्रस्थापयामास ॥ ७० ॥

प्रदक्षिणीकृत्य हुतं हुताशमनन्तरं भर्तुररुन्धतीं च ।
धेनुं सवत्सां च नृपः प्रतस्थे सन्मङ्गलोदग्रतरप्रभावः ॥ ७१ ॥

प्रदक्षिणीकृत्येति । नृपो हुतं तर्पितम् । हुतमश्नातीति हुताशोऽग्निः । कर्मण्यण् । तं भर्तुर्मुनेरनन्तरम् प्रदक्षिणानन्तरमित्यर्थः । अरुन्धतीं च स वत्सां धेनुं च प्रदक्षिणीकृत्य । अपदक्षिणं प्रदक्षिणम् । 'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावः । ततश्च्विः । अप्रदक्षिणं प्रदक्षिणं सम्पद्यमानं कृत्वा प्रदक्षिणीकृत्य । सद्भिर्मङ्गलैः प्रास्थानिकैर्मङ्गलाचारैरुदग्रतरप्रभावः सन् । प्रतस्थे ॥ ७१ ॥

श्रोत्राभिरामध्वनिना रथेन स धर्मपत्नीसहितः सहिष्णुः ।
ययावनुद्घातसुखेन मार्गं स्वेनेव पूर्णेन मनोरथेन ॥ ७२ ॥

श्रोत्रेति । धर्मपत्नीसहितः सहिष्णुर्व्रतादिदुःखसहनशीलः स नृपः श्रोत्राभिरामध्वनिना कर्णमधुरस्वनेनानुद्घातः पाषाणादिप्रतिघातरहितः । अत एव सुखं यातीति सुखः तेन रथेन । स्वेन पूर्णेन सफलेन मनोरथेनेव । मार्गमध्वानं ययौ । मनोरथपक्षे—ध्वनिः श्रुतिः । अनुद्घातः प्रतिबन्धनिवृत्तिः ॥ ७२ ॥

तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्रतकर्शिताङ्गम् ।
नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम् ॥ ७३ ॥

तमिति । अदर्शनेन प्रवासनिमित्तेनाहितौत्सुक्यं जनितदर्शनोत्कण्ठम् । प्रजार्थेन सन्तानार्थेन व्रतेन नियमेन कर्शितं कृशीकृतमङ्गं यस्य तम् । नवोदयं नवाभ्युदयं प्रजास्तृप्तिमनाप्नुवद्भिरवितृप्तैर्नेत्रैः । ओषधीनां नाथं सोममिव । तं राजानं पपुः । अत्यास्थया ददृशुरित्यर्थः । चन्द्रपक्षे—अदर्शनं कलाक्षयनिमित्तम् । प्रजार्थं ओषधिताऽर्थम् । व्रतं दैवतान्यः कलादाननियमः । "तं च सोमं पपुर्देवाः पर्यायेणानुपूर्वशः" इति व्यासः । उदय आविर्भावः । अभ्युदयमानम् ॥ ७३ ॥

पुरन्दरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः ।
भुजे भुजङ्गेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥ ७४ ॥

पुरन्दरेति। पुरः पुरीरसुराणां दारयतीति पुरन्दरः शक्रः। 'पूःसर्वयोर्दारिसहोः' इति खच्प्रत्ययः। 'वाचंयमपुरन्दरौ च' इति मुमागमो निपातितः। तस्य श्रीरिव श्रीर्यस्य स नृपः पौरैरभिनन्द्यमानः सन्नुत्पताकमुच्छ्रितध्वजम्। 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्' इत्यमरः। पुरं प्रविश्य भुजङ्गेन्द्रेण समानसारे तुल्यबले। 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः। भुजे भूयो भूमेर्धुरमाससञ्ज स्थापितवान्॥ ७४॥

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम्।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः॥ ७५॥

अथेति। अथ द्यौरम्बरम्। 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः। अत्रेर्महर्षेर्नयनयोः समुत्थमुत्पन्नं नयनसमुत्थम्। 'आतश्चोपसर्गे' इति कप्रत्ययः। ज्योतिरिव चन्द्रमिवेत्यर्थः। 'अत्रजः स्यादत्रिनेत्रप्रसूतः' इति हलायुधः। चन्द्रस्यात्रिनेत्रोद्भूतत्वमुक्तं हरिवंशे– 'नेत्राभ्यां वारि सुस्राव दशधा द्योतयद्दिशः। तद्गर्भविधिना हृष्टा दिशो देव्यो दधुस्तदा॥ समेत्य धारयामासुर्न च ताः समशक्नुवन्। स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः॥ पपात भासयँल्लोकाञ्छीतांशुः सर्वभावनः॥' इति सुरसरिद्गङ्गा वह्निना निष्ठ्यूतं निक्षिप्तम्। 'ष्ठिवुक्लमुचमां शिति च' इत्यनेन निपूर्वात्ष्ठीवतेर्धातोरत्र ऊठ्। 'गुप्तगुह्यास्तनिष्ठ्यूताविद्धनिर्भेरिताः समाः' इत्यमरः। ऐशं तेजः स्कन्दमिव। अत्र रामायणम्—"ते गत्वा पर्वतं राम कैलासं धातुमण्डितम्। अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः॥ देवकार्यमिदं देव समाधत्स्व हुताशन। शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज॥ देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः। गर्भं धारय वै देवि देवतानामिदं प्रियम्॥ इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत्। स तस्या महिमां दृष्ट्वा समन्तादवकीर्य च॥ समन्ततस्तु तां देवीमभ्यषिञ्चत पावकः। सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन॥" इति। राज्ञी सुदक्षिणा नरपतेर्दिलीपस्य कुलभूत्यै सन्ततिलक्षणायै गुरुभिर्महद्भिर्लोकपालानामनुभावैस्तेजोभिरभिनिविष्टमनुप्रविष्टं गर्भमाधत्त दधावित्यर्थः। अत्र मनुः—'अष्टानां लोकपालानां वपुर्धारयते नृपः' इति। अत्र आधत्त इत्यनेन स्त्रीकर्तृकधारणमात्रमुच्यते। तथा मन्त्रे च दृश्यते– यथेयं पृथिवी मह्युत्ताना गर्भमादधे। एवं तं गर्भ-

प्रताप इति । अग्रे प्रतापस्तेजोविशेषः । 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः । ततः शब्दः सेनाकलकलः । तदनन्तरं परागो धूलिः । 'परागः पुष्परजसि धूलिस्नानीययोरपि' इति विश्वः । पश्चाद्रथादि रथाश्वादिकं चतुरङ्गबलम् । 'रथानीकम्' इति पाठ इतिशब्दाध्याहारेण योज्यम् । इतीत्थं चतुःस्कन्धेव चतुर्व्यूहेव । 'स्कन्धः प्रकाण्डे कायांसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च' इति हैमः । सा चमूर्बभौ ॥ १० ॥

मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः ।
विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥ ११ ॥

मरुपृष्ठानीति । स रघुः शक्तिमत्त्वात्समर्थत्वान्मरुपृष्ठानि निर्जलस्थानानि । 'समानौ मरुधन्वानौ' इत्यमरः । उदम्भांस्युद्भूतजलानि चकार । नाव्या नौभिस्तार्या नदी । 'नाव्यं त्रिलिङ्गं नौतार्ये' इत्यमरः । 'नौवयोधर्मविषमूलमूलसीतातुलाभ्य —' इत्यादिना यत्प्रत्ययः । सुप्रतराः सुखेन तार्याश्चकार । विपिनान्यरण्यानि । 'अटव्यरण्यं विपिनम्' इत्यमरः । प्रकाशानि निर्वृक्षाणि चकार । शक्तस्य सर्वत्र तस्यागम्यं किमपि नासीदिति भावः ॥ ११ ॥

स सेनां महतीं कर्षन्पूर्वसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥ १२ ॥

स इति । महतीं सेनां पूर्वसागरगामिनीं कर्षन्रघुः । हरस्य जटाभ्यो भ्रष्टां गङ्गां कर्षन् । तामपि पूर्वसागरगामिनीं भगीरथ इव बभौ । भगीरथो नाम कपिलकोपानलदग्धानां सागराणां यथा तत्पावनाय हरजटामध्याद्गङ्गां प्रवर्तयिता राजा । तत्सम्बन्धाद्गङ्गा च भागीरथी गीयते ॥ १२ ॥

त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः ।
तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः ॥ १३ ॥

त्याजितैरिति । 'फलं फले धने बीजे निष्पत्तौ भोगलाभयोः' इति केशवः । फलं धनम् । वृक्षपक्षे प्रसवं च । त्याजितैः । त्यजेर्ण्यन्ताद्द्विकर्मकादप्रधाने कर्मणि क्तः । उत्खातैः स्वपदात्प्रच्यावितैः अन्यत्रोत्पाटितैः । बहुधा भग्नै रणे जितैः । अन्यत्र छिन्नैश्च । पादपैर्दन्तिनो गजस्येव । तस्य रघोर्मार्ग उल्बणः प्रकाश आसीत् । 'प्रकाशं प्रकटं स्पष्टमुल्बणं विशदं स्फुटम्' इति यादवः ॥ १३ ॥

पौरस्त्यानेवमाक्रामंस्तांस्ताञ्जनपदाञ्जयी ।

तीर्णः । 'जनमाम्' इति केचित्पठन्ति । उत्कले राजभिरुदर्शितपथः सम्दर्पितमार्गः सन् । कलिङ्गाभिमुखो ययौ ॥ ३८ ॥

स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत् ।
अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥ ३९ ॥

स इति । स रघुर्महेन्द्रस्य कुलपर्वतविशेषस्य । "महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः" ॥ इति विष्णुपुराणात् । मूर्ध्नि तीक्ष्णं दुःसहं प्रतापम् । यन्ता सारथिर्गम्भीरवेदिनो द्विरदस्य गजविशेषस्य मूर्ध्नि तीक्ष्णं निशितमङ्कुशमिव न्यवेशयन्निक्षिप्तवान् । 'त्वग्भेदाच्छोणितस्रावान्मांसस्य क्रथनादपि । आत्मानं यो न जानाति स स्याद्गम्भीरवेदिता' ॥ इति राजपुत्रीये । ~~'चिरकालेन यो वेत्ति शिक्षां परिचितामपि । गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः'~~ ॥ इति मृगचर्मणि ॥ ३९ ॥

प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥ ४० ॥

प्रतिजग्राहेति । गजसाधनः सन् कलिङ्गानां राजा । "इयमुक्तयतः कलिङ्गसूर मगधात्" इत्यमैनाञ्प्रत्ययः । अस्त्रैरायुधैस्तं रघुम् । पक्षाणां छेदे उद्यतमुद्युक्तं शक्रं शिलावर्षी पर्वत इव । प्रतिजग्राह प्रत्यभियुक्तवान् ॥ ४० ॥

द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् ॥ ४१ ॥

द्विषामिति । काकुत्स्थो रघुस्तत्र महेन्द्राद्रौ द्विषां नाराचदुर्दिनं नाराचमयं बाणवर्षेणात्मं दुर्दिनम् । मेघच्छन्नेऽह्नि दुर्दिनमित्यमरः । विषह्य सहित्वा सन्मङ्गलस्नात इव विजयमङ्गलार्थमभिषिक्त इव जयश्रियं प्रतिपेदे प्राप । 'मङ्गलस्नानं तु सर्वौषधिस्नानं तन्मङ्गलस्नानमुदीरितम्' इति यादवः ॥ ४१ ॥

ताम्बूलीनां दलैस्तत्र रचितापानभूमयः ।
नारिकेलासवं योधाः शात्रवं च पपुर्यशः ॥ ४२ ॥

ताम्बूलीनामिति । तत्र महेन्द्राद्रौ युध्यन्त इति योधाः । पचाद्यच् । रचिताः कल्पिता आपानभूमयः पानगोष्ठीप्रदेशा यैस्ते तथोक्ताः सन्तो नारिकेलासवं नारिकेलमद्यं ताम्बूलीनां नागवल्लीनां दलैः पपुः । तत्र द्विरदरसेषु । शात्रवं यशश्च पपुः जह्रुरित्यर्थः ॥ ४२ ॥

पक्षिविशेषा यासु ताः । 'हैमो विशेषो हारीतो मद्गुः कारण्डवः प्लवः' इत्यमरः । मलयाद्रेरुपत्यका आसन्नभूमयः । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । "उपाधिभ्यां त्यकन्नासन्नारूढयोः" इत्यनेन त्यकन्प्रत्ययः । अध्युषिता उपत्यका-ध्युषितमित्यर्थः । "उपान्वध्याङ्वसः" इति कर्मत्वम् ॥ ४६ ॥

ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः ।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥ ४७ ॥

ससञ्जुरिति । अश्वैः क्षुण्णानामेलानामेलालतानामुत्पतिष्णव उत्पतनशीलाः । 'अलंकृञ्निराकृञ्—' इत्यादिनेष्णुच्प्रत्ययः । फलरेणवः फलरजांसि तुल्यगन्धिषु समानगन्धिषु सर्वधनीतिवदिनन्तो न बहुव्रीहिः । मत्तेभानां कटेषु ससञ्जुः सक्ताः । 'गण्डकटौ कटौ' इति कोशः ॥ ४७ ॥

भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम् ।
नास्रसत्करिणां ग्रैवं त्रिपदीच्छेदिनामपि ॥ ४८ ॥

भोगीति । चन्दनानां चन्दनद्रुमाणां भोगिवेष्टनमार्गेषु सर्पवेष्टनानिम्नेषु समर्पितं सञ्चितं त्रिपदीच्छेदिनो पादशृङ्खलाच्छेदनानामपि । 'त्रिपदी पादबन्धनम्' इति यादवः । करिणाम् । ग्रीवासु भवं ग्रैवं कण्ठबन्धनम् । 'ग्रीवाभ्योऽण् च' इत्यण्प्रत्ययः । नास्रसत् स्रस्तमभूत् । "द्युद्भ्यो लुङि" इति परस्मैपदे पुषादित्वादङ् । अनिदितां हल उपधायाः क्ङिति" इति नकारलोपः ॥ ४८ ॥

दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥ ४९ ॥

दिशीति । दक्षिणस्यां दिशि रवेरपि तेजो मन्दं भवति । लोहितादित्वात् क्यष्प्रत्ययः । 'वा क्यषः'' इत्यात्मनेपदम् । दक्षिणायने तेजोमान्द्यादिति भावः । तस्यामेव दिशि पाण्ड्याः पाण्डूनां जनपदानां राजानः पाण्ड्याः । 'पाण्डोर्ड्यण्' रघोः प्रतापं न विषेहिरे न सोढवन्तः । सूर्यविजयिनोऽपि निर्जितवानिति नायकस्य महानुत्कर्षो गम्यते ॥ ४९ ॥

ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः ।
ते निपत्य ददुस्तस्मै यशः स्वमिव सञ्चितम् ॥ ५० ॥

ताम्रेति । ते पाण्ड्यास्ताम्रपर्ण्या नद्या समेतस्य सङ्गतस्य महोदधेः सम्बन्धि सञ्चितं मुक्तासारं मौक्तिकवरम् । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु'

मुरलेति । मुरला नाम केरलदेशेषु काचिन्नदी । 'मुरलीमारुतोद्धूतम्' इति केचित्पठन्ति । तस्या मारुतेनोद्धूतमुत्थापितं कैतकं केतकीसम्बन्धि रजस्तदेव वारबाणानां रघुभटकञ्चुकानाम् । 'कञ्चुके वारबाणोऽस्त्री' इत्यमरः । अयत्नपटवासताम् अयत्नसिद्धपटवासपांसुत्वमगमत् । 'पिष्टातः पटवासकः' इत्यमरः ॥५५॥

अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः ।
वर्मभिः पवनोद्धूतराजतालीवनध्वनिः ॥ ५६ ॥

अभ्यभूयतेति । चरतां गच्छतां वाहानां वाजिनाम् । 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः । गात्रशिञ्जितैर्गात्रेषु शब्दायमानैः । कर्तरि क्तः । 'गात्रसिञ्जितैः' इति वा पाठः । गात्रैर्मर्मरितास्तैर्वर्मभिः क्तः । वर्मभिः कवचैः । 'मर्मर-' इति पाठे वाहानां गात्रशिञ्जितैर्मर्मरध्वनिभिरित्यर्थः । मर्मरो मर्मरायमाण इति च ध्वनिविशेषणम् । पवनेनोद्धूतानां कम्पितानां राजतालीवनानां ध्वनिरभ्यभूयत तिरस्कृतः ॥ ५६ ॥

खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु ।
कटेषु करिणां पेतुः पुंनागेभ्यः शिलीमुखाः ॥ ५७ ॥

खर्जूरीति । खर्जूरीणां तृणद्रुमविशेषाणाम् । 'खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः' इत्यमरः । स्कन्धेषु प्रकाण्डेषु । 'अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधेस्तरोः' इत्यमरः । नद्धानां बद्धानां करिणां मदोद्गारेण मदस्रावेण सुगन्धिषु । "गन्धस्येदुत्पूतिसुसुरभिभ्यः" इत्यनेनेकारः । कटेषु गण्डेषु पुंनागेभ्यो नागकेसरेभ्यः पुंनागपुष्पाणि विहाय । ल्यब्लोपे पञ्चमी । शिलीमुखा भ्रमराः पेतुः । 'अलिबाणौ शिलीमुखौ' इत्यमरः । ततोऽपि सौगन्ध्यातिशयादिति भावः ॥ ५७ ॥

अवकाशं किलोदन्वान्रामायाभ्यर्थितो ददौ ।
अपरान्तमहीपालव्याजेन रघवे करम् ॥ ५८ ॥

अवकाशमिति । उदन्वानुदधी रामाय जामदग्न्याय अभ्यर्थितो याचितः सन् । अवकाशं स्थानं ददौ किल । किलेति प्रसिद्धौ । रघवे त्वपरान्तमहीपालव्याजेन करं बलिं ददौ । 'बलिहस्तांशवः कराः' इत्यमरः । अपरान्तानां समुद्रमध्यदेशवर्तित्वात्तैर्दत्ते करे समुद्रदत्तत्वोपचारः । करदानं च भीत्या न तु याच्ञयेति रामाद्रघोरुत्कर्षः ॥ ५८ ॥

भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥ ६३ ॥

भल्लेति । स रघुर्भल्लापवर्जितैर्बाणविशेषकृत्तैः । 'भल्लो बाणभेदे भल्ल- इति यादवः । श्मश्रुलैः प्रवृद्धश्मश्रुभिः । 'सिध्मादिभ्यश्च' इति लच्प्रत्ययः । तेषां पाश्चात्यानां शिरोभिः । सरघाभिर्मधुमक्षिकाभिर्व्याप्तैः । 'सरघा मधुमक्षिका' इत्यमरः । क्षुद्राः सरघाः । 'क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका' इत्यमरः । क्षुद्राभिः कृतानि क्षौद्राणि मधूनि । 'मधु क्षौद्रं माक्षिकादि' इत्यमरः । 'क्षुद्राभ्रमरवटरपादपादञ्' इति संज्ञायामञ्प्रत्ययः । तेषां पटलैः समूहैरिव । 'पटलं तिलके नेत्ररोगे छन्दसि सञ्चये । पिटके परिवारे च' इति हैमः । महीं तस्तार—आच्छादयामास ॥ ६३ ॥

अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ६४ ॥

अपनीतेति । शेषा हतावशिष्टा अपनीतशिरस्त्राणा अपसारितशीर्षण्याः सन्तः । शीर्षकम् । 'शीर्षण्यं च शिरस्त्रे' इत्यमरः । शरण्यगतमप्येतत् । तं रघुं शरणं ययुः । तथाहि । महात्मनां संरम्भः कोपः । 'संरम्भः सम्भ्रमे कोपे' इति विश्वः । प्रणिपात । प्रणतिरेव प्रतीकारो यस्य स हि । महतां परकोपमोक्षमात्रे च खेदं न तु जीवितमिति भावः ॥ ६४ ॥

विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम् ।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ६५ ॥

विनयन्तेस्मेति । तस्य रघोर्योधा भटा आस्तीर्णान्यजिनरत्नानि चर्मश्रेष्ठानि यासु तासु द्राक्षावलयवतीषु भूमिषु । 'मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च' इत्यमरः । मधुभिर्द्राक्षाफलप्रकृतिकैर्मद्यैर्विजयश्रमं युद्धखेदं विनयन्ते स्म अपनीतवन्तः । 'कर्तृस्थे चाशरीरे कर्मणि' इत्यात्मनेपदम् । 'लट् स्मे' इति भूतार्थे लट् ॥ ६५ ॥

ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम् ।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्रसानिव ॥ ६६ ॥

तत इति । ततो रघुर्भास्वान्सूर्य इव शरैर्बाणैरुस्रैः किरणैरिव । 'किरणोस्र-मयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः । उदीच्यानुत्तरस्थान्नृपान्रसानुदकानीव

सत्त्वरमुद्धृतिविस्मृताः । मुहुः पुनः पुनः प्रायश्चाभीक्ष्णमसकृत्समाः इत्यमरः । तथा-प्युत्सेका गर्वास्तु न विविशुः । सम्पदि गर्वकारणे न जगर्वेत्यर्थः ॥ ७० ॥

ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः ।
वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥ ७१ ॥

तत इति । ततोऽनन्तरमश्वसाधनः सन् गौर्या गुरुं पितरं शैलं हिमवन्तम् । उद्धूतैरश्वखुरोद्धूतैर्धातुरेणुभिर्गैरिकादीनां रेणुभिस्तत्कूटांस्तस्य शृङ्गाणि । 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः । वर्धयन्निव आरुरोह । अत्युन्नतभूमिसर्पणाद्गिरिशिखर वृद्धिभ्रमो जात इति भावः ॥ ७१ ॥

शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसंभ्रमम् ।
गुहाशयानां सिंहानां परिवृत्यावलोकितम् ॥ ७२ ॥

शशंसेति । तुल्यसत्त्वानां धैर्यैः समानबलानाम् । गुहासु शेरत इति गुहाश-यास्तेषाम् । "अधिकरणे शेतेः" इत्यच्प्रत्ययः । दरी तु कन्दरो वास्त्री देवखातबिले गुहा इत्यमरः । सिंहानां हरीणाम् । 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः' इत्यमरः । कर्तॄणां परिवृत्य परावृत्यावलोकितं प्रसिद्धैव ग्रीवाभङ्गेनावलोकनं कर्तृ सैन्यघोषे सेनाकलकले संभ्रमकारणे सत्यप्यसंभ्रममन्तःक्षोभविरहितम् । अत्र प्रत्ययप्रतिपत्तेऽपि समास इष्यते । शशंस कथयामास सैन्येभ्य इत्यध्याहार्यते । नाम चेष्टितमेव मनोगतस्य ज्ञापकमिति भावः । अर्थान्तरन्यासे हेतुस्तुल्यसत्त्वानामिति । न हि समबलः समबलाद्बिभेतीति भावः ॥ ७२ ॥

भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः ।
गङ्गाशीकरिणो मार्गे मरुतस्तं सिषेविरे ॥ ७३ ॥

भूर्जेष्विति । भूर्जेषु भूर्जपत्रेषु । 'भूर्जपत्रो भुजो भूर्जो मृदुत्वक्चर्मिका मता' इति यादवः । मर्मरः शुष्कपर्णध्वनिः । 'मर्मरः शुष्कपर्णानाम्' इति यादवः । अयं च शुष्कादिपर्णध्वनिष्वपि वर्तते प्रयुज्यते च । "मर्मरैरगुरुधूपगन्धिभिः" इति । अतो मर्मरीभूताः । मर्मरध्वनिवन्तो भूता इत्यर्थः । कीचकानां वेणुविशेषाणां ध्वनिहेतवः श्रोत्रसुखावहा इति भावः । गङ्गाशीकरिणः शीतला इत्यर्थः । मरुतो वाता मार्गे तं सिषेविरे ॥ ७३ ॥

विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः ।
दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः ॥ ७४ ॥

विशश्रमुरिति । सैनिकाः सेनायां समवेताः । प्राग्वहतीयष्ठक्प्रत्ययः । नमेरूणां सुरपुंनागानां छायासु निषण्णानां रघुपरिक्षितानां मृगाणां कस्तूरीमृगाणां नाभिभिर्वासिताः सुरभिताः शिलाः अध्यास्याधिष्ठाय । 'अधिशीङ्स्थासां कर्म' इति कर्म । दूरस्थपरिश्रमा इत्यर्थः । विशश्रमुर्विश्रान्ताः ॥ ७४ ॥

सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ।
आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः ॥ ७५ ॥

सरलेति । सरलेषु देवदारुविशेषेष्वासक्तानि बद्धानि मातङ्गानां गजानाम् । ग्रीवासु भवानि ग्रैवेयाणि कण्ठशृङ्खलानि । 'ग्रीवाभ्योऽण्च' इति चकाराड्ढञ्प्रत्ययः । तेषु स्फुरितत्विषः प्रतिफलितभास ओषधयो ज्वलन्त्यो ज्योतिर्लताविशेषा नक्तं रात्रौ नेतुर्नायकस्य रघोरस्नेहदीपिकास्तैलनिरपेक्षाः प्रदीपा आसन् ॥ ७५ ॥

तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः ।
गजवर्ष्म किरातेभ्यः शशंसुर्देवदारवः ॥ ७६ ॥

तस्येति । तस्य रघोरुत्सृष्टेषूज्झितेषु निवासेषु सेनानिवेशेषु कण्ठरज्जुभिर्गजबन्धे क्षता निर्भिन्नास्त्वचो येषां ते देवदारवः किरातेभ्यो वनचरेभ्यो गजानां वर्ष्म प्रमाणम् । 'वर्ष्म देहप्रमाणयोः' इत्यमरः । शशंसुः कथितवन्तः । देवदारुस्कन्धव्रणस्थानैर्गजानामौन्नत्यमनुमीयत इत्यर्थः ॥ ७६ ॥

तत्र जन्यं रघोर्घोरं पर्वतीयैर्गणैरभूत् ।
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥ ७७ ॥

तत्रेति । तत्र हिमाद्रौ रघोः । पर्वते भवैः पर्वतीयैः । 'पर्वताच्च' इति छप्रत्ययः । गणैरुत्सवसंकेताख्यैः सप्तभिः सह । 'गणानुत्सवसंकेतानजयत्सप्त पाण्डवः' इति महाभारते । नाराचानां बाणविशेषाणां क्षेपणीयानां भिन्दिपालानामश्मनां च निष्पेषेण संघर्षेणोत्पतितोऽनलो यस्मिंस्तत्तथोक्तम् । 'क्षेपणीयो भिन्दिपालः लगुडो दीर्घो महाफलः' इति यादवः । घोरं भीमं जन्यं युद्धमभूत् । 'युद्धमायोधनं जन्यम्' इत्यमरः ॥ ७७ ॥

शरैरुत्सवसंकेतान्स कृत्वा विरतोत्सवान् ।
जयोदाहरणं बाह्वोर्गापयामास किन्नरान् ॥ ७८ ॥

शरैरिति । स रघुः शरैरुत्सवसंकेताख्यान् पर्वतीयान्विरतोत्सवान्कृत्वा जित्वेत्यर्थः । किन्नरान्बाह्वोः स्वभुजयोर्जयोदाहरणं जयस्यापदानं प्रबन्धविशेषं गापयामास ।

न्त्यक्त्वा शरणं गत इत्यर्थः । अत्रैवैर्नागैः । येऽस्यागुरुधूम्रतिरिक्तान्वपन्नस्तरीव । अत्यन्तमपि श्रद्धो रघुरिति भावः ॥ ८३ ॥

कामरूपेश्वरस्तस्य हेमपीठाधिदेवताम् ।
रत्नपुष्पोपहारेण छायामानर्च पादयोः ॥ ८४ ॥

कामरूपेति । कामरूपेश्वरो हेमपीठस्याधिदेवतां तस्य रघोः पादयोश्छायां कनकमयपादपीठव्यापिनीं कान्तिं रत्नान्येव पुष्पाणि तेषामुपहारेण समर्पणेनानर्च पूजयामास ॥ ८४ ॥

इति जित्वा दिशो जिष्णुर्न्यवर्तत रथोद्धतम् ।
रजो विश्रामयन्राज्ञां छत्रशून्येषु मौलिषु ॥ ८५ ॥

इतीति । जिष्णुर्जयशीलः । 'ग्लाजिस्थश्च ग्स्नुः' इति ग्स्नुप्रत्ययः । स रघुरितीत्थं दिशो जित्वा रथैरुद्धतं रजश्छत्रशून्येषु रघोरेकच्छत्रत्वादिति भावः । राज्ञां मौलिषु किरीटेषु । 'मौलिः किरीटे धम्मिल्ले चूडाकङ्केलिमूर्धसु' इति हैमः । विश्रामयन्, शमयन्नित्यर्थः । न्यवर्तत निवृत्तः ॥ ८५ ॥

स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ८६ ॥

स इति । स रघुः सर्वस्वं दक्षिणा यस्य तं सर्वस्वदक्षिणम् । 'विश्वजिति सर्ववेदसदक्षिण' इति श्रुतेः । विश्वजितं नाम यज्ञमाजह्रे आहृतवानित्यर्थः । युक्तं चैतदित्याह—सतां साधूनाम् । वारिमुचां मेघानामिव । आदानमर्जनं विसर्गाय त्यागाय हि, पात्रविनियोगायेत्यर्थः ॥ ८६ ॥

सत्रान्ते सचिवसखः पुरस्क्रियाभिर्गुर्वीभिः शमितपराजयव्यलीकान् ।
काकुत्स्थश्चिरविरहोत्सुकावरोधान्राजन्यान्स्वपुरनिवृत्तयेऽनुमेने ॥ ८७ ॥

सत्रान्त इति । काकुत्स्थो रघुः सत्रान्ते यज्ञान्ते । 'सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च' इत्यमरः । सचिवानामात्यानां सखेति सचिवसखः सन् । 'सचिवो मन्त्रेऽप्यमात्ये' इति हैमः । तेषामत्यन्तानुरक्तत्वद्योतनार्थं राज्ञः सचिवसख्यपदम् । 'राजाहःसखिभ्यष्टच्' । गुर्वीभिर्महतीभिः । 'गुर्वी महत्यां गुर्विण्यां पित्रादौ धर्मदेशके' इति हैमः । पुरस्क्रियाभिः पूजाभिः शमितं पराजयेन व्यलीकं दुःखं वैलक्ष्यं वा येषां तान् । 'दुःखे वैलक्ष्ये व्यलीकम्' इति यादवः । चिरविरहेणोत्सुका उत्कण्ठिता अवरोधा अन्तःपुराङ्गना येषां तान् । राज्ञोऽपत्यानि राजन्याः क्षत्रियास्तान् । "रा-

अभ्यपूरयत्” इत्यपपाठे मत्स्यसमः । 'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्' इत्यमरः । स्वपुरं प्रति निवृत्तये प्रतिगमनायानुमेनेऽनुज्ञातवान् । प्रार्थितमेव तमेतत् । तदुक्तम्—'स्त्री क्लीबो परिरक्षणतः प्रार्थितमेवम्' इति ॥ ८७ ॥

ते रेखाध्वजकुलिशातपत्रचिह्नं सम्राजश्चरणयुगं प्रसादलभ्यम् ।
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रुर्मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥ ८८ ॥

त इति । ते राजानः । रेखा एव ध्वजाश्च कुलिशानि चातपत्राणि च ध्वजादयस्ताः रेखा इत्यर्थः । तानि चिह्नानि यस्य तत्तथोक्तम् । प्रसादेनैव लभ्यं प्रसादलभ्यम् । सम्राजः सार्वभौमस्य रघोश्चरणयुगं प्रस्थाने प्रयाणसमये याः प्रणतयो नमस्कारास्ताभिः करणैः । अङ्गुलीषु मौलिषु केशबन्धेषु याः स्रजो माल्यानि ताभ्यश्च्युतैः मकरन्दैः पुष्परसैः । 'मकरन्दः पुष्परसः' इत्यमरः । रेणुभिः परागैश्च । परागः सुमनोरजः इत्यमरः । गौरं गौरवर्णं चक्रुः ॥ ८८ ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये रघुदिग्विजयो नाम चतुर्थः सर्गः ॥ ४ ॥

---

## पञ्चमः सर्गः ।

इन्दीवरदलश्यामामिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥

तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोशजातम् ।
उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ १ ॥

तमिति । विश्वजिति विश्वजिन्नाम्न्यध्वरे यज्ञे । 'यज्ञः सवोऽध्वरो यागः' इत्यमरः । निःशेषं विश्राणितं दत्तम् । 'श्रण दाने' चुरादिः । कोशानामर्थराशीनां जातं समूहो येन तं तथोक्तम् । 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः । 'जातं जनिसमूहयोः' इति शाश्वतः । एतेन कौत्सस्यानवसरप्राप्तिः सूच्यते । तं क्षितीशं रघुमुपात्तविद्यो लब्धविद्यो वरतन्तोः शिष्यः कौत्सः । 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण् । इञोऽपवादः । गुरुदक्षिणार्थी । "पुष्करादिभ्यो देशे" इत्यत्रार्थाच्चासंनिहिते इति वक्तव्यादिनिः । अप्रस्तावमेव इति भावः । प्रपेदे प्राप । अस्मि-

न्सर्गे वृत्तमुपजातिः । तल्लक्षणं तु—"स्यादिन्द्रवज्रा यदि तौ जगौ गः उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥" इति ॥ १ ॥

स मृण्मये वीतहिरण्मयत्वात्पात्रे निधायार्घ्यमनर्घशीलः ।
श्रुतप्रकाशं यशसा प्रकाशः प्रत्युज्जगामातिथिमातिथेयः ॥ २ ॥

स इति । अनर्घशीलोऽमूल्यस्वभावः असाधारणस्वभाव इत्यर्थः । 'मूल्ये पूजाविधावर्घः' इति 'शीलं स्वभावे सद्वृत्ते' इति चामरशाश्वतौ । यशसा कीर्त्या प्रकाशत इति प्रकाशः । पचाद्यच् । अतिथिषु साधुरातिथेयः । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ् । स रघुः हिरण्यस्य विकारो हिरण्मयम् । "दाण्डिनायन—" इत्यादिसूत्रेण निपातः । वीतहिरण्मयत्वादपगतसुवर्णपात्रत्वात् । यज्ञस्य सर्वस्वदक्षिणात्वादिति भावः । मृण्मये मृद्विकारे पात्रे । अर्घार्थमिदमर्घ्यम् । "पादार्घाभ्यां च" इति यत् । पूजार्थं द्रव्यं निधाय श्रुतेन शास्त्रेण प्रकाशं प्रसिद्धम् । श्रुतम् इति श्रुतं वेदशास्त्रम् । 'श्रुतं शास्त्रावधृतयोः' इत्यमरः । अतिथिमभ्यागतं कौत्सम् । 'अतिथिर्ना गृहागते' इत्यमरः । प्रत्युज्जगाम ॥ २ ॥

तमर्चयित्वा विधिवद्विधिज्ञस्तपोधनं मानधनाग्रयायी ।
विशांपतिर्विष्टरभाजमारात्कृताञ्जलिः कृत्यविदित्युवाच ॥ ३ ॥

तमिति । विधिज्ञः शास्त्रज्ञः । अकार्पण्ये प्रस्थानाभीरुरित्यर्थः । मानधनानामग्रयाय्यग्रेसरः अपयशोभीरुरित्यर्थः । कृत्यवित्कार्यज्ञः । आगमनप्रयोजनमवश्यं प्रष्टव्यमिति कृत्यवित् । विशाम्पतिर्मनुजेश्वरः । 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः । विष्टरभाजमासनगतम् उपविष्टमित्यर्थः । 'विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्' इत्यमरः । 'वृक्षासनयोर्विष्टरः' इति निपातः । तं तपोधनं विधिवद्विध्यर्हम् यथाशास्त्रमित्यर्थः । 'तदर्हम्' इति वतिप्रत्ययः । अर्चयित्वाऽऽरात्समीपे । 'आराद्दूरसमीपयोः' इत्यमरः । कृताञ्जलिः सन्निति वक्ष्यमाणप्रकारेणोवाच ॥ ३ ॥

अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते ।
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥ ४ ॥

अप्यग्रणीरिति । हे कुशाग्रबुद्धे सूक्ष्मबुद्धे । 'कुशाग्रीयमतिः प्रोक्तः सूक्ष्मदर्शी च यः पुमान्' इति हलायुधः । मन्त्रकृतां मन्त्रद्रष्टॄणाम् । "सुकर्मपापमन्त्र—" इत्यादिना क्विप् । ऋषीणामग्रणीः श्रेष्ठस्ते तव गुरुः कुशल्यपि क्षेमवान्किम् । अपि प्रश्ने ।

प्रश्रयः । तथापि इममेवमागमनमात्रेण मे मनो न तृप्तं न तुष्टम् । किन्तु निदेशक्रियया आज्ञाकरणेनोत्सुकं सोत्कण्ठम् । "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः । "प्रसितोत्सुकाभ्यां तृतीया च" इति सप्तम्यर्थे तृतीया । यद्वा गुरोरुपसर्गात्प्याज्ञया स्वतो वा । 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । मां सम्भावयितुं वनादागतोऽसि । गुर्वर्थं स्वार्थं वाऽऽगमनमित्यर्थः ॥ ११ ॥

इत्यर्घ्यपात्रानुमितव्ययस्य रघोरुदारामपि गां निशम्य ।
स्वार्थोपपत्तिं प्रति दुर्बलाशस्तमित्यवोचद्वरतन्तुशिष्यः ॥ १२ ॥

इतीति । अर्घ्यपात्रेण मृण्मयेनानुमितो व्ययः सर्वस्वदानं यस्य तस्य रघोरिति उदारमुदारार्थयुक्तमपि गां वाचम् । 'मनो निदेशक्रिययोत्सुकं मे' इत्येवंरूपाम् । 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्यमरः । निशम्य श्रुत्वा वरतन्तुशिष्यः कौत्सः स्वार्थोपपत्तिं स्वकार्यसिद्धिं प्रति दुर्बलाशः सन् मृण्मयपात्रदर्शनाच्छिन्नाभिलाषः सन् तं रघुमिति वक्ष्यमाणप्रकारेणावोचत् ॥ १२ ॥

सर्वत्र नो वार्तमवेहि राजन्नाथे कुतस्त्वय्यशुभं प्रजानाम् ।
सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा ॥ १३ ॥

सर्वत्रेति । हे राजन् ! त्वं सर्वत्र नोऽस्माकं वार्तं स्वास्थ्यमवेहि जानीहि । 'वार्तं फल्गुन्यरोगे च' इत्यमरः । 'वार्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम्' इति यादवः । न चैतदाश्चर्यमित्याह—नाथ इति । त्वयि नाथ ईश्वरे सति प्रजानामशुभं दुःखं कुतः । तथाहि । अर्थान्तरं न्यस्यति—सूर्य इत्यादिना । सूर्ये तपति प्रकाशमाने सति तमिस्रा तमस्ततिः । 'तमिस्रं तिमिरं रागे तमिस्रा तु तमस्ततौ । कृष्णपक्षनिशायां च' इति विश्वः । तमिस्रम् इति पाठे तमिस्रं तिमिरम् । 'तमिस्रं तिमिरं तमः' इत्यमरः । लोकस्य जनस्य । 'लोकस्तु भुवने जने' इत्यमरः । दृष्टेरावरणाय कथं कल्पेत दृष्टिमावरितुं नालमित्यर्थः । कृपेरलमर्थत्वात्तादर्थ्ये । "नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च" इत्यनेन चतुर्थी । अलमिति पर्याप्त्यर्थग्रहणम्" इति भगवान्भाष्यकारः । कल्पेत सम्पद्येतेत्यर्थः । क्लृपि सम्पद्यमाने चतुर्थीति वक्तव्यात् ॥ १३ ॥

'तवार्हतः—' इत्यादिनोक्तं वचनं चित्रमित्याह—

भक्तिः प्रतीक्ष्येषु कुलोचिता ते पूर्वान्महाभाग तयाऽतिशेषे ।
व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः ॥ १४ ॥

भक्तिरिति । प्रतीक्ष्येषु पूज्येषु । 'पूज्यः प्रतीक्ष्यः' इत्यमरः । भक्तिरनुरागविशेषस्तेन कुलोचिता कुलाभ्यस्ता । 'अभ्यस्तेऽप्युचितं न्याय्यम्' इति यादवः । हे महाभाग सार्वभौम । त्वया भवता पूर्वानतिशेषेऽप्यतिवर्तसे । किन्तु सर्वत्र वार्तं चेत्तर्हि कथं खेदखिन्न इव दृश्यसेऽत्र आह—व्यतीतेति । अहं व्यतीतकालोऽर्थिसमन्तकालः सत्वर्थिभावात्मानमभ्युपेत इति मे मम विषादः ॥ १४ ॥

शरीरमात्रेण नरेन्द्र तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः ।
आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः ॥ १५ ॥

शरीरमात्रेणेति । हे नरेन्द्र तीर्थे सत्पात्रे प्रतिपादिता दत्तर्द्धिर्येन स तथोक्तः । 'योनौ जलावतारे च मन्त्र्याद्युपाध्याययोरपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि' ॥ इति हलायुधः । शरीरमात्रेण तिष्ठन् । आरण्यका अरण्ये भवा मनुष्या मुनिप्रमुखाः । 'आरण्यान्मनुष्ये' इति वुञ्प्रत्ययः । तैरुपात्तं फलमेव प्रसूतिर्यस्य स स्तम्बेन काण्डेनावशिष्टः । प्रकृत्यादित्वात्तृतीया । नीवार इव । आभासि शोभसे ॥ १५ ॥

स्थाने भवानेकनराधिपः सन्नकिंचनत्वं मखजं व्यनक्ति ।
पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ १६ ॥

स्थान इति । भवानेकनराधिपः सार्वभौमः सन् । मखजं मखजन्यम् । न विद्यते किंचन यस्येत्यकिंचनः । 'मयूरव्यंसकादित्वात्समासः' । तस्य भावस्तत्त्वं निर्धनत्वं व्यनक्ति प्रकटयति । स्थाने युक्तम् । 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । तथा हि सुरैर्देवैः पर्यायेण क्रमेण पीतस्य हिमांशोः कलाक्षयो वृद्धेरुपचयाच्छ्लाघ्यतरो हि वरः खलु । 'मणिः शाणोल्लीढः समरविजयी हेतिविहतो मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः । कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥' इति भावः । अत्र कामन्दकः— "कर्मार्थं शोभते यस्य क्षीणत्वमपि शोभते । सुरैः पीतावशेषस्य इन्दोरिव विशेषितम्" ॥ इति ॥ १६ ॥

तदन्यतस्तावदनन्यकार्यो गुर्वर्थमाहर्तुमहं यतिष्ये ।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि ॥ १७ ॥

तदिति । तत्तस्मात्तावदनन्यकार्यो । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इति विश्वः । प्रयोजनान्तररहितोऽहमन्यतो वदान्यान्तराद्गुर्वर्थं गुरुधनमाहर्तुमर्जयितुं यतिष्ये उद्योक्ष्ये । ते तुभ्यं स्वस्ति शुभमस्तु । नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च

ब्दीयाभाव इत्यनेन चतुर्थी । तथा हि कातन्त्रेऽपि । 'पर्जन्यपतितं तोयं चातकस्या वलम्बनम्' इति हेतोरनन्यगतिकोऽपीत्यर्थः । निर्गलितोऽम्बुगर्भो यस्य तं शरद्घनं नार्दति न याचते । अर्द गतौ याचने च इति धातुः । याचनार्थे रुचेऽर्दमम्' इति यादव ॥ १७ ॥

एतावदुक्त्वा प्रतियातुकामं शिष्यं महर्षेर्नृपतिर्निषिध्य ।
किं वस्तु विद्वन्गुरवे प्रदेयं त्वया कियद्वेति तमन्वयुङ्क्त ॥ १८ ॥

एतावदिति । एतावद्वाक्यमुक्त्वा प्रतियातुं कामो यस्य तं प्रतियातुकामं गन्तुकामम् । "तुम्काममनसोरपि" इति मकारलोपः । महर्षेर्वरतन्तोः शिष्यं कौत्सं नृपती रघुर्निषिध्य निवार्य । हे विद्वन् ! त्वया गुरवे प्रदेयं वस्तु किं किमात्मकं कियत्किम्परिमाणं वा । इत्येवं तं कौत्समन्वयुङ्क्त अपृच्छत् । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः ॥ १८ ॥

ततो यथावद्विहिताध्वराय तस्मै स्मयावेशविवर्जिताय ।
वर्णाश्रमाणां गुरवे स वर्णी विचक्षणः प्रस्तुतमाचचक्षे ॥ १९ ॥

तत इति । ततो यथावद्यथार्हम् । अर्हार्थे वतिः । विहिताध्वराय विधिवदनुष्ठितयज्ञाय सदाचारायेत्यर्थः । स्मयावेशविवर्जिताय गर्वाभिनिवेशशून्याय अनुद्धतायेत्यर्थः । वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां च गुरवे नियामकाय । 'वर्णाः स्युर्ब्राह्मणादयः' इति । 'ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये । आश्रमोऽस्त्री' इति चामरः । सर्वकार्यनिर्वाहकायेत्यर्थः । तस्मै रघवे विचक्षणो विद्वान्वर्णी ब्रह्मचारी । 'वर्णिनो ब्रह्मचारिणः' इत्यमरः । 'वर्णाद्ब्रह्मचारिणि' इतीनिप्रत्ययः । स कौत्सः प्रस्तुतं प्रकृतमाचचक्षे ॥ १९ ॥

समाप्तविद्येन मया महर्षिर्विज्ञापितोऽभूद्गुरुदक्षिणायै ।
स मे चिरायास्खलितोपचारां तां भक्तिमेवागणयत्पुरस्तात् ॥ २० ॥

समाप्तेति । समाप्तविद्येन मया महर्षिर्गुरुदक्षिणायै गुरुदक्षिणास्वीकारार्थं विज्ञापितोऽभूत् । स च गुरुश्चिरायास्खलितोपचारां तां शुश्रूषां मे भक्तिमेव पुरस्तात्प्रथममगणयदसंख्यातवान् । भक्त्यैव सन्तुष्टः किं दक्षिणयेत्युक्तवानित्यर्थः । अथवा भक्तिमेव तां दक्षिणामगणयदिति योज्यम् ॥ १ ॥

निर्बन्धसंजातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाऽहमुक्तः ।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति ॥२१॥

निर्बन्धेति । निर्बन्धेन प्रार्थनातिशयेन संजातरुषा । संजातकोपेन गुरुणा । अर्थकार्श्यं दारिद्र्यमचिन्तयित्वाऽविचार्यैवाहम् । वित्तस्य धनस्य चतस्रो दश च कोटीश्चतुर्दश कोटीर्मे मह्यमाहरानयेति विद्यापरिसंख्यया विद्यापरिगणनानुसारेणैवोक्तः। अत्र मनुः — "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश" इति ॥ २१ ॥

सोऽहं सपर्याविधिभाजनेन मत्वा भवन्तं प्रभुशब्दशेषम् ।
अभ्युत्सहे संप्रति नोपरोद्धुमल्पेतरत्वाच्छ्रुतनिष्क्रयस्य ॥२२॥

सोऽहमिति । सोऽहं सपर्याविधिभाजनेनार्घ्यपात्रेण भवन्तं प्रभुशब्द एव शेषो यस्य तं मत्वा निःस्वं निश्चित्येत्यर्थः । श्रुतनिष्क्रयस्य विद्यामूल्यस्याल्पेतरत्वादतिमहत्त्वात्संप्रत्युपरोद्धुं निर्बन्धुं नाभ्युत्सहे ॥ २२ ॥

इत्थं द्विजेन द्विजराजकान्तिरावेदितो वेदविदां वरेण ।
एनोनिवृत्तेन्द्रियवृत्तिरेनं जगाद भूयो जगदेकनाथः ॥ २३ ॥

इत्थमिति । द्विजराजस्येव कान्तिर्यस्य स द्विजराजकान्तिः । 'द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः' इत्यमरः । 'तस्मात्सोमो राजा नो ब्राह्मणानाम्' इति श्रुतेः । द्विजराजकान्तिरित्येवार्थान्तराभिधेयत्वं धारयति । एनसः पापान्निवृत्तेन्द्रियवृत्तिर्यस्य स जगदेकनाथो रघुर्वेदविदां वरेण श्रेष्ठेन द्विजेन कौत्सेनेत्थमावेदितो निवेदितः सन् । एनं कौत्सं भूयः पुनर्जगाद ॥ २३ ॥

गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम् ।
गतो वदान्यान्तरमित्ययं मे मा भूत्परीवादनवावतारः ॥ २४ ॥

गुर्वर्थमिति । श्रुतस्य पारं दृष्टवाञ्छ्रुतपारदृश्वा । "दृशेः क्वनिप्" इति क्वनिप् । गुर्वर्थं गुरुदक्षिणार्थं यथा तथार्थी याचकः । विशेषणद्वयेनास्य सत्पात्रत्वमाह । रघोः सकाशात्कामं मनोरथमनवाप्याप्राप्य वदान्यान्तरं दात्रन्तरं गतः । 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः । इतीत्थंरूपोऽयं परीवादस्यापवादस्य नवो नूतनः प्रथमोऽवतार आविर्भावो मे मा भून्मास्तु । रघोरिति स्वनामग्रहणं प्रख्यापितत्यागेतार्थम् । तथा च—"सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते" इति भावः ॥ २४ ॥

स त्वं प्रशस्ते महिते मदीये वसंश्चतुर्थोऽग्निरिवाग्न्यगारे ।
द्वित्राण्यहान्यर्हसि सोढुमर्हन्यावद्यते साधयितुं त्वदर्थम् ॥ २५ ॥

स इति । स त्वं मदीये पूजिते प्रशस्ते अग्न्यगारे अग्निशालायां चतुर्थोऽग्निरिव वसन् द्वे त्रीणि वाऽहानि दिनानि । "संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये" इति बहुव्रीहिः । "बहुव्रीहौ संख्येये डजबहुगणात्" इति डच्प्रत्ययः समासान्तः । सोढुमर्हसि । हे अर्हन्मान्य । तावदहं तव प्रयोजनं साधयितुं यावद्यतिष्ये । 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट् ॥ २५ ॥

तथेति तस्यावितथं प्रतीतः प्रत्यग्रहीत्संगरमग्रजन्मा ।
गामात्तसारां रघुरप्यवेक्ष्य निष्क्रष्टुमर्थं चकमे कुबेरात् ॥ २६ ॥

तथेतीति । अग्रजन्मा ब्राह्मणः प्रतीतः प्रीतः सन् तस्य रघोरवितथममोघं संगरं प्रतिज्ञाम् । 'अथ प्रतिज्ञाजिसंविदापत्सु संगरः' इत्यमरः । 'तां चिरम्' इति केचित्पठन्ति । तथेति प्रत्यग्रहीत् । रघुरपि गां भूमिमात्तसारां गृहीतधनामवेक्ष्य कुबेरादर्थं निष्क्रष्टुमाहर्तुं चकमे इयेष ॥ २६ ॥

वसिष्ठमन्त्रोक्षणजात्प्रभावादुदन्वदाकाशमहीधरेषु ।
मरुत्सखस्येव बलाहकस्य गतिर्विजघ्ने न हि तद्रथस्य ॥ २७ ॥

वसिष्ठमन्त्रेति । वसिष्ठस्य मन्त्रैः प्रोक्षणमभिमन्त्र्य प्रोक्षणं तज्जात्प्रभावात्सामर्थ्याद्धेतोः । उदन्वदाकाशमहीधरेषूदन्वत्सु समुद्रेष्वाकाशे महीधरेषु वा । मरुत्सखस्य मरुतः सखेति तत्पुरुषो बहुव्रीहिर्वा । समासान्ताभावात् । ततो वायुसहायस्येति गम्यते । वारीणां वाहको बलाहकः । पृषोदरादित्वात्साधुः । तस्येव मेघस्येव । तद्रथस्य गतिः क्वापि न विजघ्ने न विहता हि ॥ २७ ॥

अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम् ।
सामन्तसम्भावनयैव धीरः कैलासनाथं तरसा जिगीषुः ॥ २८ ॥

अथेति । अथ प्रदोषे रजनीमुखे । तत्काले यात्रानिषेधस्याविधानात् । प्रयतो धीरो रघुः । सामन्तस्येव सामन्तं राजमात्रमिति सम्भावनयैव कैलासनाथं कुबेरं तरसा बलेन जिगीषुर्जेतुमिच्छुः सन् । कल्पितं सज्जितं शस्त्रं गर्भे यस्य तं रथमधिशिश्ये रथे शयितवानित्यर्थः । "अधिशीङ्स्थासां कर्म" इति कर्मत्वम् ॥ २८ ॥

प्रातः प्रयाणाभिमुखाय तस्मै सविस्मयाः कोषगृहे नियुक्ताः ।
हिरण्मयीं कोषगृहस्य मध्ये वृष्टिं शशंसुः पतितां नभस्तः ॥ २९ ॥

प्रातरिति । प्रातः प्रयाणाभिमुखाय तस्मै रघवे कोषगृहे नियुक्ता अधिकृता भाण्डागारिकाः सविस्मयाः सन्तः कोषगृहस्य मध्ये नभस्तो नभसः । पञ्चम्यास्त-

स्थिरप्रत्ययः। पतितां हिरण्मयीं सुवर्णमयीम्। 'दाण्डिनायन—' इत्यादिना निपातनात्साधु। वृष्टिं ववृषुः कथयामासुः ॥ २९ ॥

तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात्।
दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥ ३० ॥

तमिति। भूपती रघुः। अभियास्यमानादभियास्यमानात्कुबेराल्लब्धम्। वज्रेण कुलिशेन भिन्नं सुमेरोः पादं प्रत्यन्तपर्वतमिव स्थितम्। "पादाः प्रत्यन्तपर्वताः" इत्यमरः। रुक्मम् इति क्वचित्पाठः। तं भासुरं भास्वरम्। "भञ्जभासमिदो घुरच्" इति घुरच्। हेमराशिं समस्तं कृत्स्नमेव कौत्साय दिदेश ददौ। न तु चतुर्दशकोटिमात्रमित्येवमवधार्य ॥ ३० ॥

जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥ ३१ ॥

जनस्येति। तावर्थिदातारौ द्वावपि साकेतनिवासिनोऽयोध्यावासिनः। "साकेतः स्यादयोध्यायां कोसला नन्दिनी च सा" इति यादवः। जनस्याभिनन्द्यसत्त्वौ श्लाघ्यव्यवसायावभूताम्। "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः। कौ द्वौ। गुरुप्रदेयादधिकेऽर्थे निरिच्छमानो निःस्पृहोऽर्थी। अर्थिकामादर्थिमनोरथादधिकं प्रददातीति तथोक्तः। "आतोऽनुपसर्गे कः" इति कप्रत्ययः। नृपश्च ॥ ३१ ॥

अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना महर्षिः।
स्पृशन्करेणानतपूर्वकायं सम्प्रस्थितो वाचमुवाच कौत्सः ॥ ३२ ॥

अथेति। अथ प्रीतमना महर्षिः कौत्सः सम्प्रस्थितः प्रस्थास्यमानः सन्। "आशंसायां भूतवच्च" इति भविष्यदर्थे क्तः। उष्ट्राणां क्रमेलकानां वामीनां वडवानां च शतैर्वाहितार्थं प्रापितधनमानतपूर्वकायम्, विनयनम्रमित्यर्थः। प्रजेश्वरं रघुं करेण स्पृशन्वाचमुवाच ॥ ३२ ॥

किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम्।
अचिन्तनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धा ॥ ३३ ॥

किमिति। वृत्ते स्थितस्य। "व्यवहारार्जनमर्थस्य वर्धने पालने तथा। प्रत्याख्ये प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्" ॥ इति यमनन्दः। तस्मिन्वृत्ते स्थितस्य प्रजानामधिपतेर्नृपस्य भूः कामान्सूत इति कामसूरिति। "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्" इत्यादिना क्विप्। अत्र कामप्रसवे किं

चित्रम् । न चित्रमित्यर्थः । किन्तु तव प्रभावो महिमा अचिन्त्यनीयः येन त्वया धीरपि मनीषितमभिलषितं दुग्धा । दुहेर्द्विकर्मकत्वादप्रधाने कर्मणि क्तः । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः' इति स्मरणात् ॥ १३ ॥

आशास्यमन्यत्पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते ।
पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव ॥ १४ ॥

आशास्यमिति । सर्वाण्यपि श्रेयांसि शुभान्यधिजग्मुषः प्राप्तवतस्ते तवान्यत्पुत्रातिरिक्तमाशास्यमाशीर्विषयमाशीर्वा पुनरुक्तभूतम्, सर्वं सिद्धमित्यर्थः । किं त्वीड्यं स्तुत्यं भवन्तं भवतः पितेवात्मगुणानुरूपम् । त्वया तुल्यगुणमित्यर्थः । पुत्रं लभस्व प्राप्नुहि ॥ १४ ॥

इत्थं प्रयुज्याशिषमग्रजन्मा राज्ञे प्रतीयाय गुरोः सकाशम् ।
राज्ञापि लेभे सुतमाशु तस्मादालोकमर्कादिव जीवलोकः ॥ १५ ॥

इत्थमिति । अग्रजन्मा ब्राह्मणः । 'अग्रजन्मा द्विजे श्रेष्ठे भ्रातरि ब्रह्मणि स्मृतः' इति विश्वः । इत्थं राज्ञ आशिषं प्रयुज्य दत्त्वा गुरोः सकाशं समीपं प्रतीयाय प्राप । राज्ञापि । जीवलोको जीवसमूहः । 'जीवः प्राणिनि गीष्पतौ' इति विश्वः । अर्कादालोकं प्रकाशमिव । शीघ्रम् । 'चैतन्यम्' इति पाठे ज्ञानम् । तस्मादृषेराशु शीघ्रं सुतं लेभे प्राप ॥ १५ ॥

ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम् ।
अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकार ॥ १६ ॥

ब्राह्म इति । तस्य रघोर्देवी महिषी ब्राह्मे । "तस्येदम्" इत्यण् । ब्रह्मदेवताकेऽभिजिन्नामके मुहूर्ते किलेषदसमाप्तं कुमारं कुमारकल्पं स्कन्दसदृशम् । "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इत्यनेन कल्पप्प्रत्ययः । कुमारं पुत्रं सुषुवे । 'कुमारो बालके स्कन्दे' इति विश्वः । अतो ब्राह्ममुहूर्तोत्पन्नत्वात्पिता रघुर्ब्रह्मणो विधेरेव नाम्ना तमात्मजन्मानं पुत्रमजमजनामकं चकार । 'अजो हरौ हरे कामे विधौ छागे रघोः सुते' इति विश्वः ॥ १६ ॥

रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम् ।
न कारणात्स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ॥ १७ ॥

रूपमिति । ओजस्वि तेजस्वि बलिष्ठं वा । 'ओजस्तेजसि धातूनामवष्टम्भ

निर्मोकम्मापवनबोताय वर्नुरे इत्यमरः । अश्मभिः पाषाणैर्विलुण्ठितेन कुण्ठीकृतेन दन्तद्वयेन । ऋक्षवान्नाम कश्चित्तत्रत्यः पर्वतः । तस्य तटेषु वप्रक्रियां वप्रक्रीडाम् । उत्खातकेलिमित्यर्थः । 'उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते' इति शब्दार्णवे । संसन्कथयन् सूचयन्निवार्थः । युग्मम् ॥ ४४ ॥

संहारविक्षेपलघुक्रियेण हस्तेन तीराभिमुखः सशब्दम् ।
बभौ स भिन्दन्बृहतस्तरङ्गान्वार्यर्गलाभङ्ग इव प्रवृत्तः ॥ ४५ ॥

संहारेति । संहारविक्षेपयोः सङ्कोचनप्रसारणयोर्लघुक्रियेण क्षिप्रव्यापारेण । 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । हस्तेन शुण्डादण्डेन । 'हस्तौ नक्षत्रभेदे स्यात्करेभकरयोरपि' इति विश्वः । सशब्दं सघोषं बृहतस्तरङ्गान्भिन्दन्विदारयंस्तीराभिमुखः स गजः । वारी गजबन्धनस्थानम् । 'वारी तु गजबन्धनी' इति यादवः । वार्या अर्गलाया विष्कम्भस्य भङ्गे भञ्जने प्रवृत्त इव बभौ ॥ ४५ ॥

शैलोपमः शैवलमञ्जरीणां जालानि कर्षन्नुरसा स पश्चात् ।
पूर्वं तदुत्पीडितवारिराशिः सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६ ॥

शैलोपम इति । शैलोपमः स गजः शैवलमञ्जरीणां जालानि वृन्दान्युरसा कर्षन्पश्चात्तटमुत्ससर्प । पूर्वं तेन गजेनोत्पीडितो नुन्नो वारिराशिर्यस्य स सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६ ॥

तस्यैकनागस्य कपोलभित्त्योर्जलावगाहक्षणमात्रशान्ता ।
वन्येतरानेकपदर्शनेन पुनर्दिदीपे मददुर्दिनश्रीः ॥ ४७ ॥

तस्येति । तस्यैकनागस्यैकाकिनो गजस्य कपोलभित्त्योर्जलावगाहेन क्षणमात्रं शान्ता निवृत्ता मददुर्दिनश्रीर्मदवर्षलक्ष्मीर्वन्येतरेषां ग्राम्याणामनेकपानां द्विपानां दर्शनेन पुनर्दिदीपे ववृधे ॥ ४७ ॥

सप्तच्छदक्षीरकटुप्रवाहमसह्यमाघ्राय मदं तदीयम् ।
विलङ्घिताधोरणतीव्रयत्नाः सेनागजेन्द्रा विमुखा बभूवुः ॥ ४८ ॥

सप्तच्छदेति । सप्तच्छदस्य वृक्षविशेषस्य क्षीरवत्कटुः सुरभिः प्रवाहः प्रसारो यस्य तम् । 'कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्तिताः' इति यादवः । असह्यं तदीयं मदमाघ्राय सेनागजेन्द्राः । विलङ्घितस्तिरस्कृत आधोरणानां हस्तिपकानां तीव्रो महान्प्रयत्नो यैस्ते तथोक्ताः सन्तः । 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः । विमुखाः पराङ्मुखा बभूवुः ॥ ४८ ॥

स च्छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्यस्तरथं क्षणेन ।
रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार ॥४९॥

स इति । स गजः । छिन्ना बन्धा येषां ते छिन्नबन्धाः द्रुताः पलायिताः युग्यं वहन्तीति युग्या वाहा यस्मिंस्तत् स चासौ शून्यश्च तम् । अक्षा रथावयवदारुविशेषाः । "अक्षो रथस्यावयवे पाशकेऽप्यक्षमिन्द्रियम्" इति शाश्वतः । येषां ते भग्नाक्षा अत एव पर्यस्ताः पतिता रथा यस्मिंस्तम् । रामाणां स्त्रीणां परित्राणे संरक्षणे विहस्ता व्याकुलाः । "विहस्तव्याकुलौ समौ" इत्यमरः । योधा यस्मिंस्तं सेनानिवेशं शिबिरं क्षणेन तुमुलं सङ्कुलं चकार ॥ ४९ ॥

तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान्कुमारः ।
निवर्तयिष्यन्विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः ॥ ५० ॥

तमिति । नृपते राज्ञो वन्यः करी अवध्य इति श्रुतवाञ्छास्त्रज्ञः श्रुतवान्कुमार आपतन्तमभिपतन्तं तं गजं निवर्तयिष्यन्न तु प्रहरिष्यन् । अत एव नात्यायतमनतिदीर्घं यथा स्यात् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । कृष्टशार्ङ्ग ईषत् शार्ङ्गचापः विशिखेन बाणेन कुम्भे जघान । अत्र मनुः— "कस्मीभमो कुत्र- चन्नाप करिवधं न कुर्यात् । इदं हि शौर्ये करिणः" इति । अत एव "पुरावृत्त्य" इति योजनार्थमेव वध्यग्रहणं कृतम् ॥ ५० ॥

स विद्धमात्रः किल नागरूपमुत्सृज्य तद्विस्मितसैन्यदृष्टः ।
स्फुरत्प्रभामण्डलमध्यवर्ति कान्तं वपुर्व्योमचरं प्रपेदे ॥ ५१ ॥

स इति । स गजो विद्धमात्रस्ताडितमात्रः किल न तु प्रहृतस्तथापि नागरूपं गजशरीरमुत्सृज्य । तेन वृत्तान्तेन विस्मितैस्तद्विस्मितैः सैन्यैर्दृष्टः सन् । स्फुरतः प्रभामण्डलस्य मध्यवर्ति कान्तं मनोहरं व्योमचरं वपुः प्रपेदे प्राप ॥ ५१ ॥

अथ प्रभावोपनतैः कुमारं कल्पद्रुमोत्थैरवकीर्य पुष्पैः ।
उवाच वाग्मी दशनप्रभाभिः संवर्धितोरःस्थलतारहारः ॥५२॥

अथेति । अथ प्रभावेणोपनतैः प्राप्तैः कल्पद्रुमोत्थैः कल्पद्रुमोत्पन्नैः पुष्पैः कुमारमवकीर्याभिवृष्य दशनप्रभाभिर्दन्तकान्तिभिः संवर्धिता उरःस्थले ये तारहाराः स्थूलमुक्ताहारास्ते येन स तथोक्तः । वागस्य अस्तीति वाग्मी वक्ता । "वाचो ग्मिनिः" इति ग्मिनिप्रत्ययः । स पुरुष उवाच ॥ ५२ ॥

ताम्रोदरेषु पतितं तरुपल्लवेषु
निर्धौतहारगुलिकाविशदं हिमाम्भः ।
आभाति लब्धपरभागतयाऽधरोष्ठे
लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥ ७० ॥

ताम्रोदरेष्विति । ताम्रोदरेष्वरुणाभ्यन्तरेषु तरुपल्लवेषु पतितं निर्धौता या हारगुलिका मुक्तामणयस्तद्वद्विशदं हिमाम्भो लब्धपरभागतया लब्धोत्कर्षतया । 'परभागो गुणोत्कर्षे' इति यादवः । अधरोष्ठे त्वदीयं सदशनार्चिर्दन्तकान्तिसहितं लीलास्मितमिवाभाति शोभते ॥ ७० ॥

यावत्प्रतापनिधिराक्रमते न भानु-
रह्नाय तावदरुणेन तमो निरस्तम् ।
आयोधनाग्रसरतां त्वयि वीर याते
किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ॥ ७१ ॥

यावदिति । प्रतापनिधिस्तेजोनिधिर्भानुर्नाक्रमते नोद्गच्छति । 'आङ उद्गमने' इत्यात्मनेपदम् । तावत् भानावनुदित एवेत्यर्थः । अह्नाय झटिति । 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः । अरुणेनानूरुणा । 'सूरसूतोऽरुणोऽनूरुः' इत्यमरः । तमो निरस्तम् । तथा हि । हे वीर ! आयोधनेषु युद्धेषु । 'युद्धमायोधनं जन्यम्' इत्यमरः । अग्रसरतां पुरःसरतां याते सति तव गुरुः पिता रिपूंस्तव समुच्छिनत्ति किं वा नोच्छिनत्त्येवेत्यर्थः । न खलु योग्यपुत्रन्यस्तभारास्तत्प्रभवः स्वयं व्याप्रियन्त इति भावः ॥ ७१ ॥

शय्यां जहत्युभयपक्षविनीतनिद्राः
स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ।
येषां विभान्ति तरुणारुणरागयोगा-
द्भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥ ७२ ॥

शय्यामिति । उभाभ्यां पक्षाभ्यां पार्श्वाभ्यां विनीतापगता निद्रा येषां ते उभयपक्षविनीतनिद्राः । अत्र उभशब्दविषय उभयशब्दस्यास्य उभयशब्दप्रयोग एव साधुरित्यनुसन्धेयम् । यथाह कैयटः—"उभादुदात्तो नित्यमिति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषये उभशब्दस्य प्रयोगो माभूत् । उभयशब्दस्यैव यथा स्यात् । उभयपुत्र इत्यादि भवति" इति । मुखराण्युत्थानचलनाच्छब्दायमानानि शृङ्खलानि निगडानि कर्षन्तीति तथोक्तास्त एव स्तम्बे रमन्त इति स्तम्बेरमा हस्तिनः ।

स्तम्बकर्णयो रमिजपो इत्यच्प्रत्ययः। हस्तिसूचकयो इति वक्तव्यात्। इभः स्तम्बेरम पद्मी' इत्यमरः। 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। शय्यां जहति त्यजन्ति। येषां स्तम्बेरमाणाम्। दन्ताः कोशा इव दन्तकोशाः। तरुणारुणरागयोगाद्बालार्कसम्पर्काद्धेतोर्भिन्नाद्रिगैरिकतटा इव विभान्ति। धातुरक्ता इव भान्तीत्यर्थः ॥ ७२ ॥

दीर्घेष्वमी नियमिताः पटमण्डपेषु
निद्रां विहाय वनजाक्ष वनायुदेश्याः ।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥ ७३ ॥

दीर्घेष्विति । हे वनजाक्ष नीरजाक्ष । 'वनं नीरं वनं सत्त्वम्' इति शाश्वतः । दीर्घेषु पटमण्डपेषु नियमिता बद्धा वनायुदेश्या वनायुदेशे भवाः । 'पारसीका वनायुजाः' इति हलायुधः । अमी वाहा अश्वा निद्रां विहाय पुरोगतानि लेह्यान्यास्वाद्यानि सैन्धवशिलाशकलानि । 'सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे' इत्यमरः । वक्त्रोष्मणा मलिनयन्ति मलिनानि कुर्वन्ति । उक्तं च सिद्धयोगसङ्ग्रहे— 'पूर्वाह्णकाले वाहानां प्रायशो लवणं हितम् । शूलमोहविबन्धघ्नं लवणं सैन्धवं वरम्' इत्यादि ॥ ७३ ॥

भवति विरलभक्तिर्म्लानपुष्पोपहारः
स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः ।
अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्ता-
मनुवदति शुकस्ते मञ्जुवाक्पञ्जरस्थः ॥ ७४ ॥

भवतीति । म्लानः पुष्पोपहारः पुष्पपूजा म्लानत्वादेव विरलभक्तिर्विरलरचना भवति । प्रदीपाश्च स्वकिरणानां परिवेषस्य मण्डलस्योद्भेदेन स्फुरणेन शून्या भवन्ति निस्तेजस्का भवन्तीत्यर्थः । अपि चायं मञ्जुवाक्पञ्जरस्थः पञ्जरस्थस्ते तव शुकस्त्वत्प्रबोधनिमित्तेन प्रयुक्तामुच्चारितां नोऽस्माकं गिरं वाणीमनुवदति अनुकृत्य वदतीत्यर्थः । एवं प्रभातलिङ्गानि वर्तन्ते । अतः प्रबोद्धव्यमिति भावः ॥ ७४ ॥

इति विरचितवाग्भिर्वन्दिपुत्रैः कुमारः
सपदि विगतनिद्रस्तल्पमुज्झांचकार ।
मदपटु निनदद्भिर्बोधितो राजहंसैः
सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥ ७५ ॥

इतीति । इतीत्थं विरचितवाग्भिर्बन्दिपुत्रैर्वैतालिकैः । पुत्रग्रहणं समानवयस्कत्वद्योतनार्थम् । सपदि विगतनिद्रः कुमारः । तल्पं शय्याम् । 'तल्पं शय्याट्टदारेषु' इत्यमरः । उज्झाञ्चकार विससर्ज । 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययः । कथमिव मदेन पटु मधुरं निनदद्भी राजहंसैर्बोधितः सुप्रतीकाख्यः । सुरगज ऐशान दिग्गजः । गङ्गाया इदं गाङ्गम् । सैकतं पुलिनमिव । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः । 'सिकताशर्कराभ्यां च' इत्यण्प्रत्ययः । सुप्रतीकग्रहणं प्रायशः कैलासवासिनस्तस्य नित्यं गङ्गावगाहसम्भवादित्यनुसन्धेयम् ॥ ७५ ॥

> अथ विधिमवसाय्य शास्त्रदृष्टं
> दिवसमुखोचितमञ्चिताक्षिपक्ष्मा ।
> कुशलविरचितानुकूलवेषः
> क्षितिपसमाजमगात्स्वयंवरस्थम् ॥ ७६ ॥

अथेति । अथोत्थानानन्तरमञ्चितानि चारूण्यक्षिपक्ष्माणि यस्य सोऽजः शास्त्रदृष्टमवगतं दिवसमुखोचितं प्रातःकालोचितं विधिमनुष्ठानमवसाय्य समाप्य । स्यतेर्ण्यन्ताल्ल्यप् । कुशलैः प्रसाधनदक्षैर्विरचितोऽनुकूलः स्वयंवरोचितो वेषो नेपथ्यं यस्य स तथोक्तः । सन् स्वयंवरस्थं क्षितिपसमाजं राजसमूहमगात् । "इणो गा लुङि" इति गादेशः । पुष्पिताग्रावृत्तमेतत् । तल्लक्षणम्— 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' ॥ इति ॥ ७६ ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये अजस्वयंवराभिगमनो नाम पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः ।

> जाह्नवी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ ।
> कामारिं कामतातं वा कञ्चिद्देवं भजामहे ॥

> स तत्र मञ्चेषु मनोज्ञवेषान्सिंहासनस्थानुपचारवत्सु ।
> वैमानिकानां मरुतामपश्यदाकृष्टलीलान्नरलोकपालान् ॥ १ ॥

स इति । सोऽजस्तत्र स्थाने उपचारवत्सु राजोपचारवत्सु मञ्चेषु पर्यङ्केषु सिंहासनस्थान्मनोज्ञनेपथ्यान्वैमानिकानां विमानैश्चरताम् । "चरति" इति ठक्

स्थ । मञ्चान्मञ्चम्। मञ्चौ पर्यङ्कमञ्चौ इत्यमरः। आकृष्टलीलानाकृष्टगृहीतशोभान्न आकृष्टमरुल्लीलानित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । नरलोकं पालयन्तीति नरलोकपालाः । कर्मण्यण्प्रत्ययः । तान्भूपालानपश्यत् । सर्गेऽस्मिन्नुपजातिश्छन्दः ॥ १ ॥

रतेर्गृहीतानुनयेन कामं प्रत्यर्पितस्वाङ्गमिवेश्वरेण ।
काकुत्स्थमालोकयतां नृपाणां मनो बभूवेन्दुमतीनिराशम् ॥ २ ॥

रतेरिति । रतिः स्मरप्रियायां च रागे च सुरते स्मृता इति विश्वः । रतेः कामप्रियाया गृहीतानुनयेन स्वीकृतप्रार्थनेन गृहीतरत्यनुनयेनेत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । ईश्वरेण हरेण प्रत्यर्पितस्वाङ्गं काममिव स्थितं काकुत्स्थमजमालोकयतां नृपाणां मन इन्दुमतीनिराशं वैदर्भीनि स्पृहं बभूव । इन्दुमती सत्यतिमेनं विहाय नास्मान्वरिष्यतीति निश्चिक्युरित्यर्थः । तथाविधाकृतिसौन्दर्यमस्येति भावः ॥ २ ॥

वैदर्भनिर्दिष्टमसौ कुमारः क्लृप्तेन सोपानपथेन मञ्चम् ।
शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह ॥ ३ ॥

वैदर्भेति । असौ कुमारो वैदर्भेण भोजेन निर्दिष्टं प्रदर्शितं मञ्चं पर्यङ्कं क्लृप्तेन सुनिर्मितेन सोपानपथेन । मृगराजशावः सिंहपोतः । पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः इत्यमरः । शिलाविभङ्गैः शिलाभिस्तुङ्गमुन्नतं नगोत्सङ्गं शैलमध्यमिव । आरुरोह ॥ ३ ॥

परार्ध्यवर्णास्तरणोपपन्नमासेदिवान्रत्नवदासनं सः ।
भूयिष्ठमासीदुपमेयकान्तिर्मयूरपृष्ठाश्रयिणा गुहेन ॥ ४ ॥

परार्ध्येति । परार्ध्याः श्रेष्ठा वर्णा नीलपीतादयो यस्य तेनास्तरणेन कम्बलादिनोपपन्नं सङ्गतं रत्नवद्रत्नखचितमासनं सिंहासनमासेदिवानधिष्ठितवान्सोऽजः मयूरपृष्ठाश्रयिणा गुहेन सेनान्या सह । सेनानीरग्निभूर्गुहः इत्यमरः । भूयिष्ठमत्यर्थमुपमेयकान्तिरासीत् । मयूरस्य चित्ररूपत्वात्तत्साम्यं रत्नासनस्य । तदुपरि च तदुपासकयोरपीति भावः ॥ ४ ॥

तासु श्रिया राजपरम्परासु प्रभाविशेषोदयदुर्निरीक्ष्यः ।
सहस्रधात्मा व्यरुचद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव ॥ ५ ॥

तास्विति । तासु राजपरम्परासु श्रिया लक्ष्म्या कर्त्र्या पयोमुचां मेघानां पङ्क्तिषु विद्युतेव सहस्रधा विभक्तः तदीयेषु तत्स्थितेषु स्वयमेक एव प्रत्येकं सङ्क्रान्त इवेत्यर्थः । प्रभाविशेषस्योदयेनाविर्भावेन दुर्निरीक्ष्यो दुर्दर्शः आत्मा श्रियाः स्वरूपं व्यरुचदरोचिष्ट । द्युद्भ्यो लुङि इति परस्मैपदम् । पुषादित्वादङ्प्रत्ययः । तस्मिन्श्च

स्थम् । मञ्चतामगमन्पश्यम् । मञ्चौ पर्यङ्कमञ्चौ इत्यमरः । आकृष्टलीलान्नरलोकपालीमाक-
म् आकृष्टमञ्चाभिमानिस्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । नरलोकपालकत्वोपि
नरलोकपालाः । कर्मण्यण्प्रत्ययः । तान्भूपालानपश्यत् । सर्गेऽस्मिन्नुपजातिवृत्तम् ॥१॥

रतेर्गृहीतानुनयेन कामं प्रत्यर्पितस्वाङ्गमिवेश्वरेण ।
काकुत्स्थमालोकयतां नृपाणां मनो बभूवेन्दुमतीनिराशम् ॥ २ ॥

रतेरिति । रतिः स्मरप्रियायां च रागे च सुरते स्त्रियाम् इति विश्वः । रतेः कामप्रियाया गृहीतानुनयेन स्वीकृतप्रार्थनेन गृहीतरत्यनुनयेनेत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । ईश्वरेण हरेण प्रत्यर्पितस्वाङ्गं काममिव स्थितं काकुत्स्थमजमालोकयतां नृपाणां मन इन्दुमतीनिराशं वैदर्भीविषये निराशं बभूव । इन्दुमती सत्यविमेनं विहाय नास्मान्वरिष्यतीति निश्चिक्युरित्यर्थः । सर्वोऽपि तमसीन्दर्यमस्येति भावः ॥२॥

वैदर्भनिर्दिष्टमसौ कुमारः क्लृप्तेन सोपानपथेन मञ्चम् ।
शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह ॥ ३ ॥

वैदर्भेति । असौ कुमारो वैदर्भेण भोजेन निर्दिष्टं प्रदर्शितं मञ्चं पर्यङ्कं क्लृप्तेन सुघटितेन सोपानपथेन । मृगराजशावः सिंहपोतः । पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः इत्यमरः । शिलाविभङ्गैः शिलाभिस्तुङ्गमुन्नतं नगोत्सङ्गं शैलाग्रमिव । आरुरोह ॥३॥

परार्ध्यवर्णास्तरणोपपन्नमासेदिवान्रत्नवदासनं सः ।
भूयिष्ठमासीदुपमेयकान्तिर्मयूरपृष्ठाश्रयिणा गुहेन ॥ ४ ॥

परार्ध्येति । परार्ध्यः श्रेष्ठः वर्णो नीलपीतादयो यस्य तेनास्तरणेन कम्बलादिनोपपन्नं संवृतं रत्नवत्प्रशस्तरचितमासनं सिंहासनमासेदिवानधिष्ठितवान्सोऽजः मयूरपृष्ठाश्रयिणा गुहेन सेनान्या सह । सेनानीरग्निभूर्गुहः इत्यमरः । भूयिष्ठमत्यन्तमुपमेयकान्तिरासीत् । मयूरस्य विचित्रवर्णत्वात्साम्यं रत्नासनस्य । तद्वारा च तद्वत्कान्त्यारपीति भावः ॥ ४ ॥

तासु श्रिया राजपरम्परासु प्रभाविशेषोदयदुर्निरीक्ष्यः ।
सहस्रधात्मा व्यरुचद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव ॥ ५ ॥

तास्विति । तासु राजपरम्परासु श्रिया लक्ष्म्या कर्त्र्या पयोमुचां मेघानां पङ्क्तिषु विद्युतेव सहस्रधा विभक्तः तत्तेषु तदभिरिव स्वयमेक एव प्रत्येकं सङ्क्रान्तमिव । प्रभाविशेषस्योदयेनाविर्भावेन दुर्निरीक्ष्यो दुर्दर्श आत्मा श्रियः स्वरूपं व्यरुचत् । पुद्गलो मूर्तिर्नन्विति वरम्मेपरम् । पुनारिस्वाराद्प्रत्ययः । तस्मिन्न

मते प्रत्येकं सद्भावप्रसमीक्षतया तेषां किमपि सुरासर्वं तेन प्रादुरभूदित्यर्थः ॥ ५ ॥

तेषां महार्हासनसंस्थितानामुदारनेपथ्यभृतां स मध्ये ।
रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः ॥ ६ ॥

तेषामिति । महार्हासनसंस्थितानां श्रेष्ठसिंहासनस्थानाम् । उदारनेपथ्यभृता-मुज्ज्वलवेषधारिणां तेषां राज्ञां मध्ये । कल्पद्रुमाणां मध्ये पारिजात इव सुर द्रुमविशेष इव । 'पञ्चैते देवतरवो मन्दारः पारिजातकः । संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्' इत्यमरः । स रघुसूनुरेव धाम्ना तेजसा । 'भूम्ना' इति पाठे प्रतिपत्त्येत्यर्थः । रराज । अत्र कल्पद्रुमशब्दः पञ्चान्यतमविशेषवचन उपक्रम वन्ति मध्येऽपि इति व्युत्पत्त्या सुरद्रुममात्रोपलक्षकतया प्रयुक्त इत्यनुसन्धेयम् । कल्पा इति द्रुमाः कल्पद्रुमा इति विग्रहः ॥ ६ ॥

नेत्रव्रजाः पौरजनस्य तस्मिन्विहाय सर्वान्नृपतीन्निपेतुः ।
मदोत्कटे रेचितपुष्पवृक्षा गन्धद्विपे वन्य इव द्विरेफाः ॥ ७ ॥

नेत्रेति । पौरजनस्य नेत्रव्रजाः सर्वान्नृपतीन्विहाय तस्मिन्नजे निपेतुः । स एव सर्वोत्कर्षेण ददृश इत्यर्थः । कथमिव—मदोत्कटे मदेनोद्भिन्नगण्डे निर्झरमदे वा वन्ये गन्धद्विपे गन्धप्रधाने द्विपे गजे । रेचिता रिक्तीकृताः पुष्पाणां वृक्षा यैस्ते स्व-पुष्पाहता इत्यर्थः । द्विरेफा भ्रमरा इव । द्विपस्य वन्यविशेषणं द्विरेफाणां पुष्प रसस्यासम्भवार्थं कृतम् ॥ ७ ॥

त्रिभिर्विशेषमाह—

अथ स्तुते बन्दिभिरन्वयज्ञैः सोमार्कवंश्ये नरदेवलोके ।
संचारिते चागुरुसारयोनौ धूपे समुत्सर्पति वैजयन्तीः ॥ ८ ॥

अथेति । अथान्वयज्ञैः राजवंशाभिज्ञैर्बन्दिभिः स्तुतिपाठकैः । 'बन्दिनः स्तुतिपाठकाः' इत्यमरः । सोमार्कवंश्ये सोमसूर्यवंशभवे नरदेवलोके राजसमूहे स्तुते सति । विशेषेणोत्तरेण सम्बन्धः । एवमुत्तरत्रापि योज्यम् । संचारिते समन्तात्प्रचारिते । अगुरुसारो योनिः कारणं यस्य तस्मिन्धूपे च वैजयन्तीः पताकाः समुत्सर्पति सति अतिक्रम्य गच्छति सति ॥ ८ ॥

पुरोपकण्ठोपवनाश्रयाणां कलापिनामुद्धतनृत्यहेतौ ।
प्रध्मातशङ्खे परितो दिगन्तांस्तूर्यस्वने मूर्च्छति मङ्गलार्थे ॥ ९ ॥

पुरेति । किं च । पुरस्योपकण्ठे समीप उपवनान्याश्रयो येषां तेषां कलापिना-

बर्हिणामुद्धतनृत्यहेतौ मेघध्वनिसादृश्यात्ताण्डवकारणे । प्रध्माताः पूरिताः शङ्खा यत्र तस्मिन् मङ्गलार्थे मङ्गलप्रयोजनके । तूर्यस्वने वाद्यघोषे परितः सर्वतो दिगन्तान् मूर्च्छति व्याप्नुवति सति ॥ ९ ॥

मनुष्यवाह्यं चतुरस्रयानमध्यास्य कन्या परिवारशोभि ।
विवेश मञ्चान्तरराजमार्गं पतिंवरा कॢप्तविवाहवेषा ॥ १० ॥

मनुष्यवाह्यमिति । पतिं वृणोतीति पतिंवरा स्वयंवरा । अथ स्वयंवरा । पतिंवरा च वर्याऽपि इत्यमरः । संज्ञायां भृतृवृजिधारिसहितपिदमः इत्यनेन खच्प्रत्ययः । कॢप्तविवाहवेषा कन्येन्दुमती मनुष्यैर्वाह्यं परिवारेण परिजनेन शोभि चतुरस्रयानं चतुरस्रवाहनं शिबिकामध्यास्यारुह्य मञ्चान्तरे मञ्चमध्ये यो राजमार्गस्तं विवेश ॥ १० ॥

तस्मिन्विधानातिशये विधातुः कन्यामये नेत्रशतैकलक्ष्ये ।
निपेतुरन्तःकरणैर्नरेन्द्रा देहैः स्थिताः केवलमासनेषु ॥ ११ ॥

तस्मिन्निति । नेत्रशतानामेकलक्ष्ये एकशरव्ये कन्यामये कन्यारूपे तस्मिन्विधातुर्विधानातिशये सृष्टिविशेषे नरेन्द्रा अन्तःकरणैर्निपेतुः । आसनेषु देहैः केवलं देहेनैव स्थिताः । देहानपि विस्मृत्य तत्रैव दत्तचित्ता बभूवुरित्यर्थः । अत्र करणकर्तृके निपतने नरेन्द्राणां कर्तृत्वव्यपदेश आदरातिशयार्थः ॥ ११ ॥

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः ।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥ १२ ॥

तामिति । तामिन्दुमतीं प्रति । अभिव्यक्तमनोरथानां प्रकटाभिलाषाणां महीपतीनां राज्ञां प्रणयाग्रदूत्यः प्रणयः प्रार्थना प्रेम वा । प्रणयास्त्वमी । विस्रम्भयाच्ञाप्रेमाणः इत्यमरः । प्रणयस्याग्रदूत्य इव प्रथमदूतिका इव । प्रणयप्रकाशकत्वसाम्यादग्रदूतीत्यपदेशः । विविधाः शृङ्गारचेष्टाः शृङ्गारविकाराः पादपानां प्रवालशोभाः पल्लवसम्पद इव बभूवुः प्रादुर्बभूवुः । अत्र शृङ्गारलक्षणं रसाकरे– विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः । नीता सदस्यरस्यत्वं रतिः शृङ्गार उच्यते ॥ रतिरिच्छाविशेषः । तदुक्तम्– यूनोरन्योन्यविषयस्थायिनीच्छा रतिः स्मृता” इति । चेष्टाशब्देन तदनुभावविवक्षया उच्यन्ते । तेऽपि तत्रैवोक्ताः – भावं मनोगतं साक्षात्स्वहेतुं व्यञ्जयन्ति ये । तेऽनुभावा इति ख्याता भ्रूविक्षेपस्मितादयः ॥ ते चतुर्धा चित्तगात्रवागबुद्ध्यारम्भसम्भवा इति । तत्र गात्रारम्भसम्भवांश्चेष्टाशब्देनानुभावान् क्वचित् —इत्यादिभिः दर्शयिष्यति । शृङ्गाराभासश्चायम् । एकत्रैव प्रतिपादनात् । तदुक्तम् एकत्रैवा-

गुणपदस्तैस्तैर्भेदसमन्वयतोऽपि वा । योषितां बहुसविभ्रमाः सर्वाभिधा मताः इति ॥ १२ ॥

शृङ्गारचेष्टा बभूवुः इत्युक्तम् । ता एव दर्शयति—

कश्चित्कराभ्यामुपगूढनालमालोलपत्त्राभिहतद्विरेफम् ।
रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार ॥ १३ ॥

कश्चिदिति । कश्चिद्राजा कराभ्यां पाणिभ्यामुपगूढनालं गृहीतनालम् । आलोलैश्चञ्चलैः पत्त्रैरभिहतास्ताडिता द्विरेफा भ्रमरा येन तत्तथोक्तम् । रजोभिः परागैरन्तः परिवेषं मण्डलं बध्नातीत्यन्तःपरिवेषबन्धि । लीलारविन्दं भ्रमयाञ्चकार । भ्रमस्य लीलारविन्दवत्त्वयाऽहं भ्रमयितव्य इति नृपाभिप्रायः । हस्तपूर्वकोऽस्मत् पक्षपात इतीन्दुमत्यभिप्रायः ॥ १३ ॥

विस्रस्तमंसादपरो विलासी रत्नानुविद्धाङ्गदकोटिलग्नम् ।
प्रालम्बमुत्कृष्य यथावकाशं निनाय साचीकृतचारुवक्त्रः ॥ १४ ॥

विस्रस्तमिति । विलसनशीलो विलासी । 'वौ कषलसकत्थस्रम्भः' इति घिनुण्प्रत्ययः । अपरो राजांसाद्विस्रस्तं रत्नानुविद्धं रत्नखचितं यदङ्गदं केयूरं तस्य कोटिलग्नं प्रालम्बमृजुलम्बिनीं स्रजम् । 'प्रालम्बमृजुलम्बि स्यात्कण्ठात्' इत्यमरः । 'प्रावारम्' इति पाठे उत्तरीयं वस्त्रम् । उत्कृष्योद्धृत्य साचीकृतं तिर्यक्कृतं चारु वक्त्रं यस्य स तथोक्तः सन् यथावकाशं स्वस्थानं निनाय । प्रावारोत्क्षेपव्याजेनाहं त्वामेवं परिरप्स्य इति नृपाभिप्रायः । गोपनीयं किञ्चित्प्रदर्शितवानयं प्राकृत इतीन्दुमत्यभिप्रायः ॥ १४ ॥

आकुञ्चिताग्राङ्गुलिना ततोऽन्यः किञ्चित्समावर्जितनेत्रशोभः ।
तिर्यग्विसंसर्पिनखप्रभेण पादेन हैमं विलिलेख पीठम् ॥ १५ ॥

आकुञ्चितेति । ततः पूर्वोक्तादन्योऽपरो राजा किञ्चित्समावर्जितनेत्रशोभ ईषदधोन्यस्तनेत्रशोभः सन् । आकुञ्चिता आकुञ्चना अग्राङ्गुल्यो यस्य तेन तिर्यग्विसंसर्पिण्यो नखप्रभा यस्य तेन च पादेन हैमं हिरण्मयं पीठं पादपीठं विलिलेख लिखितवान् । पादाङ्गुलीनामाकुञ्चनेन त्वं मत्समीपमागच्छेति नृपाभिप्रायः । भूमिविलेखनोऽयममङ्गलकर इतीन्दुमत्याशयः । भूमिविलेखनं तु लक्ष्मीविनाशहेतुः ॥ १५ ॥

निवेश्य वामं भुजमासनार्धे तत्संनिवेशादधिकोन्नतांसः ।
कश्चिद्विवृत्तत्रिकभिन्नहारः सुहृत्समाभाषणतत्परोऽभूत् ॥ १६ ॥

निवेश्येति । कश्चिद्राजा वामं भुजमासनार्धे सिंहासनैकदेशे निवेश्य संस्था-

प्य तत्सन्निवेशात्तस्य नाभ्युन्नतस्य सन्निवेशात्संस्थापनाद्विभ्रष्टोऽसौ वामांस एव यस्य स तथोक्तः सन् । विवृत्ते परावृत्ते त्रिके त्रिकप्रदेशे निवद्धहारो कुण्ठितहारः सन् । 'पृष्ठवंशाधरे त्रिकम्' इत्यमरः । सुहृत्समाभाषणतत्परोऽभूत् । वामपार्श्ववर्तिनैव मित्रेण सम्भाषणे प्रवृत्त इत्यर्थः । अत एव विवृत्तत्रिकत्वं घटते । त्वया वामाङ्गे निवेशितया सह वार्तां करिष्य इति नृपाभिप्रायः । परं दृष्ट्वा पराङ्मुखोऽयं न मामीक्षत इतीन्दुमत्याभिप्रायः ॥ १६ ॥

विलासिनीविभ्रमदन्तपत्रमापाण्डुरं केतकबर्हमन्यः ।
प्रियानितम्बोचितसंनिवेशैर्विपाटयामास युवा नखाग्रैः ॥ १७ ॥

विलासिनीति । अन्यो युवा विलासिन्याः प्रियाया विभ्रमार्थं दन्तपत्रं दन्तपत्रभूतमापाण्डुरं केतकबर्हं केतकदलम् । 'दलेऽपि बर्हम्' इत्यमरः । प्रियानितम्ब उचितसंनिवेशैरभ्यस्तनिक्षेपैर्नखाग्रैर्विपाटयामास विदारयामास । अहं तव नितम्ब एवं नखाग्रपदान्यास्यामीति नृपाशयः । नृपस्यैवंरूपमसमपादमेतदस्यैव मम जयेति इतीन्दुमत्याशयः ॥ १७ ॥

कुशेशयाताम्रतलेन कश्चित्करेण रेखाध्वजलाञ्छनेन ।
रत्नाङ्गुलीयप्रभयानुविद्धानुदीरयामास सलीलमक्षान् ॥ १८ ॥

कुशेशयेति । कश्चिद्राजा कुशेशयं शतपत्रमिवाताम्रं तलं यस्य तेन । 'शत पत्रं कुशेशयम्' इत्यमरः । रेखारूपो ध्वजो लाञ्छनं यस्य तेन करेण । अङ्गुलीषु भवान्यङ्गुलीयान्यूर्मिकाः । 'अङ्गुलीयकमूर्मिका' इत्यमरः । 'जिह्वामूलाङ्गुलेश्छः' इति छप्रत्ययः । रत्नानामङ्गुलीयानि तेषां प्रभयानुविद्धान्व्याप्तानक्षान् । 'अक्षास्तु देवनाः पाशकाश्च ते' इत्यमरः । सलीलमुदीरयामासोत्क्षिक्षेप । अहं त्वया सह रंस्य इति नृपाभिप्रायः । अक्षचतुरो न पुरुषोऽयमितीन्दुमत्यभिप्रायः । "अक्षैर्मा दीव्येत्" इति श्रुतिनिषेधात् ॥ १८ ॥

कश्चिद्यथाभागमवस्थितेऽपि स्वसंनिवेशाद्व्यतिलङ्घिनीव ।
वज्रांशुगर्भाङ्गुलिरन्ध्रमेकं व्यापारयामास करं किरीटे ॥ १९ ॥

कश्चिदिति । कश्चिद्यथाभागं यथास्थानमवस्थितेऽपि स्वसंनिवेशाद्व्यतिलङ्घिनीव स्वस्थानाच्चलित इव किरीटे वज्राणां हीरकाणामंशवो गर्भे येषां तान्यङ्गुलिरन्ध्राणि यस्य तमेकं करं व्यापारयामास । किरीटधारणम शिरसि स्थितामपि त्वां भारं न मंस्य इति नृपाभिप्रायः । शिरसि भाण्डहारकोऽयमपलक्षण इतीन्दुमत्यभिप्रायः ॥ १९ ॥

ततो नृपाणां श्रुतवृत्तवंशा पुंवत्प्रगल्भा प्रतिहाररक्षी ।
प्राक्सन्निकर्षं मगधेश्वरस्य नीत्वा कुमारीमवदत्सुनन्दा ॥ २० ॥

तत इति । ततोऽनन्तरं नृपाणां श्रुतवृत्तवंशा, श्रुतनृपचरित्रकुलेत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । प्रगल्भा वाग्मिनी सुनन्दा सुनन्दाख्या प्रतिहारं रक्षतीति प्रतिहाररक्षी द्वारपालिका । कर्मण्यण्प्रत्ययः । 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः' इत्यनेन ङीप् । प्राक्प्रथमं कुमारीमिन्दुमतीं मगधेश्वरस्य सन्निकर्षं समीपं नीत्वा पुंवत्पुंसा तुल्यम् । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः । अवदत् ॥ २० ॥

असौ शरण्यः शरणोन्मुखानामगाधसत्त्वो मगधप्रतिष्ठः ।
राजा प्रजारञ्जनलब्धवर्णः परन्तपो नाम यथार्थनामा ॥ २१ ॥

असाविति । असौ राजा । असाविति पुरोवर्तिनो निर्देशः । एवमुत्तरत्रापि द्रष्टव्यम् । शरणोन्मुखानां शरणार्थिनां शरण्यः शरणे रक्षणे साधुः "तत्र साधुः" इति यत्प्रत्ययः । शरणं भवितुमर्हः शरण्य इति नाथनिरुक्तिर्निर्मूलैव । अगाधसत्त्वो गम्भीरस्वभावः । 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः' इति विश्वः । मगधा जनपदाः तेषु प्रतिष्ठास्पदं यस्य स मगधप्रतिष्ठः 'प्रतिष्ठा कृत्यमास्पदम्' इत्यमरः । प्रजारञ्जने लब्धवर्णो विचक्षणः । यद्वा प्रजारञ्जनेन लब्धकीर्तिरित्यर्थः । परान्शत्रूंस्तापयतीति परन्तपः परन्तपाख्यः । "द्विषत्परयोस्तापेः" इति खच्प्रत्ययः । "खचि ह्रस्वः" इति ह्रस्वः । अरुर्द्विषदजन्तस्य मुम् इति मुमागमः । नामेति प्रसिद्धौ यथार्थनामा शत्रुसन्तापनादिति भावः ॥ २१ ॥

कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसङ्कुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ २२ ॥

काममिति । अन्ये नृपाः कामं सहस्रशः सन्तु । भूमिमनेन राजन्वतीं शोभनराजवतीमाहुः, नैतावद्भिरित्यर्थः । सुराज्ञि देशे राजन्वान्स्यात्ततोऽन्यत्र राजवान् इत्यमरः । "राजन्वान्सौराज्ये" इति निपातनात्साधुः । तथा हि—नक्षत्रैरश्विन्यादिभिस्ताराभिः साधारणैर्ज्योतिर्भिर्ग्रहैर्भौमादिभिश्च सङ्कुलापि रात्रिश्चन्द्रमसैव ज्योतिरस्या अस्तीति ज्योतिष्मती प्राधान्येन ज्योतिषेत्यर्थः ॥ २२ ॥

क्रियाप्रबन्धादयमध्वराणामजस्रमाहूतसहस्रनेत्रः ।
शच्याश्चिरं पाण्डुकपोललम्बान्मन्दारशून्यानलकांश्चकार ॥ २३ ॥

र्थमिन्द्रपुरगामिनमश्वमस्याप्सरस इति प्रसिद्धिः । किञ्च । सुराङ्गनाभिर्गन्धर्वाङ्गनाभिः पाञ्चालिकाभिर्महर्षिभिर्विनीतनागः शिक्षितगजः । विशिष्टयेति शेषः । अत एव भूमिगतोऽप्यैन्द्रं पदमैश्वर्यं भुङ्क्ते भूमावेव स्वर्गसुखमनुभवतीत्यर्थः । गजाप्सरोभिरपि सेव्यत्वमैन्द्रपदसम्पदर्थः । पुरा किल कृतविन्ध्यावरण्यप्रमुखमवतीर्णं दिग्गजवर्गमालोक्य सममवाप्तैरिन्द्रात्प्रतिगृहीताऽऽसीद्देवर्षिभिः प्रणीतेन शास्त्रेण गजस्य लौहित्य भुवि सम्प्रदाय प्रावर्तयदिति कथा गीयते ॥ २७ ॥

अनेन पर्यासयताश्रुबिन्दून्मुक्ताफलस्थूलतमान्स्तनेषु ।
प्रत्यर्पिताः शत्रुविलासिनीनामुन्मुच्य सूत्रेण विनैव हाराः ॥२८॥

अनेनेति । शत्रुविलासिनीनां स्तनेषु मुक्ताफलस्थूलतमानश्रुबिन्दून् । अश्रु नयने धीयते इति विश्वः । पर्यासयता प्रस्तारयता । मर्दनपर्यस्थि भावः । अनेनागर्भेणोन्मुच्याक्षिप्य सूत्रेण विना हारा एव प्रत्यर्पिताः । अविच्छिन्नाश्रुबिन्दुप्रवर्तनात्सूत्रहारार्पणमेव हृत्स्थितैरुत्प्रेक्षा गम्यते ॥ २८ ॥

निसर्गभिन्नास्पदमेकसंस्थमस्मिन्द्वयं श्रीश्च सरस्वती च ।
कान्त्या गिरा सूनृतया च योग्या त्वमेव कल्याणि तयोस्तृतीया २९

निसर्गेति । निसर्गतः स्वभावतो भिन्नास्पदं भिन्नाश्रयम्, परस्परविरोधीत्यर्थः । श्रीश्च सरस्वती चेति द्वयमस्मिन्राजनि एकत्र संस्था स्थितिर्यस्य तदेकसंस्थम्, समवस्थितमित्यर्थः । हे कल्याणि ! 'बह्वादिभ्यश्च' इति ङीप् । कान्त्या सूनृतया सत्यप्रियया गिरा च योग्यासंभवात्त्वमेव तयोः श्रीसरस्वत्योस्तृतीया । समानगुणयोर्युवयोर्दाम्पत्यं युक्तं भवेदिति भावः । दक्षिणनायकत्वं चास्य गम्यते । तदुक्तम्— 'तुल्योऽनेकत्र दक्षिणः' इति ॥ २९ ॥

अथाङ्गराजादवतार्य चक्षुर्याहीति जन्यामवदत्कुमारी ।
नासौ न काम्यो न च वेद सम्यग्द्रष्टुं न सा भिन्नरुचिर्हि लोकः ॥३०॥

अथेति । अथ कुमारी अङ्गराजादवतार्य अपनीयेत्यर्थः । जन्यां मातृकल्पाम् । 'जन्या मातृवयस्यासुता' इति विश्वः । पुनर्जन्यां याहि गच्छेत्यवदत् । याहीति वज्यामवदत् इति पाठे जनी वधूः तामिन्त्रीति जन्या वधूजनः । तत्सख्या तामन्त गच्छेत्यवदत् । 'जन्यौ वरस्य भृत्यार्थे प्रियसुहृद्वरेऽपि च' इति विश्वः । अथवा जन्या वधूसखी । 'सख्याश्चापि वधूजनाः' इति केशवः । संज्ञायां जन्या— इति यत्प्रत्ययान्तो निपातः । यदत्राह इतिवृत्तः— जनी वधूं वहन्तीति जन्या जामातुर्व

असाविति । असाववन्तिनाथः । महाकालं नाम स्थानविशेषं । तदेव निकेतनं स्थानं यस्य तस्य चन्द्रमौलेरीश्वरस्यादूरे समीपे वसन् । अत एव हेतोस्तमिस्रपक्षे कृष्णपक्षेऽपि प्रियतमाभिः सह ज्योत्स्नावतः प्रदोषान् रात्रीर्निर्विशत्युपभुङ्क्ते किल । नित्यज्योत्स्नाविहारलाभोऽयमस्यैव नान्यस्येति भावः ॥ ३४ ॥

अनेन यूना सह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते ।
सिप्रातरङ्गानिलकम्पितासु विहर्तुमुद्यानपरम्परासु ॥ ३५ ॥

अनेनेति । रम्भे कदलीस्तम्भाविवोरू यस्याः सा रम्भोरूस्तस्याः सम्बोधनम् हे रम्भोरु । "ऊरूत्तरपदादौपम्ये" इत्यूङ्प्रत्ययः । नदीत्वाद्ध्रस्वः । यूनानेन पार्थिवेन सह । सिप्रा नाम तत्रत्या नदी । तस्यास्तरङ्गाणामनिलेन कम्पितासूद्यानानां परम्परासु पङ्क्तिषु विहर्तुं ते तव मनसो रुचिः कच्चित् । स्पृहास्ति किमित्यर्थः । "अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम्" इत्यमरः ॥ ३५ ॥

तस्मिन्नभिद्योतितबन्धुपद्मे प्रतापसंशोषितशत्रुपङ्के ।
बबन्ध सा नोत्तमसौकुमार्या कुमुद्वती भानुमतीव भावम् ॥ ३६ ॥

तस्मिन्निति । उत्तमसौकुमार्योत्कृष्टमार्दवा सेन्दुमती । अभिद्योतितान्युल्लसितानि बन्धव एव पद्मानि येन तस्मिन् । प्रतापेन तेजसा संशोषिताः शत्रव एव पङ्काः कर्दमा येन तस्मिन् । तस्मिन्नवन्तिनाथे कुमुद्वती । "कुमुदनडवेतसेभ्यो ड्मतुप्" इति ड्मतुप्प्रत्ययः । भानुमतीव भावं चित्तं न बबन्ध न तत्रानुरागमकरोदित्यर्थः । बन्धूनां पद्मत्वेन शत्रूणां पङ्कत्वेन च निरूपणं राज्ञः सूर्यसाम्यापादनम् ॥ ३६ ॥

तामग्रतस्तामरसान्तराभामनूपराजस्य गुणैरनूनाम् ।
विधाय सृष्टिं ललितां विधातुर्जगाद भूयः सुदतीं सुनन्दा ॥ ३७ ॥

तामिति । सुनन्दा तामरसान्तराभां पद्मोदरतुल्यकान्तिं कमलगौरीमित्यर्थः । गुणैरनूनाम्, अधिकामित्यर्थः । शोभना दन्ता यस्याः सा सुदती "वयसि दन्तस्य दतृ" इति दत्रादेशः "उगितश्च" इति ङीप् । तां प्रकृतां अभिमुखीं वा विधातुर्ललितां सृष्टिं मधुरनिर्माणं स्थितामित्यर्थः । अनुगता आपो येषु तेऽनूपा नाम देशाः । "ऋक्पूरब्धूःपथामानक्षे" इत्यप्रत्ययः समासान्तः "ऊदनोर्देशे" इत्यूदादेशः । तेषां राजोऽनूपराजस्याग्रतो विधाय व्यवस्थाप्य भूयः पुनर्जगाद ॥ ३७ ॥

संग्रामनिर्विष्टसहस्रबाहुरष्टादशद्वीपनिखातयूपः ।
अनन्यसाधारणराजशब्दो बभूव योगी किल कार्तवीर्यः ॥ ३८ ॥

सूचनपरिकल्पितं इत्यर्थः । अयं तु दीपराशिस्थाने क्वाचिदपि भिया त्यज्यत इति भावः ॥ ४१ ॥

आयोधने कृष्णगतिं सहायमवाप्य यः क्षत्रियकालरात्रिम् ।
धारां शितां रामपरश्वधस्य सम्भावयत्युत्पलपत्रसाराम् ॥ ४२ ॥

आयोधन इति । यः प्रतीप आयोधने युद्धे कृष्णगतिं कृष्णवर्त्मानमग्निं सहायमवाप्य क्षत्रियाणां कालरात्रिं संहाररात्रिमित्यर्थः । रामपरश्वधस्य जामदग्न्यपरशोः । 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः' इत्यमरः । शितां तीक्ष्णां धारां मुखम् । 'खड्गादीनां च निशितमुखे धारा प्रकीर्तिता' इति विश्वः । उत्पलपत्रस्य सार इव सारो यस्यास्तां तथाभूतां सम्भावयति मन्यते । एतन्नगरसमीपमवाप्ता-ग्निपूर्स्वयमेव वत्स्यामीति भगवता वैश्वानरेण दत्तवरोऽयं राजा । इदमन्ये च तथापरा घन्नवः इति भारते कथानुसन्धेया ॥ ४१ ॥

अस्याङ्कलक्ष्मीर्भव दीर्घबाहोर्माहिष्मतीवप्रनितम्बकाञ्चीम् ।
प्रासादजालैर्जलवेणिरम्यां रेवां यदि प्रेक्षितुमस्ति कामः ॥ ४३ ॥

अस्येति । दीर्घबाहोरस्य प्रतीपस्याङ्कलक्ष्मीर्भव एनं वृणीष्वेत्यर्थः । अनेनास्य विष्णुतुल्य इति व्यज्यते । माहिष्मती नामास्य नगरी । तस्या वप्रः प्राकार एव नितम्बः तस्य काञ्चीं रशनाभूताम् । जलानां वेण्या प्रवाहेण रम्याम् । 'ओघः प्रवाहो वेणी च' इति हलायुधः । रेवां नर्मदां प्रासादजालैर्गवाक्षैः । 'जालं समूह आनायो गवाक्षक्षारकावपि' इत्यमरः । प्रेक्षितुं काम इच्छास्ति यदि ॥ ४३ ॥

तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितीशो रुचये बभूव ।
शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्याप्तकलो नलिन्याः ॥ ४४ ॥

तस्या इति । प्रकामं प्रियं प्रीतिकरं दर्शनं यस्य सोऽपि दर्शनीयोऽपीत्यर्थः । स क्षितीशः । शरदा प्रमृष्टाम्बुधरोपरोधो निरस्तमेघावरणः पर्याप्तकलः पूर्णकलः शशी नलिन्या इव । तस्या इन्दुमत्या रुचये न बभूव रुचिं नाजीजनदित्यर्थः । लोके भिन्नरुचिरिति भावः ॥ ४४ ॥

सा शूरसेनाधिपतिं सुषेणमुद्दिश्य लोकान्तरगीतकीर्तिम् ।
आचारशुद्धोभयवंशदीपं शुद्धान्तरक्ष्या जगदे कुमारी ॥ ४५ ॥

सेति । लोकान्तरे स्वर्गादावपि गीतकीर्तिमाचारेण शुद्धयोरुभयोर्वंशयोर्माता-पितृकुलयोर्दीपं प्रकाशकम् । उभयवंशेत्यत्रोभयपक्षनिपातः । शूरसेनाख्यो देशाना-

मिताः स्वेदस्य लवा बिन्दवो यस्याः सा तथाभूता सती त्वं विहर मयेति ॥ ५७ ॥

प्रक्षोभिताप्याकृतिलोभनीया विदर्भराजावरजा तयैवम् ।
तस्मादपावर्तत दूरकृष्टा नीत्येव लक्ष्मीः प्रतिकूलदैवात् ॥ ५८ ॥

प्रक्षोभितेति । आकृत्या रूपेण लोभनीयाऽऽकर्षणीया न तु वर्णमात्रेणेत्यर्थः । विदर्भराजावरजा भोजानुजेन्दुमती तया सुनन्दयैव प्रक्षोभितापि प्रचोदितापि । नीत्या पुरुषकारेण दूरकृष्टा समानीता लक्ष्मीः प्रतिकूलं दैवं यस्य तस्मात्पुरुष इव । तस्मादपावर्तत प्रतिनिवृत्ता ॥ ५८ ॥

अथोरगाख्यस्य पुरस्य नाथं दौवारिकी देवसरूपमेत्य ।
इतश्चकोराक्षि विलोकयेति पूर्वानुशिष्टां निजगाद भोज्याम् ॥ ५९ ॥

अथेति । अथ द्वारे नियुक्ता दौवारिकी सुनन्दा । तत्र नियुक्त इति ठक्प्रत्ययः । 'द्वारादीनां च' इत्यैजागमः । आकारेण देवसरूपं देवतुल्यम् । उरगाख्यस्य पुरस्य पाण्ड्यदेशे कान्यकुब्जतीरवर्तिनागपुरस्य नाथमेत्य प्राप्य । हे चकोराक्षि ! इतो विलोकयेति पूर्वानुशिष्टां पूर्वमुक्तां भोजस्य राज्ञो गोत्रापत्यं स्त्रियं भोज्यामिन्दुमतीम् । 'क्रौड्यादिभ्यश्च' इत्यत्र 'भोजात्क्षत्रिये' इत्युपसंख्यानात्ष्यङ्प्रत्ययः । "यङश्चाप्" इति चाप् । निजगाद । इतो विलोकयेति पूर्वमुक्त्वा पश्चात्तत्त्वं निजगादेत्यर्थः ॥ ५९ ॥

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥ ६० ॥

पाण्ड्य इति । अंसयोरर्पिता लम्बन्त इति लम्बा हारा यस्य सः । हरिचन्दनेन गोशीर्षाख्येन चन्दनेन । 'तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्' इत्यमरः । क्लृप्ताङ्गरागः । अयं पाण्ड्यानां जनपदानां राजा पाण्ड्यः । "पाण्डोर्जनपदशब्दात्क्षत्रियाड्ड्यण्वक्तव्यः" इति ड्यण्प्रत्ययः । तस्य राजन्यपत्यवदिति वचनात् । बालातपेन रक्ता अरुणाः सानवो यस्य स सनिर्झरोद्गारः प्रवाहस्यन्दनसहितः । 'वारिप्रवाहो निर्झरो झरः' इत्यमरः । अद्रिराज इवाभाति ॥ ६० ॥

विन्ध्यस्य संस्तम्भयिता महाद्रेर्निःशेषपीतोज्झितसिन्धुराजः ।
प्रीत्याश्वमेधावभृथार्द्रमूर्तेः सौस्नातिको यस्य भवत्यगस्त्यः ॥ ६१ ॥

विन्ध्यस्येति । विन्ध्यस्य नाम्नो महाद्रेः । तपनमार्गनिरोधाय वर्धमानस्येति शेषः । संस्तम्भयिता निवारयिता निःशेषं पीतः उज्झितः पुनस्त्यक्तः सिन्धुराज

सम्मुखो येन सोऽश्वमेधस्तस्यावभृथे दीक्षान्ते कर्मणि । 'दीक्षान्तोऽवभृथो यज्ञे' इत्यमरः । आर्द्रमूर्तेः स्नातस्येत्यर्थः । यस्य पाण्ड्यस्य प्रीत्या स्नेहेन न तु चाटु प्रेम्णा । सुस्नातं पृच्छतीति सौस्नातिको भवति । 'पृच्छतौ सुस्नातादिभ्य इति वक्तव्यात्' ठक् ॥ ६१ ॥

अस्त्रं हरादाप्तवता दुरापं येनेन्द्रलोकावजयाय दृप्तः ।
पुरा जनस्थानविमर्दशङ्की सन्धाय लङ्काधिपतिः प्रतस्थे ॥ ६२ ॥

अस्त्रमिति । पुरा पूर्वं जनस्थानस्य खरालयस्य विमर्दशङ्की स उद्धतो लङ्काधिपती रावणो दुरापं दुर्लभमस्त्रं ब्रह्मशिरोनामकं हरादाप्तवता येन पाण्ड्येन सन्धाय । इन्द्रलोकस्य जयायेन्द्रलोकं जेतुं प्रतस्थे । इन्द्रविजयिनो रावणस्यापि विजेतेत्यर्थः ॥ ६२ ॥

अनेन पाणौ विधिवद्गृहीते महाकुलीनेन महीव गुर्वी ।
रत्नानुविद्धार्णवमेखलाया दिशः सपत्नी भव दक्षिणस्याः ॥ ६३ ॥

अनेनेति । महाकुलीनेन महाकुले जातेन । 'महाकुलादञ्खञौ' इति खप्रत्ययः । अनेन पाण्ड्येन पाणौ स्वकीये विधिवच्छास्त्रवद्गृहीते सति गुर्वी गुरुः । 'वोतो गुणवचनात्' इति ङीप् । महीव रत्नैरनुविद्धो व्याप्तोऽर्णव एव मेखला यस्यास्तस्याः । इदं विशेषणं महीमिन्दुमतीं च योज्यम् । दक्षिणस्या दिशः सपत्नी भव । अनेन सपत्न्यन्तराभावो व्यज्यते ॥ ६३ ॥

ताम्बूलवल्लीपरिणद्धपूगास्वेलालतालिङ्गितचन्दनासु ।
तमालपत्रास्तरणासु रन्तुं प्रसीद शश्वन्मलयस्थलीषु ॥ ६४ ॥

ताम्बूलेति । ताम्बूलवल्लीभिर्नागवल्लीभिः परिणद्धाः परिरब्धाः पूगाः क्रमुका यासु तासु । 'ताम्बूलवल्ली ताम्बूली नागवल्ल्यपि' इति 'घोण्टा तु पूगः क्रमुकः' इति चामरः । एलालताभिरालिङ्गिताश्चन्दना मलयजा यासु तासु । 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः । तमालस्य तापिच्छस्य पत्राण्येवास्तरणानि यासु तासु । 'कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि' इत्यमरः । मलयस्थलीषु शश्वन्मुहुः सदा वा रन्तुं प्रसीदानुकूला भव ॥ ६४ ॥

इन्दीवरश्यामतनुर्नृपोऽसौ त्वं रोचनागौरशरीरयष्टिः ।
अन्योन्यशोभापरिवृद्धये वां योगस्तडित्तोयदयोरिवास्तु ॥ ६५ ॥

इन्दीवरेति । असौ नृप इन्दीवरश्यामतनुः । त्वं रोचना गोरोचनेव गौरी

शरीरयष्टिर्यस्याः सा । ततस्तत्क्षणोभयोर्मिपुन्मेषयोरिव वा कुचयोर्लोमः समासमोऽन्योन्यपशोभायाः परिस्खलितोऽस्तु ॥ ६५ ॥

स्वसुर्विदर्भाधिपतेस्तदीयो लेभेऽन्तरं चेतसि नोपदेशः ।
दिवाकरादर्शनबद्धकोशे नक्षत्रनाथांशुरिवारविन्दे ॥ ६६ ॥

स्वसुरिति । विदर्भाधिपतेर्भोजस्य स्वसुरिन्दुमत्याश्चेतसि तदीयः सुनन्दासम्बन्ध्युपदेशो वाक्यम् । दिवाकरस्यादर्शनेन बद्धकोशे मुकुलितेऽरविन्दे नक्षत्रनाथांशुश्चन्द्रकिरण इव । अन्तरमवकाशं न लेभे ॥ ६६ ॥

सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥ ६७ ॥

सञ्चारिणीति । पतिंवरा सम्मुखी रात्रौ सञ्चारिणी दीपशिखेव यं यं भूमिपालं व्यतीयायातीत्य गता स स भूमिपालः स एव इत्यर्थः । 'नित्यवीप्सयोः' इति वीप्सायां द्विर्वचनम् । नरेन्द्रमार्गे राजपथेऽट्टः प्रासाद इव । 'स्यादट्टः क्षौममस्त्रियाम्' इत्यमरः । विवर्णभावं विच्छायत्वम् । अट्टस्तु तमोहतत्वम् । प्रपेदे ॥ ६७ ॥

तस्यां रघोः सूनुरुपस्थितायां वृणीत मां नेति समाकुलोऽभूत् ।
वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद ॥ ६८ ॥

तस्यामिति । तस्यामिन्दुमत्यामुपस्थितायामासन्नायां सत्यां रघोः सूनुरजो मां वृणीत न वेति समाकुलः संशयितोऽभूत् । अथास्याजस्य वामेतरो वामादितरो दक्षिणो बाहुः । केयूरं बध्यतेऽस्मिन्निति केयूरबन्धोऽङ्गदस्थानं तस्योच्छ्वसितैः स्फुरणैः संशयं नुनोद ॥ ६८ ॥

तं प्राप्य सर्वावयवानवद्यं व्यावर्ततान्योपगमात्कुमारी ।
न हि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदालिः ॥ ६९ ॥

तमिति । कुमारी सर्वेष्ववयवेष्वनवद्यमदोषं तमजं प्राप्य अन्योपगमादन्यराजोपगमाद्व्यावर्तत निवृत्ता । तथा हि । षट्पदालिः भ्रमरपङ्क्तिः । प्रफुल्लतीति प्रफुल्लं विकसितम्, पुष्पितमित्यर्थः । प्रपूर्वात्फुल्लतेः पचाद्यच् । फलतेस्तु प्रफुल्लमिति पठितव्यम् । 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः' इति निपातनात् । सोपसर्गस्यापि न कदाचिदनुपसर्गत्वमुक्तं प्राक् । सहकारं चूतविशेषमेत्य । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः । वृक्षान्तरं न काङ्क्षति । न हि सर्वोत्कृष्टवस्तुप्राप्तेऽपि वस्त्वन्तरस्याभिलाषः स्यादित्यर्थः ॥ ६९ ॥

ऐरावतेति । स ककुत्स्थ ऐरावतस्य सर्वमत्तास्फालनेन ताडनेन विश्लथं शिथिलमूक्तैर्महेन्द्रमातुरेन सर्वैरेव संयुगमर्धमर्धेनकामरत्नां भेत्री मूर्तिमुपेयुषोऽपि प्राप्तस्यापि योजमिदं इन्द्रस्यार्धमासमस्यार्धासनम् । अर्धं नपुंसकम्' इति समासस्त्र यथितत्वाबाधितत्वात् । 'स्पारिम्नम्पासेन भावासत्व" इत्यस्यासेन व्यवमेऽपि यत्नम् । न केवल महीसहायभारिन एव तस्य ककुत्समाश्रयत् । किन्तु शिवरूपधारिणो-ऽपीन्द्रस्यार्धासनमित्यपिशब्दार्थः । अथवा अर्धासनमपीत्यपेरन्वय ॥ ७३ ॥

जातः कुले तस्य किलोरुकीर्तिः कुलप्रदीपो नृपतिर्दिलीपः ।
अतिष्ठदेकोनशतक्रतुत्वे शक्राभ्यसूयाविनिवृत्तये यः ॥ ७४ ॥

जात इति । उरुकीर्तिर्महायशाः कुलप्रदीपो वंशप्रदीपको दिलीपो नृपतिस्तस्य ककुत्स्थस्य कुले जातः किल । यो दिलीपः शक्राभ्यसूयाविनिवृत्तये च स्थित करोति माया । एकेनोनाः शतं क्रतवो यस्य स एकोनशतक्रतुः । तस्य भावे तत्त्वे ऽतिष्ठत् । इन्द्रस्तये शततमं क्रतुमनपेक्षितवानित्यर्थः ॥ ७४ ॥

यस्मिन्महीं शासति वाणिनीनां निद्रां विहारार्धपथे गतानाम् ।
वातोऽपि नास्रंसयदंशुकानि को लम्बयेदाहरणाय हस्तम् ॥ ७५ ॥

यस्मिन्निति । यस्मिन्दिलीपे महीं शासति सति । विहारस्थानेति विहारः क्रीडा-स्थानम् । तस्यार्धपथे निद्रां गतानां वाणिनीनां मत्ताङ्गनानाम् । 'वाणिनी नर्तकीमत्तयोर्विदग्धवनितासु च' इति विश्वः । वाणिन्यौ नर्तकीदूत्यौ' इत्यमरश्च । अंशुकानि वस्त्राणि वातोऽपि नास्रंसयन्नाचालयत् । आहरणायापहर्तुं को हस्तं लम्बयेत् । तस्यात्र्यधिकस्नानकृत्येमवसधारः प्रजा इत्यर्थः । अर्धं चासौ पन्थाश्चेति विग्रहः । समप्रविभागे प्रमाणाभावादेकदेशिसमासः ॥ ७५ ॥

पुत्रो रघुस्तस्य पदं प्रशास्ति महाक्रतोर्विश्वजितः प्रयोक्ता ।
चतुर्दिगावर्जितसम्भृतां यो मृत्पात्रशेषामकरोद्विभूतिम् ॥ ७६ ॥

पुत्र इति । विश्वजितो नाम महाक्रतोः प्रयोक्ताऽनुष्ठाता तस्य दिलीपस्य पुत्रो रघुः पदं पैत्र्यमेव प्रशास्ति पालयति । यो रघुश्चतसृभ्यो दिग्भ्य आवर्जिताऽऽहृता सम्भृता सम्यक्सञ्चिता च या चतुर्दिगावर्जितसम्भृता तां विभूतिं सम्पदं मृत्पात्रमेव शेषो यस्यास्तामकरोत् । विश्वजिद्यागस्य सर्वस्वदक्षिणाकत्वादित्यर्थः ॥ ७६ ॥

आरूढमद्रीनुदधीन्वितीर्णं भुजङ्गमानां वसतिं प्रविष्टम् ।
ऊर्ध्वं गतं यस्य न चानुबन्धि यशः परिच्छेत्तुमियत्तयालम् ॥ ७७ ॥

आरूढमिति । किं च । अद्रीनारूढम् । उदधीन्वितीर्णमवगाढम् सकलभू-पालव्यापकमित्यर्थः । भुजङ्गमानां वसतिं पातालं प्रविष्टम् । ऊर्ध्वं स्वर्गादिकं गतं व्याप्तम् इत्थं सर्वदिग्व्यापीत्यर्थः । अनुबन्धातीत्यनुबन्धि चाविच्छेदि । अतएव व्यापकं चेत्यर्थः । अत एवंभूतं यस्य यश इयत्तया ईदृक्तया केनचिन्मा-नेन परिच्छेत्तुं परिमातुं नालं न शक्यम् ॥ ७७ ॥

असौ कुमारस्तमजोऽनुजातस्त्रिविष्टपस्येव पतिं जयन्तः ।
गुर्वीं धुरं यो भुवनस्य पित्रा धुर्येण दम्यः सदृशं बिभर्ति ॥ ७८ ॥

असावित्ति । असावयमजाख्यः कुमारः । त्रिविष्टपस्य स्वर्गस्य पतिमिन्द्रं जयन्त इव । जयन्तः पाकशासनिः इत्यमरः । तं रघुमनुजातः तस्माज्जात इत्यर्थः । तज्जातोऽपि तदनुजातो भवति जन्यजनकयोरानन्तर्यात् । "गत्यर्थाकर्मकश्लिषशी-ङ्स्थासवसजनरुहजीर्यतिभ्यश्च इति क्तः । सोपसर्गत्वात्सकर्मकत्वम् । आह चात्र सूत्रे वृत्तिकार – श्लिषादयः सोपसर्गाः सकर्मका भवन्ति' इति । दम्यः शिक्षणीयावस्थः योऽजो गुर्वीं भुवनस्य धुरं धुर्येण धुरन्धरेण विनीतस्येव पित्रा सदृशं तुल्यं यथा तथा बिभर्ति । यथा कश्चिद्दम्यतरोऽपि धुर्येण महोक्षेण समं महतीं धु-रमुपमालङ्कारो व्यज्यते । दम्यवत्सतरौ समौ इत्यमरः ॥ ७८ ॥

कुलेन कान्त्या वयसा नवेन गुणैश्च तैस्तैर्विनयप्रधानैः ।
त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन ॥ ७९ ॥

कुलेनेति । कुलेन कान्त्या अवस्थया नवेन वयसा यौवनेन विनयः प्रधानं येषां तैस्तैर्गुणैः श्रुतशीलादिभिरात्मनस्तुल्यं स्वानुरूपममुमजं त्वं वृणीष्व । किं बहुना । रत्नं काञ्चनेन समागच्छतु संगच्छताम् । प्रार्थनायां लोट् । रत्नकाञ्चनयोरि-वान्योन्यानुरूपत्वादुभयोः समागमः प्रार्थ्यत इत्यर्थः ॥ ७९ ॥

ततः सुनन्दावचनावसाने लज्जां तनूकृत्य नरेन्द्रकन्या ।
दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत्संवरणस्रजेव ॥ ८० ॥

तत इति । ततः सुनन्दावचनस्यावसानेऽन्ते नरेन्द्रकन्येन्दुमती लज्जां तनू-कृत्य संकोच्य प्रसादेन मनःप्रसादेनामलया प्रसन्नया दृष्ट्या संवरणस्य स्रजा स्वयं-वरणार्थं स्रजेव कुमारमजं प्रत्यग्रहीत्स्वीचकार । अन्यत्रानुरागमपश्यन्तीत्यर्थः ॥ ८० ॥

सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम् ।
रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः ॥ ८१ ॥

सेनानिवेशान्पृथिवीक्षितोऽपि जग्मुर्विभातग्रहमन्दभासः ।
भोज्यां प्रति व्यर्थमनोरथत्वाद्रूपेषु वेषेषु च साभ्यसूयाः ॥ २ ॥

सेनेति । भोजस्य राज्ञो भोज्या स्त्री भोज्या तामिन्दुमतीं प्रति व्यर्थमनोरथत्वाद्रूपेष्वाकृतिषु वेषेषु नेपथ्येषु च साभ्यसूया ईर्ष्येति निघण्टुः । किं च विभाते प्रातःकाले ये ग्रहाश्चन्द्रादयस्त इव मन्दाभासः क्षीणकान्तयः पृथिवीक्षितो नृपा अपि सेनानिवेशाञ्शिबिराणि जग्मुः ॥ २ ॥

ननु क्षुभ्यत्स्वेषु कथं तत्राह—

सांनिध्ययोगात्किल तत्र शच्याः स्वयंवरक्षोभकृतामभावः ।
काकुत्स्थमुद्दिश्य समत्सरोऽपि शशाम तेन क्षितिपाललोकः ॥ ३ ॥

सांनिध्येति । तत्र स्वयंवरक्षेत्रे शच्या इन्द्राण्याः । सन्निधिरेव सांनिध्यम् । तस्य योगात्सम्बन्धाद्धेतोः स्वयंवरस्य क्षोभकृतां विघ्नकारिणामभावः किल । किलेति स्वयंवरविघातश्च शच्या विवाहस्य दृष्टानिष्टत्वार्थम् । तेन हेतुना काकुत्स्थमजमुद्दिश्य समत्सरोऽपि सवैरोऽपि क्षितिपाललोकः शशाम नाक्षुभ्यत् ॥ ३ ॥

तावत्प्रकीर्णाभिनवोपचारमिन्द्रायुधद्योतिततोरणाङ्कम् ।
वरः स वध्वा सह राजमार्गं प्राप ध्वजच्छायनिवारितोष्णम् ॥ ४ ॥

तावदिति । यावत्तावच्च साकल्ये इत्यमरः । तावत्प्रकीर्णाः साकल्येन प्रसारिता अभिनवा नूतना उपचाराः पुष्पप्रकरादयो यस्य तं तथोक्तम् । इन्द्रायुधानीव द्योतितानि प्रकाशितानि तोरणान्येवाङ्कश्चिह्नानि यस्य तम् । ध्वजानां छाया ध्वजच्छायम् । छाया बाहुल्ये इति नपुंसकत्वम् । तेन निवारित उष्ण आतपो यत्र तं तथा राजमार्गं स वरो वोढा वध्वा सह प्राप विवेश ॥ ४ ॥

ततस्तदालोकनतत्पराणां सौधेषु चामीकरजालवत्सु ।
बभूवुरित्थं पुरसुन्दरीणां त्यक्तान्यकार्याणि विचेष्टितानि ॥ ५ ॥

तत इति । ततस्तदनन्तरं चामीकरजालवत्सु सौवर्णगवाक्षयुक्तेषु सौधेषु तस्याजस्यालोकने तत्पराणामासक्तानां पुरसुन्दरीणामित्थं वक्ष्यमाणप्रकाराणि त्यक्तान्यकार्याणि केवलं दर्शनादीनि येषु तानि विचेष्टितानि व्यापाराः । नपुंसके भावे क्तः । बभूवुः ॥ ५ ॥

तान्येवाह पञ्चभिः श्लोकैः —

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।
बद्धुं न सम्भावित एव तावत्करेण रुद्धोऽपि च केशपाशः ॥ ६ ॥

ऊर्मिभिरिव सम्भ्रमादुत्क्षिप्ते । "क्षिप प्रेरणे" इति धातोः कर्मणि क्तः । पदे पदे प्रतिपदम् । वीप्सायां द्विर्भावः । पतन्ती पदस्खलना सती रशना मेखला तत्क्षणं गमनसम्भ्रमेऽङ्गुष्ठमूलेऽर्पितं सूत्रमेव शेषो यस्याः साऽऽसीत् ॥ १० ॥

*तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।*
**विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन् ॥ ११ ॥**

तासामिति । तदानीं सान्द्रकुतूहलानां तासां स्त्रीणामासवगन्धो गर्भे येषां तैः । विलोलानि नेत्राण्येव भ्रमरा येषां तैः । मुखैर्व्याप्तान्तराः ... गवाक्षाः सहस्रपत्राभरणा इव कमलालङ्कृता इव । "सहस्रपत्रं कमलम्" इत्यमरः । आसन् ॥ ११ ॥

ता राघवं दृष्टिभिरापिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।
तथा हि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥ १२ ॥

ता इति । ता नार्यो रघोरपत्यं राघवमजम् । "तस्यापत्यम्" इत्यण्प्रत्ययः । दृष्टिभिरापिबन्त्योऽतितृष्णया पश्यन्त्यो विषयान्तराण्यन्यानिन्द्रियार्थान्न जग्मुः न विविदुरित्यर्थः । तथा हि । आसां नारीणां शेषेन्द्रियवृत्तिश्चक्षुर्व्यतिरिक्तश्रोत्रादीन्द्रियव्यापारः सर्वात्मना स्वरूपकार्त्स्न्येन चक्षुः प्रविष्टेव । श्रोत्रादीनीन्द्रियाणि स्वातन्त्र्येण ग्रहणासामर्थ्याच्चक्षुरेव प्रविश्य कौतुकात्स्वयमप्येनमुपलभन्ते किमु । अन्यथा कथमिव गाविषमः किं न स्यादिति भावः ॥ १२ ॥

"अन्यकन्या भोगमुखाः कुमाराः" इति वदन्ति । ताः कथयति स्थाने इत्यादिभिस्त्रिभिः—

स्थाने वृता भूपतिभिः परोक्षैः स्वयंवरं साधुममंस्त भोज्या ।
*पद्मेव नारायणमन्यथाऽसौ लभेत कान्तं कथमात्मतुल्यम्* ॥ १३ ॥

स्थान इति । भोज्येन्दुमती परोक्षैस्तैर्भूपतिभिर्वृता ममैवेयमिति प्रार्थितापि स्वयंवरमेव साधु हितममंस्त मेने । न तु परोक्षमेव कंचिदवृत । स्थाने युक्तमेतत् । "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । युक्तं । अन्यथा लक्ष्म्या नारायणमिवासौ इन्दुमती । पद्मसास्तीति पद्मा लक्ष्मीः । "अर्शआदिभ्योऽच्" इत्यच्प्रत्ययः । नारायणमिव आत्मतुल्यं स्वानुरूपं कान्तं पतिं कथं लभेत । न लभेतैव परस्परविवेकात्क्षीर्यादिति भावः ॥ १३ ॥

परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां वितथोऽभविष्यत् ॥ १४ ॥

महार्हेति । महार्हसिंहासने संस्थितोऽसावज मार्गेणोपनीतम् । रत्नैः सहितं चरत्नम् । मधुपर्कमिश्रमर्घ्यं पूजासाधनद्रव्यं दुकूलयोः क्षौमयोर्युगं च । वनिताकटाक्षैरन्तःपुरस्त्रीणामपाङ्गदर्शनैः सार्धम् । भोजाद् गृहीतवान् ॥ १८ ॥

दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधरक्षैः ।
वेलासकाशं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥१९॥

दुकूलेति । दुकूलवासाः सोऽजः । विनीतैर्नम्रैरवरोधरक्षैरन्तःपुररक्षकैर्वधूसमीपं निन्ये । तत्र दृष्टान्तः—स्फुटफेनराजिरुदन्वान् समुद्रो नवैर्नूतनैश्चन्द्रपादैश्चन्द्रकिरणैर्वेलायाः सकाशं समीपमिव । पूर्णचन्द्रोदयेऽयम् ॥ १९ ॥

तत्रार्चितो भोजपतेः पुरोधा हुत्वाग्निमाज्यादिभिरग्निकल्पः ।
तमेव चाधाय विवाहसाक्ष्ये वधूवरौ संगमयांचकार ॥ २० ॥

तत्रेति । तत्र सभायामर्चितः पूजितोऽग्निकल्पोऽग्नितुल्यो भोजपतेर्भोजेश्वरस्य पुरोधा पुरोहितः । 'पुरोधास्तु पुरोहितः' इत्यमरः । आज्यादिभिरग्निं हुत्वा तमेवाग्निं विवाहसाक्ष्ये साक्षित्वे आधाय स्थापयित्वा च वधूवरौ संगमयांचकार योजयामास ॥ २० ॥

हस्तेन हस्तं परिगृह्य वध्वाः स राजसूनुः सुतरां चकासे ।
अनन्तराशोकलताप्रवालं प्राप्येव चूतः प्रतिपल्लवेन ॥ २१ ॥

हस्तेनेति । स राजसूनुर्हस्तेन स्वकीयेन वध्वा हस्तं परिगृह्य । अनन्तरायाः सन्निहिताया अशोकलतायाः प्रवालं पल्लवं प्रतिपल्लवेन स्वकीयेन प्राप्य चूत आम्र इव । सुतरां चकासे ॥ २१ ॥

आसीद्वरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी ।
तस्मिन्द्वये तत्क्षणमात्मवृत्तिः समं विभक्तेव मनोभवेन ॥ २२ ॥

आसीदिति । वरः कण्टकितः पुलकितः प्रकोष्ठो यस्य स आसीत् । 'पुंस्प्रकोष्ठः कूर्परश्च' इत्यमरः । कुमारी स्विन्नाङ्गुलिः संववृते बभूव । अत्रोत्प्रेक्षते—तस्मिन्द्वये मिथुने तत्क्षणमात्मवृत्तिः सात्त्विकविकाररूपा स्थितिर्मनोभवेन समं विभक्तेव पृथक्कृतेव । प्रागेकस्यैवाभयत्र युगपत्प्राप्त्यसंभवात् । पाक्षिकाभिलाषत्वादिति । अत्र वात्स्यायनः—'कन्या तु प्रथमसमागमे स्विन्नाङ्गुलिः स्विन्नमुखी च भवति । पुरुषस्तु रोमाञ्चितो भवति । एभिरनयोर्भावं परीक्षेत' इति । स्त्रीपुरुषयोः स्वेदरोमाञ्चाभिधानं सात्त्विकभावोपलक्षणम् । न तु प्रतिनियमः

विवक्षितः । एभिरिति बहुवचनसामर्थ्यात् । एवं सति कुमारसम्भवे— 'रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत्' । इति श्लोकव्याख्याने च बोद्धव्यमिति । 'वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य' इत्यपरार्धस्य पाठान्तरे व्याख्यानान्तरम्—पाणिसमागमेन पाण्योः संस्पर्शेन कर्त्रा । तयोर्वधूवरयोर्मनोभवस्य वृत्तिः स्थितिः समं विभक्तेव । समांशेनैवेत्यर्थः ॥ २२ ॥

तयोरपाङ्गप्रतिसारितानि क्रियासमापत्तिनिवर्तितानि ।
ह्रीयन्त्रणामानशिरे मनोज्ञामन्योन्यलोलानि विलोचनानि ॥२३॥

तयोरिति । अपाङ्गेषु नेत्रप्रान्तेषु प्रतिसारितानि प्रवर्तितानि क्रियासु दृष्टिप्रेषणरूपासु समापत्त्या परस्परसङ्गत्या निवर्तितानि प्रत्याहृतान्यन्योन्यविलोकने सतृष्णानि । 'लोलश्चलसतृष्णयोः' इत्यमरः । तयोर्दम्पत्योर्विलोचनानि ह्रीयन्त्रणां मनोज्ञां रम्यां ह्रिया निमित्तेन यन्त्रणां सङ्कोचमानशिरे प्रापुः ॥ २३ ॥

प्रदक्षिणप्रक्रमणात्कृशानोरुदर्चिषस्तन्मिथुनं चकासे ।
मेरोरुपान्तेष्विव वर्तमानमन्योन्यसंसक्तमहस्त्रियामम् ॥ २४ ॥

प्रदक्षिणेति । तन्मिथुनमुदर्चिष उच्चज्वालस्य कृशानोर्वह्नेः प्रदक्षिणप्रक्रमणात्प्रदक्षिणीकरणात् मेरोरुपान्तेषु समीपेषु वर्तमानमावर्तमानम् मेरुं प्रदक्षिणीकुर्वदित्यर्थः । अन्योन्यसंसक्तं परस्परसङ्गतम् । मिथुनस्याप्येतद्विशेषणम् । अहश्च त्रियामा चाहस्त्रियामं रात्रिदिवमिव । समाहारे द्वन्द्वैकवद्भावः । चकासे दिदीपे ॥ २४ ॥

नितम्बगुर्वी गुरुणा प्रयुक्ता वधूर्विधातृप्रतिमेन तेन ।
चकार सा मत्तचकोरनेत्रा लज्जावती लाजविसर्गमग्नौ ॥ २५ ॥

नितम्बेति । नितम्बेन गुर्व्यलसा । 'दुर्भरगुणगुर्वी' इति शाश्वतः । विधातृप्रतिमेन ब्रह्मतुल्येन तेन गुरुणा याजकेन प्रयुक्ता लाजानिति नियुक्ता मत्तचकोरस्येव नेत्रे यस्याः सा लज्जावती सा वधूरग्नौ लाजविसर्गं चकार ॥ २५ ॥

हविःशमीपल्लवलाजगन्धी पुण्यः कृशानोरुदियाय धूमः ।
कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे ॥ २६ ॥

हविरिति । हविराज्यादि शमीपल्लवानां लाजानां च गन्धोऽस्यास्तीति हविःशमीपल्लवलाजगन्धी । 'शमीपलाशमिश्राँल्लाजानञ्जलिना वपति' इति कात्यायनः । पुण्यो धूमः कृशानोः पावकादुदियायोद्भूतः । कपोलयोः संसर्पिणी प्रसर

सः । हस्तपूर्वो संविरविष्टो मार्गावरोधरूप उपायो येन स तथोक्तः । संविष्टे प्रति मार्गो पद्मेनाचारनामसु इति केशवः । स राजलोकः समयोपलब्धमयमप्रस्थानकाले लब्धं तथा तस्यैव क्रमिष्यतीति भावः । 'समयोपलभ्यम्' इति पाठे सुलभमित्यर्थः । तत्प्रमदेवासिद्धं भोज्यवस्तु । आशिषं तासिषां मांसे तथा स्यान्नाऽभ्यवस्तुनि' इति केशवः । आदास्यमानो महीष्यमाणः सन्नवसरं पश्यन्नमानसरत्तस्थौ ॥ ३१ ॥

भर्तापि तावत्क्रथकैशिकानामनुष्ठितानन्तरजाविवाहः ।

सत्त्वानुरूपाहरणीकृतश्रीः प्रास्थापयद्राघवमन्वगाच्च ॥ ३२ ॥

भर्ताऽपीति । अनुष्ठितः सम्पादितोऽनन्तरजाया अनुजाया विवाहो येन स तथोक्तः क्रथकैशिकानां देशानां भर्ता स्वामी भोजोऽपि तावत्तदा सत्त्वानुरूपमुत्साहानुरूप्यं यथा तथा आ समन्तात्, अपेक्षितमित्यपसुदानमित्यर्थः । हरणं कन्यायै देयं धनम् । तदेवाह कात्यायनः – 'कन्यया कन्यया वापि पत्युः पितृगृहेऽपि वा । भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम्' ॥ 'यौतकादि तु यद्देयं सुदायो हरणं च तत्' इत्यमरः । आहरणीकृता श्रीर्येन तथोक्तः सन् राघवमजं प्रास्थापयत् प्रस्थापितवान्स्वयमन्वगादनुजगाम च ॥ ३२ ॥

तिस्रस्त्रिलोकप्रथितेन सार्धमजेन मार्गे वसतीरुषित्वा ।

तस्मादपावर्तत कुण्डिनेशः पर्वात्यये सोम इवोष्णरश्मेः ॥ ३३ ॥

तिस्र इति । कुण्डिनं विदर्भनगरं तस्येशो भोजस्त्रिषु लोकेषु प्रथितेनाजेन सार्धं मार्गे पथि तिस्रो वसती रात्रीरुषित्वा स्थित्वा । 'वसती रात्रिवेश्मनोः' इत्यमरः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । पर्वात्यये दर्शान्ते उष्णरश्मेः सूर्यात्सोमश्चन्द्र इव । तस्मादजादपावर्तत तं विसृज्य निवृत्त इत्यर्थः ॥ ३३ ॥

प्रमन्यवः प्रागपि कोसलेन्द्रे प्रत्येकमात्तस्वतया बभूवुः ।

अतो नृपाश्चक्षमिरे समेताः स्त्रीरत्नलाभं न तदात्मजस्य ॥ ३४ ॥

प्रमन्यव इति । नृपा राजानः प्रागपि प्रत्येकमात्तस्वतया विजितत्वे गृहीतधनत्वेन कोसलेन्द्रे रघौ प्रमन्यवः क्रुद्धा बभूवुः । अतो हेतोः स्त्रीरत्नलाभे समेताः संहताः सन्तस्तदात्मजस्य रघुसूनोः स्त्रीरत्नलाभं न चक्षमिरे न सेहिरे ॥ १४ ॥

तमुद्वहन्तं पथि भोजकन्यां रुरोध राजन्यगणः स दृप्तः ।

बलिप्रदिष्टां श्रियमाददानं त्रैविक्रमं पादमिवेन्द्रशत्रुः ॥ ३५ ॥

तमिति । दृप्तः गर्वितः । स राजन्यगणो राजसमूहः भोजकन्यामुद्वहन्तं

प्रहारमूर्च्छापगमे रथस्था यन्तॄनुपालभ्य निवर्तिताश्वान् ।
यैः सादिता लक्षितपूर्वकेतूंस्तानेव सामर्षतया निजघ्नुः ॥ ४४ ॥

प्रहारेति । रथस्था रथिनः प्रहारेण या मूर्च्छा तस्या अपगमे सति मूर्च्छितानाम् अन्यत्र नीत्वा संरक्षणं सारथिधर्म इति कृत्वा निवर्तिताश्वान्यन्तॄन्सारथीनुपालभ्यायुक्तमित्यधिक्षिप्य । पूर्वं यैः स्वयं सादिता हताः । लक्षितपूर्वकेतून् । पूर्वलक्षितैः केतुभिः प्रत्यभिज्ञातानित्यर्थः । तानेव सामर्षतया सक्रोधत्वेन हेतुना निजघ्नुः प्रजह्रुः ॥ ४४ ॥

अप्यर्धमार्गे परबाणलूना धनुर्भृतां हस्तवतां पृषत्काः ।
सम्प्रापुरेवात्मजवानुवृत्त्या पूर्वार्धभागैः फलिभिः शरव्यम् ॥ ४५ ॥

अपीति । अर्धं मार्गस्य अर्धमार्गस्तस्मिन्नर्धमार्गे परेषां बाणैर्लूनाश्छिन्ना अपि हस्तवतां कृतहस्तानां धनुर्भृतां पृषत्काः शरा आत्मजवानुवृत्त्या स्ववेगानुबन्धेन हेतुना फलिभिर्लोहाग्रवद्भिः । "शस्त्रसायकयोः फलम्" इति विश्वः । पूर्वार्धभागैः । शृणातीति शरुः । तस्मै हितं शरव्यं लक्ष्यम् । "उगवादिभ्यो यत्" इति यत्प्रत्ययः । "लक्ष्यं लक्षं शरव्यं च" इत्यमरः । सम्प्रापुरेव न तु मध्ये पतिता इत्यर्थः ॥ ४५ ॥

आधोरणानां गजसन्निपाते शिरांसि चक्रैर्निशितैः क्षुराग्रैः ।
हृतान्यपि श्येननखाग्रकोटिव्यासक्तकेशानि चिरेण पेतुः ॥ ४६ ॥

आधोरणेति । गजसन्निपाते गजयुद्धे निशितैस्तीक्ष्णैः क्षुराग्रैः क्षुरस्येवाग्रं येषां तैश्चक्रैरायुधविशेषैर्हृतानि छिन्नान्यपि । श्येनानां पक्षिविशेषाणाम् । "पत्री श्येनः" इत्यमरः । नखाग्रकोटिषु व्यासक्ताः केशा येषां तानि । आधोरणानां हस्त्यारोहाणाम् । "आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः । शिरांसि चिरेण पेतुः पतितानि । शिरःपातसमयेऽपेक्षास्य नखाग्रासक्ततया पक्षिणां गतेषु केशसङ्गश्चिरपातहेतुरिति भावः ॥ ४६ ॥

पूर्वं प्रहर्ता न जघान भूयः प्रतिप्रहाराक्षममश्वसादी ।
तुरङ्गमस्कन्धनिषण्णदेहं प्रत्याश्वसन्तं रिपुमाचकाङ्क्ष ॥ ४७ ॥

पूर्वमिति । पूर्वं प्रथमं प्रहर्ताश्वसादी घोटकारूढः प्रतिप्रहारेऽक्षममसमर्थं तुरङ्गमस्कन्धे निषण्णदेहम्, मूर्च्छितमित्यर्थः । रिपुं भूयो न जघान पुनर्न प्रजहार । किन्तु प्रत्याश्वसन्तं पुनरुज्जीवन्तमाचकाङ्क्ष । "नायुधव्यसनं प्राप्तं नार्तं नातिपरिक्षतम्" इति निषेधादिति भावः ॥ ४७ ॥

तनुत्यजां वर्मभृतां विकोशैर्बृहत्सु दन्तेष्वसिभिः पतद्भिः ।
उद्यन्तमग्निं शमयाम्बभूवुर्गजा विविग्नाः करशीकरेण ॥ ४८ ॥

तनुत्यजामिति । तनुत्यजां तनुषु निःस्पृहाणामित्यर्थः । वर्मभृतां कवचिनां सम्बन्धिभिर्बृहत्सु दन्तेषु पतद्भिरत एव विकोशैः । पिधानादुद्धृतैः । 'कोशोऽस्त्री कुड्मले खड्गपिधाने' इत्यमरः । असिभिः खड्गैरुद्यन्तमुत्थितमग्निं विविग्ना भीता गजाः करशीकरेण शुण्डादण्डजलकणेन शमयाम्बभूवुः शान्तं चक्रुः ॥ ४८ ॥

शिलीमुखोत्कृत्तशिरःफलाढ्या च्युतैः शिरस्त्रैश्चषकोत्तरेव ।
रणक्षितिः शोणितमद्यकुल्या रराज मृत्योरिव पानभूमिः ॥ ४९ ॥

शिलीमुखेति । शिलीमुखैर्बाणैरुत्कृत्तानि शिरांस्येव फलानि तैराढ्या सम्पन्ना । च्युतैः शिरस्त्रैः । शिरांसि त्रायन्त इति शिरस्त्राणि शीर्षण्यानि । 'शीर्षण्यं च शिरस्त्रेऽथ' इत्यमरः । चषकोत्तरा चषकः पानपात्रमुत्तरं यस्यां सेव । 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । शोणितान्येव मद्यं तस्य कुल्याः प्रवाहा यस्यां सा । 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः । रणक्षितिर्युद्धभूमिर्मृत्योः पानभूमिरिव रराज ॥ ४९ ॥

उपान्तयोर्निष्कुषितं विहङ्गैराक्षिप्य तेभ्यः पिशितप्रियापि ।
केयूरकोटिक्षततालुदेशा शिवा भुजच्छेदमपाचकार ॥ ५० ॥

उपान्तयोरिति । उपान्तयोः प्रान्तयोर्विहङ्गैः पक्षिभिर्निष्कुषितं कर्षितम् । [illegible] । भुजच्छेदं भुजखण्डं तेभ्यो विहङ्गेभ्य आक्षिप्याच्छिद्य पिशितप्रिया मांसप्रियापि शिवा क्रोष्ट्री । 'शिवः कीलः शिवा क्रोष्ट्री' इति विश्वः । केयूरकोट्याऽङ्गदाग्रेण क्षतस्तालुदेशो यस्याः सा सती । अपाचकारापसारयामास । किरतेः करोतेर्वा लिट् ॥ ५० ॥

कश्चिद्द्विषत्खड्गहृतोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य ।
वामाङ्गसंसक्तसुराङ्गनः स्वं नृत्यत्कबन्धं समरे ददर्श ॥ ५१ ॥

कश्चिदिति । द्विषतः खड्गेन हृतोत्तमाङ्गश्छिन्नशिराः । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । कश्चिद्वीरः सद्यो विमानप्रभुतां विमानाधिपत्यम् देवत्वमित्यर्थः । उपेत्य प्राप्य वामाङ्गसंसक्ता वामोत्सङ्गवर्तिनी सुराङ्गना यस्य स तथोक्तः सन् । अग्निपुराणे— 'परापरस्थानानि भूपमानोपमे हृतम् । त्वरितामुपयान्ति मम मर्त्यामपि च ॥' इति । समरे नृत्यत् स्वं निजं कबन्धं विशिरस्कं कलेवरं ददर्श । 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्' इत्यमरः ॥ ५१ ॥

अन्योन्यसूतोन्मथनादभूतां तावेव सूतौ रथिनौ च कौचित् ।
व्यश्वौ गदाव्यायतसम्प्रहारौ भग्नायुधौ बाहुविमर्दनिष्ठौ ॥५२॥

अन्योन्येति । कौचिद्वीरावन्योन्यस्य सूतयोः सारथ्योर्हननाभिनिपातनेनैव सूतौ रथिनौ योद्धारौ चाभूताम् । तावेव व्यश्वौ नष्टाश्वौ सन्तौ गदाभ्यां व्यायतो दीर्घं सम्प्रहारे युद्धं ययोस्तावभूताम् । ततो भग्नायुधौ भग्नगदौ सन्तौ बाहुविमर्दे निष्ठा नाशो ययोस्तौ बाहुयुद्धनाशमभूताम् । 'निष्ठा निष्पत्तिनाशान्ताः' इत्यमरः ॥ ५२ ॥

परस्परेण क्षतयोः प्रहर्त्रोरुत्क्रान्तवाय्वोः समकालमेव ।
अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः ॥ ५३ ॥

परस्परेणेति । परस्परेणान्योन्यं क्षतयोः प्रहर्त्रोः समकालमेककालं यथा तथोत्क्रान्तवाय्वोर्युगपदुत्क्रान्तप्राणयोः । एकैवाप्सराः प्रार्थिता याभ्यां तयोरेकाप्सरःप्रार्थितयोः प्रार्थितैकाप्सरसोरित्यर्थः । वाहिताग्न्यादिषु इति परनिपातः । अथवा एकस्यामप्सरसि प्रार्थितं प्रार्थना ययोरिति विग्रहः । 'स्त्रियां बहुष्वप्सरसः' इति बहुत्वाभिधानं प्रायिकम् । कयोश्चिद्भटयोरमर्त्यभावेऽपि देवत्वेऽपि विवादः कलह आसीत् । एककामिनीकामिनो हि महद्वैरमिति भावः ॥ ५३ ॥

व्यूहावुभौ तावितरेतरस्माद्भङ्गं जयं चापतुरव्यवस्थम् ।
पश्चात्पुरोमारुतयोः प्रवृद्धौ पर्यायवृत्त्येव महार्णवोर्मी ॥ ५४ ॥

व्यूहाविति । तावुभौ व्यूहौ सेनासङ्घातौ । 'व्यूहस्तु बलविन्यासः' इत्यमरः । पश्चात्पुरश्च यौ मारुतौ "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" तयोः पर्यायवृत्त्या क्रमवृत्त्या प्रवृद्धौ महार्णवोर्मी इव । इतरेतरस्मादन्योन्यस्मादव्यवस्थं व्यवस्थारहितमनियतं जयं भङ्गं पराजयं चापतुः प्राप्तवन्तौ ॥ ५४ ॥

परेण भग्नेऽपि बले महौजा ययावजः प्रत्यरिसैन्यमेव ।
धूमो निवर्त्येत समीरणेन यतस्तु कक्षस्तत एव वह्निः ॥ ५५ ॥

परेणेति । बले स्वसैन्ये परेण परबलेन भग्नेऽपि महौजा महाबलोऽजोऽरिसैन्यं प्रत्येव ययौ । तथा हि । समीरणेन वायुना धूमो निवर्त्येत कक्षादपसार्येत । वर्तेतेत्यत्रार्थेऽपि सम्भावनायां लिङ् । वह्निस्तु यतो यत्र कक्षस्तृणम् 'कक्षो तु तृणवीरुधौ' इत्यमरः । तत एव तत्रैव । प्रवर्तत इति शेषः । सार्वविभक्तिकस्तसिः ॥ ५५ ॥

रथी निषङ्गी कवची धनुष्मान्दृप्तः स राजन्यकमेकवीरः ।
निवारयामास महावराहः कल्पक्षयोद्वृत्तमिवार्णवाम्भः ॥ ५६ ॥

रथीति । रथी रथारूढो निषङ्गी तूणीरवान् । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधि र्द्वयोः' इत्यमरः । कवची वर्मधारी धनुष्मान्धनुर्धरो दृप्तो दर्पवान् एकवीरोऽसहाय

धुरः सोऽस्मै राजन्यकं राजसमूहम् । 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्' इत्यनेन वुञ्प्रत्ययः । महावराहो वराहावतारो विष्णुः कल्पक्षये कल्पान्तकाले उद्वृत्तसमुद्रैकार्णवाम्भ इव विचारयामास ॥ ५६ ॥

स दक्षिणं तूणमुखेन वामं व्यापारयन्हस्तमलक्ष्यताजौ ।
आकर्णकृष्टा सकृदस्य योद्धुर्मौर्वीव बाणान्सुषुवे रिपुघ्नान् ॥ ५७ ॥

स इति । सोऽजः आजौ संग्रामे दक्षिणं हस्तं तूणमुखेन निषङ्गविवरेण वाममतिसुन्दरम् । 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे' इति विश्वः । व्यापारयन्नलक्ष्यत । शरसंधानादिवस्तु दुर्लक्ष्यमित्यर्थः । सकृदाकर्णकृष्टा योद्धुरस्य मौर्वी ज्या । रिपून्घ्नन्तीति रिपुघ्नास्तान् । "अमनुष्यकर्तृके च" इति टक्प्रत्ययः । बाणान्सुषुव इव सुषुवे किमु इत्युत्प्रेक्षा ॥ ५७ ॥

स रोषदष्टाधिकलोहितोष्ठैर्व्यक्तोर्ध्वरेखा भ्रुकुटीर्वहद्भिः ।
तस्तार गां भल्लनिकृत्तकण्ठैर्हुंकारगर्भैर्द्विषतां शिरोभिः ॥ ५८ ॥

स इति । सोऽजः रोषेण दष्टा अत एवाधिकलोहिता ओष्ठा येषां तानि तैः । व्यक्ता स्फुटा ऊर्ध्वा रेखा यासां ता भ्रुकुटीर्भ्रूभङ्गान्वहद्भिः । भल्लनिकृत्ता बाणविशेषच्छिन्नाः कण्ठा येषां ते । हुंकारगर्भैः सहुंकारैः हुंकुर्वद्भिरित्यर्थः । द्विषतां शिरोभिर्गां भूमिं तस्तार छादयामास ॥ ५८ ॥

सर्वैर्बलाङ्गैर्द्विरदप्रधानैः सर्वायुधैः कङ्कटभेदिभिश्च ।
सर्वप्रयत्नेन च भूमिपालास्तस्मिन्प्रजह्रुर्युधि सर्व एव ॥ ५९ ॥

सर्वैरिति । द्विरदप्रधानैर्गजमुख्यैः सर्वैर्बलाङ्गैः सेनाङ्गैः । 'हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्' इत्यमरः । कङ्कटभेदिभिः कवचभेदिभिः । 'उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्' इत्यमरः । सर्वायुधैश्च । सर्वप्रयत्नेन च सर्व एव भूमिपाला युधि तस्मिन्नजे प्रजह्रुः तं प्रजह्रुरित्यर्थः । सर्वत्र सर्वकारकधर्मिसम्भवात्कर्मणोऽप्यधिकरणविवक्षायां सप्तमी । तदुक्तम्—"अनेकशक्तियुक्तस्य विश्वस्यानेककर्मणः । सर्वदा सर्वथाभावात्क्वचित्किंचिद्विवक्ष्यते ॥" इति ॥ ५९ ॥

सोऽस्त्रव्रजैश्छन्नरथः परेषां ध्वजाग्रमात्रेण बभूव लक्ष्यः ।
नीहारमग्नो दिनपूर्वभागः किंचित्प्रकाशेन विवस्वतेव ॥ ६० ॥

स इति । परेषां द्विषामस्त्रव्रजैः शस्त्रसमूहैश्छन्नरथः सोऽजः । नीहारैर्हिमै

धने द्यूते दुरोदरम्" इत्यमरः । शशिनः प्रतिमा प्रतिबिम्बमाननं यस्य तम्मधु नापाहरत् । न वेति पदच्छेदः । वाशब्दः समुच्चये । नवयौवना नवं नूतनं यौवनं तारुण्यं यस्यास्तादृशी प्रियतमा वा स्त्री नापाहरत् । व्यसनेभ्यश्चलनम् । अत्र मनुः— पानमक्षाः स्त्रियश्चेति मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ इति ॥ ७ ॥

न कृपणा प्रभवत्यपि वासवे न वितथा परिहासकथास्वपि ।
न च सपत्नजनेष्वपि तेन वागपरुषा परुषाक्षरमीरिता ॥ ८ ॥

नेति । तेन राज्ञा प्रभवति प्रभौ सति वासवेऽपि कृपणा दीना वाक् नेरिता नोक्ता । परिहासकथास्वपि वितथाऽनृता वाक् नेरिता । किञ्चापरुषा रोषशून्येन तेन सपत्नजनेष्वपि शत्रुजनेष्वपि परुषाक्षरं निष्ठुराक्षरं यथा तथा वाक् नेरिता । किमुतान्यत्रेति सर्वत्रापिशब्दार्थः । किंबहुना तस्य मधुरैव वागुच्चेति फलितोऽर्थः ॥ ८ ॥

उदयमस्तमयं च रघूद्वहादुभयमानशिरे वसुधाधिपाः ।
स हि निदेशमलङ्घयतामभूत्सुहृदयोहृदयः प्रतिगर्जताम् ॥ ९ ॥

उदयमिति । वसुधाधिपा राजानः उदयोऽभ्युदयो नामाभ्युदयः । पञ्चम्यर्थे । रघूद्वहो रघुश्रेष्ठः । तस्मादुभयमभ्युदयं वृद्धिम् अस्तमयं नाशं च इत्युभयमानशिरे लेभिरे । कुतः । हि यस्मात्स दशरथो निदेशमाज्ञामलङ्घयताम् । शोभनं हृद यस्येति सुहृन्मित्रमभूत् । "सुहृद्दुर्हृदौ मित्रामित्रयोः" इति निपातः । प्रतिगर्जतां प्रतिस्पर्धिनाम् । अयं तु हृदयं यस्येत्ययोहृदयः कठिनचित्तोऽभूत् । अमाक्षमा ... इति अन्यान्यमात्रतेत्यर्थः ॥ १ ॥

अजयदेकरथेन स मेदिनीमुदधिनेमिमधिज्यशरासनः ।
जयमघोषयदस्य तु केवलं गजवती जवतीव्रहया चमूः ॥ १० ॥

अजयदिति । अधिज्यशरासनः ज्यामधिरूढम् अधिज्यं शरासनं यस्य स दशरथ उदधिनेमिं समुद्रवेष्टनां मेदिनीमेकरथेनाजयत् स्वयमेकरथेनाजैषीदित्यर्थः । गजवती गजयुक्ता जवेन तीव्रा अश्वा हया यस्यां सा चमूस्तस्य नृपस्य केवलं जयमघोषयत्प्रकाशयत् । स्वयमेकवीरस्य चमूरुपकरणमात्रमिति भावः ॥ १० ॥

अवनिमेकरथेन वरूथिना जितवतः किल तस्य धनुर्भृतः ।
विजयदुन्दुभितां ययुरर्णवा घनरवा नरवाहनसम्पदः ॥ ११ ॥

अवनिमिति । वरूथिना गुप्तिमता । वरूथो रथगुप्तिर्या तिरोधत्ते रथस्थितिम्

स्व प्रधानमहीपतिरित्युपपदेऽपि चक्रवर्ती सम्राडित्यर्थः । अथ नाभिस्तु जन्त्वङ्गे यस्य चैव प्रधानिके । रथचक्रस्य मध्यस्थपिण्डिकायां च वा पुमान् ॥ नाभिः क्षत्रिय भेदे तु मतो मुख्यमहीपतौ' ॥ इति केशवः । अगम्भोऽप्रमत्तोऽभूत् । अजितमस्ति चापास्पदम्' इति पाठान्तरेऽजितं चापास्पदमस्तीति पुरुषाणामजय्योऽप्रमत्तोऽभूत् । विजितनिखिलजैत्रेभ्योऽपि पुरुषेभ्यस्तस्याजितत्वमिव चापस्य एवावशिष्टमित्यर्थः । अत्र पराजयमण्डलं तु कामन्दकेनोक्तम्—"अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । तथा रिमित्रमित्रं च विजिगीषोः पुरःसराः । पार्ष्णिग्राहस्ततः पश्चात्ततस्त्वाक्रन्द उत्तरम् । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः । अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे । मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः । अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः" ॥ इति । 'अरिमित्रादयः पञ्च विजिगीषोः पुरःसराः ॥ पार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहासाराक्रन्दासाराः" । इति पृष्ठचत्वारः । मध्यमोदासीनौ द्वौ विजिगीषुरेक इत्येवं द्वादशराजमण्डलम् । तन्मोदासीनमध्यमोत्तरश्चक्रवर्ती दशरथस्तैजसर्पित इत्यर्थः ॥ १५ ॥

तमपहाय ककुत्स्थकुलोद्भवं पुरुषमात्मभवं च पतिव्रता ।
नृपतिमन्यमसेवत देवता सकमला कमलाघवमर्थिषु ॥ १६ ॥

तमिति । पत्यौ व्रतं नियमो यस्याः सा पतिव्रता सकमला कमलहस्ता देवता लक्ष्मीरर्थिषु विषयेऽलघवं लघुत्वरहितम् अपराङ्मुखमित्यर्थः । ककुत्स्थकुलोद्भवं तं दशरथमात्मभवं पुरुषं पुरि शरीरे शयतीति पुरुषः तं विष्णुं चापहाय त्यक्त्वा । अन्यं च नृपतिमसेवत कमपि नासेवतेत्यर्थः । विष्णाविव विष्णुतुल्ये तस्मिन्नपि श्रीः स्थिराभूदित्यर्थः ॥ १६ ॥

तमलभन्त पतिं पतिदेवताः शिखरिणामिव सागरमापगाः ।
मगधकोसलकेकयशासिनां दुहितरोऽहितरोपितमार्गणम् ॥ १७ ॥

तमिति । पतिरेव देवता यासां ताः पतिदेवताः पतिव्रताः मगधाश्च कोसलाश्च केकयाश्च तान्जनपदान्शासतीति तच्छासिनः । तेषां राज्ञां दुहितरः पुत्र्यः । सुमित्राकौसल्याकैकेय्य इत्यर्थः । अत्र क्रमो न विवक्षितः । अहितरोपितमार्गणं शत्रुनिक्षिप्तशरम् । मार्गणबाणाः शरसमाः । तं दशरथं शिखरिणां क्ष्माभृतां दुहितर आ समन्तात्पतन्त्यम्बुवाहिन्यः । अथवा "आपेनाम्बुना वेगेन गच्छन्तीत्यापगाः" इति क्षीरस्वामी । नद्यः सागरमिव । पतिं भर्तारमलभन्त प्रापुः ॥ १७ ॥

प्रियतमाभिरसौ तिसृभिर्बभौ तिसृभिरेव भुवं सह शक्तिभिः ।
उपगतो विनिनीषुरिव प्रजा हरिहयोऽरिहयोगविचक्षणः ॥ १८ ॥

प्रियतमाभिरिति । अरीन्घ्नन्तीत्यरिहणो रिपुघ्नाः । हन्तेः क्विप् । "ब्रह्म-भ्रूणवृत्रेषु क्विप्" इति नियमस्य प्रायिकत्वात् । यथाह न्यासकारः—"प्रायिकश्चायं नियमः क्वचिदन्यस्मिन्नप्युपपदे दृश्यते मधुहा । प्रायिकत्वं च बहुलग्रहणस्य पुरस्तादपकर्षात्सम्भाव्यते" इति । तेषु योगेषूपायेषु विचक्षणो दक्षः । 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । इन्द्रेऽपि योग्यमेतत् । असौ दशरथस्तिसृभिः प्रियतमाभिः सह । प्रजा विनिनीषुर्विनेतुमिच्छुस्तिसृभिः शक्तिभिः प्रभुमन्त्रोत्साहशक्तिभिरेव सह भुवमुपगतो हरिहय इन्द्र इव बभौ ॥ १८ ॥

स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः ।
स्वभुजवीर्यमगापयदुच्छ्रितं सुरवधूरवधूतभयाः शरैः ॥ १९ ॥

स इति । महारथः स दशरथः संयुगमूर्ध्नि रणाग्रे मघवत इन्द्रस्य सहायतां प्रतिपद्य प्राप्य शरैरवधूतभया निरस्तभयाः सुरवधूरुच्छ्रितं स्वभुजवीर्यमगापयत्किल खलु । गायतेः शब्दकर्मत्वात् 'गतिबुद्धि' इत्यादिना सुरवधूनामपि कर्मत्वम् ॥ १९ ॥

क्रतुषु तेन विसर्जितमौलिना भुजसमाहृतदिग्वसुना कृताः ।
कनकयूपसमुच्छ्रयशोभिनो वितमसा तमसासरयूतटाः ॥ २० ॥

क्रतुष्विति । क्रतुष्वध्वरेषु विसर्जितमौलिनापरोपितकिरीटेन दीक्षितेन मुण्डितेन माल्यं स्वच्छमुकुटेन वा । भूपा हि यज्ञेषु वपनस्थाने मौलिं विसर्जयन्ति । 'यावद्यज्ञमनुपुरैव राजा भवति' इति राजसूयप्रकरणविधानादिति प्रसिद्धम् । 'मौलिः किरीटे धम्मिल्ले' इति विश्वः । भुजसमाहृतदिग्वसुना भुजार्जितदिगन्तसम्पदा । अनेन क्षत्रियस्य विजितत्वमुक्तम् । नियमार्जितधनत्वं यज्ञविधायकत्वं च सूच्यते । वितमसा तमोगुणरहितेन तेन दशरथेन । तमसा च सरयूश्च नद्यौ तयोस्तटाः कनकयूपानां समुच्छ्रयेण समुन्नमनेन शोभिनः कृताः । कनकमयत्वं च यूपानां शोभार्थं विश्वजितामात् 'हैमयूपस्तु शोभार्थम्' इति यादवः ॥ २० ॥

अजिनदण्डभृतं कुशमेखलां यतगिरं मृगशृङ्गपरिग्रहाम् ।
अधिवसंस्तनुमध्वरदीक्षितामसमभासमभासयदीश्वरः ॥ २१ ॥

अजिनेति । ईश्वरो भगवानष्टमूर्तिरजिनं कृष्णाजिनं दण्डमौदुम्बरं बिभ-

रौति तमजिनदण्डभृतम् कृष्णाजिनं दीक्षयति । 'औदुम्बरं दीक्षितदण्डं यजमानाय प्रयच्छति' इति वचनात् । कुशमयी मेखला यस्यास्तां कुशमेखलाम् । "शरमयी मौञ्जी वा मेखला । तदभावे कुशमयी" इति विधानात् । प्रकृते कुशग्रहणं [illegible] विधिदर्शनार्थम् । यतगिरं वाचंयमाम् । "वाचं यच्छति" इति श्रुतेः । मृग शृङ्गं परिग्रहः कण्डूयनसाधनं यस्यास्ताम् । 'कृष्णविषाणया कण्डूयते' इति श्रुतिः । अध्वरदीक्षितां संस्कारविशेषयुक्तां तनुं [illegible] बिभ्रत् । अतुलमाघो दीप्तया यस्मिन्नपि तपसा तथा अभासयदभवत् स्म ॥ २१ ॥

अवभृथप्रयतो नियतेन्द्रियः सुरसमाजसमाक्रमणोचितः ।
नमयति स्म स केवलमुन्नतं वनमुचे नमुचेररये शिरः ॥ २२ ॥

अवभृथेति । अवभृथेन प्रयतो नियतेन्द्रियः सुरसमाजसमाक्रमणोचितो देवसभाधिष्ठानार्हः स दशरथ उन्नतं शिरो वनमुचे जलवर्षिणे 'घनं नीरं वनं सत्त्वम्' इति शाश्वतः । नमुचेररये केवलमिन्द्रायैव नमयति स्म । ओजस्वार्थे द्वे रूपे [illegible] न कस्मैचिदन्यस्मै मानुषायेत्यर्थः ॥ २२ ॥

असकृदेकरथेन तरस्विना हरिहयाग्रसरेण धनुर्भृता ।
दिनकराभिमुखा रणरेणवो रुरुधिरे रुधिरेण सुरद्विषाम् ॥ २३ ॥

असकृदिति । एकरथेनाद्वितीयरथेन तरस्विना बलवता हरिहयस्येन्द्रस्याग्रसरेण धनुर्भृता दशरथेनासकृदनेकशो दिनकरस्याभिमुखा अभिमुखस्थिता इत्यर्थः । रणरेणवः सुरद्विषां दैत्यानां रुधिरेण रुरुधिरे निवारिताः ॥ २३ ॥

अथ समाववृते कुसुमैर्नवैस्तमिव सेवितुमेकनराधिपम् ।
यमकुबेरजलेश्वरवज्रिणां समधुरं मधुरञ्चितविक्रमम् ॥ २४ ॥

अथेति । अथ यमकुबेरजलेश्वरवज्रिणां धर्मराजधनदवरुणमहेन्द्राणां समा धूर्भारो यस्य स समधुरः । [illegible] इत्यर्थः । "ऋक्पूरब्धूःपथामानक्षे" इत्यनेन समासान्तोऽप्रत्ययः । तं समधुरम् । अञ्चितविक्रमं पूजितपराक्रममेकनराधिपं तं दशरथं सेवितुमिव । मधुर्वसन्तः । 'मधौ पुष्परसे मधु । दैत्ये चैत्रे वसन्ते च क्षौद्रादौ मधुमे' इति विश्वः । नवैः कुसुमैरुपलक्षितः सन्समाववृते समागतः । "रिक्तहस्तेन नोपेयाद्राजानं देवतां गुरुम्" इति वचनात्कुसुमसमेतो राजानं सेवितुमागत इत्यर्थः ॥ २४ ॥

जिगमिषुर्धनदाध्युषितां दिशं रथयुजा परिवर्तितवाहनः ।
दिनमुखानि रविर्हिमनिग्रहैर्विमलयन्मलयं नगमत्यजत् ॥ २५ ॥

जिगमिषुरिति । धनदाध्युषितां कुबेराधिष्ठितां दिशं जिगमिषुर्गन्तुमिच्छुः रथयुजा सारथिनाऽरुणेन परिवर्तितवाहनो निवर्तिताश्वो रविः हिमस्य निग्रहैर्निराकरणैर्दिनमुखानि प्रभातानि विमलयन्निर्मलयन् । मलयं नगं मलयाचलमत्यजत् । दक्षिणां दिशमत्याक्षीदित्यर्थः ॥ २५ ॥

कुसुमजन्म ततो नवपल्लवास्तदनु षट्पदकोकिलकूजितम् ।
इति यथाक्रममाविरभून्मधुर्द्रुमवतीमवतीर्य वनस्थलीम् ॥ २६ ॥

कुसुमेति । आदौ कुसुमजन्म ततो नवपल्लवाः । तदनु । 'अनुर्लक्षणे' इति कर्मप्रवचनीयत्वाद्द्वितीया । षट्पदानां कोकिलानां च कूजितम् । इत्येवंप्रकारेण यथाक्रमं क्रममनतिक्रम्य पुष्पप्रियो मधुः पल्लवप्रियः कोकिल इतिक्रमोत्कर्षमाश्रित्य द्रुमवतीं द्रुमभूयिष्ठां वनस्थलीमवतीर्य मधुर्वसन्त आविरभूत् । केषांचित्कुसुमात्प्राक् पल्लवप्राथम्यात्केषांचित्कुसुमप्राथम्याद्यथाक्रमस्य न विरोधः ॥ २६ ॥

नयगुणोपचितामिव भूपतेः सदुपकारफलां श्रियमर्थिनः ।
अभिययुः सरसो मधुसम्भृतां कमलिनीमलिनीरपतत्रिणः ॥२७॥

नयगुणेति । नयो नीतिरेव गुणः तेन नयेन गुणैः शौर्यादिभिश्चोपचिताम् । सतामुपकारः फलं यस्यास्तां सदुपकारफलां भूपतेर्नृपस्य श्रियमर्थिन इव । मधुना वसन्तेन सम्भृतां सम्यक्पुष्टां सरसः सम्बन्धिनीं कमलिनीं पद्मिनीम् अलिनीरपतत्रिणः अलयो भृङ्गा नीरपतत्रिणो जलपक्षिणश्च अभिययुः ॥२७॥

कुसुममेव न केवलमार्तवं नवमशोकतरोः स्मरदीपनम् ।
किसलयप्रसवोऽपि विलासिनां मदयिता दयिताश्रवणार्पितः ॥ २८ ॥

कुसुममिति । ऋतुरस्य प्राप्तम् आर्तवम् । 'ऋतोरण्' इत्यण् । नवं प्रथमम् अशोकतरोः केवलं कुसुममेव स्मरदीपनमुद्दीपनं न किन्तु विलासिनां मदयिता मदजनको दयिताश्रवणार्पितः किसलयप्रसवोऽपि पल्लवसम्भवोऽपि स्मरदीपनोऽभवत् ॥ २८ ॥

विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः ।
मधुलिहां मधुदानविशारदाः कुरबका रवकारणतां ययुः ॥ २९ ॥

उच्यते । "भर्मिः स्यात्कण्टके पुरे कर्मिरस्त्रयुगे पुंसि" इति विश्वः । असौ रामः । तज्जितामपि । जितरागद्वेषाणामपोत्सर्षः । मनोऽमदयत् ॥ १३ ॥

प्रथममन्यभृताभिरुदीरिताः प्रविरला इव मुग्धवधूकथाः ।
सुरभिगन्धिषु शुश्रुविरे गिरः कुसुमितासु मिता वनराजिषु ॥ १४ ॥

प्रथममिति । सुरभिर्गन्धो यासां तासु सुरभिगन्धिषु "गन्धस्येदुत्पूतिसुसुर-भिभ्यः" इत्यनेनेकारः । कुसुमान्यासां सञ्जातानि कुसुमिताः । तासु वनराजिषु वन-पङ्क्तिषु । अन्यभृताभिः कोकिलाभिः प्रथमं प्रारम्भेऽदीरिता उच्चा अतएव मिताः परिमिताः गिरः वाचाः । प्रविरलाः मौग्ध्याल्लज्जयाऽल्पाक्षरा मुग्धवधूनां कथा वाच इव शुश्रुविरे श्रुताः ॥ १४ ॥

श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः ।
उपवनान्तलताः पवनाहतैः किसलयैः सलयैरिव पाणिभिः ॥ १५ ॥

श्रुतीति । श्रुतिसुखाः कर्णमधुरा भ्रमरस्वना एव गीतयो यासां ताः । कुसुमा-न्येव कोमला दन्तरुचो दन्तकान्तयो यासां ताः । अनेन स्मितत्वं विवक्षितम् । उपवनान्तलताः आरामसध्यवल्लयः पवनेनाहते कम्पितैः किसलयैः । सलयैः साभि-नयैः । लयशब्देन स्याल्लुप्तोऽभिनयो लक्ष्यते । उपवनान्ते पवनाहतैरिति सन्निधि-स्वाभिधानात् । पाणिभिरिव बभुः । अनेन लतानां नर्तकीसाम्यं गम्यते ॥ १५ ॥

ललितविभ्रमबन्धविचक्षणं सुरभिगन्धपराजितकेसरम् ।
पतिषु निर्विविशुर्मधुमङ्गनाः स्मरसखं रसखण्डनवर्जितम् ॥ १६ ॥

ललितेति । अङ्गना ललितविभ्रमबन्धविचक्षणं मधुरविलासघटनापटुतरं । सुरभिणा मनोहरेण गन्धेन पराजितकेसरं निर्जितबकुलपुष्पम् । अत्र केसरे बकुल-इत्यमर । स्मरस्य सखायं स्मरसखं स्मरोद्दीपकमित्यर्थः । मधु मद्यम् । 'मधु मद्ये पुष्परसे' इत्यमर । 'अर्धर्चाः पुंसि च' इति पुंलिङ्गता । उक्तं च—"मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधु ॥" इति । पतिषु विषये रसखण्डनवर्जितमनुरागभङ्गरहितं यथा तथा निर्विविशुः । परस्परानु-रागपूर्वकं पतिभिः सह पपुरित्यर्थः ॥ १६ ॥

शुशुभिरे स्मितचारुतराननाः स्त्रिय इव श्लथशिञ्जितमेखलाः ।
विकचतामरसा गृहदीर्घिका मदकलोदकलोलविहङ्गमाः ॥ १७ ॥

शुशुभिरे इति । विकचतामरसा विकसितकमला मदेन कला अव्यक्तमधुरं

अलिभिरिति । अञ्जनबिन्दुमनोहरैः कज्जलकणसुन्दरैः कुसुमपङ्क्तिषु निपतन्ति ये तैः अलिभिरङ्कितश्चिह्नितस्तिलकः श्रीमान्नाम वृक्षः । 'तिलकः क्षुरकः श्रीमान्' इत्यमरः । वनस्थलीं । तिलको विशेषकः । 'तमालपत्रतिलकचित्रकाणि विशेषकम् । द्वितीयं च तुरीयं च न स्त्रियाम्' इत्यमरः । प्रमदामिव न शोभयति स्मेति न खलु अपि तु शोभयत्येवेत्यर्थः । 'लट् स्मे' इति स्मयोगे भूतार्थे लट् । तिलकेऽञ्जनबिन्दवः शोभार्थं क्रियन्ते ॥ ४१ ॥

अमदयन्मधुगन्धसनाथया किसलयाधरसङ्गतया मनः ।
कुसुमसम्भृतया नवमल्लिका स्मितरुचा तरुचारुविलासिनी ॥४२॥

अमदयदिति । तरुचारुविलासिनी तरोः पुंसश्चारुविलासिनी नवमल्लिका सप्तलाख्या लता 'सप्तला नवमल्लिका' इत्यमरः । मधुनो मकरन्दस्य मद्यस्य च गन्धेन सनाथया सम्बद्धयेत्यर्थः । किसलयमेवाधरस्तत्र सङ्गतया प्रसक्तयेत्यर्थः । कुसुमैः सम्भृतया सम्पादितया कुसुमरूपयेत्यर्थः । स्मितरुचा हासकान्त्या मनः पश्यतामिति शेषः । अमदयत् ॥ ४२ ॥

अरुणरागनिषेधिभिरंशुकैः श्रवणलब्धपदैश्च यवाङ्कुरैः ।
परभृताविरुतैश्च विलासिनः स्मरबलैरबलैकरसाः कृताः ॥ ४३ ॥

अरुणेति । विलासिनो विलासशीलाः पुरुषाः "वौ कषलसकत्थस्रम्भः" इत्यनेन घिनुण्प्रत्ययः । अरुणस्यानूरो रागमारुण्यं निषेधन्ति तिरस्कुर्वन्तीत्यरुणरागनिषेधीनि । तैः कुसुम्भादिरागरक्तैरित्यर्थः । तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति । तस्य चानुकरोतीति शब्दाः सादृश्यवाचकाः ॥ इति दण्डी । अंशुकैरम्बरैः श्रवणेषु कर्णेषु लब्धपदैः, निवेशितैरित्यर्थः । यवाङ्कुरैश्च परभृताविरुतैः कोकिलकूजितैश्च । एतैस्त्रिभिः स्मरबलैः कामसैन्यैः । अबलास्वेक एव रसो रागो येषां तेऽबलैकरसाः स्त्रीपरतन्त्राः कृताः ॥ ४३ ॥

उपचितावयवा शुचिभिः कणैरलिकदम्बकयोगमुपेयुषी ।
सदृशकान्तिरलक्ष्यत मञ्जरी तिलकजालकजालकमौक्तिकैः ॥४४॥

उपचितेति । शुचिभिः शुभ्रैः कणैः रजोभिरुपचितावयवा पुष्टावयवा । अलिकदम्बकयोगमुपेयुषी प्राप्ता । तिलकस्य तिलकवृक्षस्य मञ्जरी अलकेषु जालकमाभरणविशेषस्तस्मिन् मौक्तिकैः सदृशकान्तिरलक्ष्यत । भ्रमरसङ्गिनी शुभ्रा तिलकमञ्जरी नीलालकसम्पृक्तमुक्ताजालकमिवालक्ष्यतेति भावार्थः ॥ ४४ ॥

ध्वजपटं मदनस्य धनुर्भृतश्छविकरं मुखचूर्णमृतुश्रियः ।
कुसुमकेसररेणुमलिव्रजाः सपवनोपवनोत्थितमन्वयुः ॥ ४५ ॥

ध्वजपटमिति । अलिव्रजाः षट्पदनिवहा धनुर्भृतो धानुष्कस्य मदनस्य कामस्य ध्वजपटं पताकाभूतम् । ऋतुश्रियो वसन्तलक्ष्म्याश्छविकरं शोभाकरं मुखचूर्णं मुखालङ्कारचूर्णभूतम् । 'चूर्णानि वासयोगाः स्युः' इत्यमरः । सपवनोपवनोत्थितं सपवनं पवनेन सहितं यदुपवनं तस्मिन्नुत्थितं कुसुमानां केसरेषु किञ्जल्केषु यो रेणुस्तम् । अन्वयुरन्वगच्छन् । यातेर्लङ् ॥ ४५ ॥

अनुभवन्नवदोलमृतूत्सवं पटुरपि प्रियकण्ठजिघृक्षया ।
अनयदासनरज्जुपरिग्रहे भुजलतां जडतामबलाजनः ॥ ४६ ॥

अनुभवन्निति । नवा दोला प्रेङ्खा यस्मिंस्तं नवदोलमृतूत्सवं वसन्तोत्सवमनुभवन्नबलाजनः पटुरपि निपुणोऽपि प्रियकण्ठस्य जिघृक्षया ग्रहीतुमालिङ्गितुमिच्छया आसनरज्जुपरिग्रहे पीठरज्जुग्रहणे भुजलतां बाहुलतां जडतां शैथिल्यम् । डल-योरभेदः । 'समकस्त्वेषविश्लेषु बबयोरलयोर्न भिदा' इति । अनयत् । दोलाप्रेङ्खण-पतनभयनाटितकेन प्रियकण्ठमाश्लिष्यदित्यर्थः ॥ ४६ ॥

त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः ।
परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः ॥ ४७ ॥

त्यजतेति । बतेत्यामन्त्रणे । 'खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत' इत्यमरः । बत अङ्गना मानं कोपं त्यजत । उक्तञ्च — 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' ॥ इति । विग्रहैर्विरोधैरलं विग्रहो न कार्य इत्यर्थः । गतमतीतं चतुरमुपभोगक्षमं वयो यौवनं पुनर्नैति नागच्छति इत्येवंरूपे स्मरमते स्मराभिप्राये । नपुंसके भावे क्तः । परभृताभिः कोकिलाभिर्निवेदिते सतीव वधूजनो रमते स्म रेमे । को-किलाकूजितोद्दीपितस्मरः स्त्रीजनः कामशासनमपरिहार्यमकरोदित्यर्थः ॥ ४७ ॥

अथ यथासुखमार्तवमुत्सवं समनुभूय विलासवतीसखः ।
नरपतिश्चकमे मृगयारतिं स मधुमन्मधुमन्मथसंनिभः ॥ ४८ ॥

अथेति । अथानन्तरम् । मधुं मथ्नातीति मधुमद्विष्णुः । सम्पदादित्वात्क्विप् । मधुर्वसन्तः । मथ्नातीति मथः । पचाद्यच् । मनसो मथो मन्मथः कामः । तेषां प्रतिमा सदृशो मधुमन्मधुमन्मथसन्निभः स नरपतिर्दशरथो विलासवतीसखः स्त्रीसहचरः

थम् । मध्ये प्राप्तोऽस्यार्थः । तमुत्सवं वसन्तोत्सवं यथासुखं समनुभूय मृगयाविहारं चकमे चकाङ्क्ष ॥ ४८ ॥

व्यसनाशङ्कां परिहरन्नाह—

परिचयं चललक्ष्यनिपातने भयरुषोश्च तदिङ्गितबोधनम् ।
श्रमजयात्प्रगुणां च करोत्यसौ तनुमतोऽनुमतः सचिवैर्ययौ ॥४९॥

परिचयमिति । असौ मृगया चललक्ष्याणि मृगयक्षादीनि तेषां निपातने परिचयमभ्यासं करोति । भयरुषोर्भयक्रोधयोस्तदिङ्गितबोधनं तेषां चललक्ष्याणा-मिङ्गितस्य चेष्टितस्य भयादिलिङ्गभूतस्य बोधनं ज्ञानं च करोति । तनुं शरीरं श्रमस्य जयाज्जितश्रमत्वात्प्रगुणां प्रकृष्टलाघवादिगुणवतीं च करोति । अतो हेतोः सचिवैरनुमतो-ऽनुमोदितः सन्ययौ । सर्वं चैतद्युद्धोपयोगीत्यतस्तदपेक्षया मृगयाप्रवृत्तिः । न तु व्यसनितयेति भावः ॥ ४९ ॥

मृगवनोपगमक्षमवेषभृद्विपुलकण्ठनिषक्तशरासनः ।
गगनमश्वखुरोद्धतरेणुभिर्नृसविता स वितानमिवाकरोत् ॥५०॥

मृगवनेति । मृगाणां वनं तस्योपगमः प्राप्तिः तस्य क्षमं योग्यं वेषं बिभर्तीति स तथोक्तः मृगयाविहारानुगुणवेषधारीत्यर्थः । विपुलकण्ठे निषक्तशरासनः आसक्तधन्वा । नृसवितेव नृसविता पुरुषश्रेष्ठः । उपमितसमासः । स राजाऽश्वखुरोद्धतरेणुभिर्ग-गनं वितानं तुच्छमभावमिवाकरोत् गगनं नाद्राक्षीदित्यर्थः । 'वितानं तुच्छमन्दयोः' इति विश्वः । अथवा सवितानमित्येकं पदम् सवितानमुल्लोचसहितमिवाकरोत् । 'अस्त्री वितानमुल्लोचः' इत्यमरः ॥ ५० ॥

ग्रथितमौलिरसौ वनमालया तरुपलाशसवर्णतनुच्छदः ।
तुरगवल्गनचञ्चलकुण्डलो विरुरुचे रुरुचेष्टितभूमिषु ॥ ५१ ॥

ग्रथितेति । वनमालया वनपुष्पस्रजा ग्रथितमौलिर्बद्धधम्मिल्लः । 'पत्रपुष्पमयी माला वनमाला प्रकीर्तिता' इति । तरूणां पलाशैः पत्रैः सवर्णः समानस्तनुच्छदो वर्म यस्य स तथोक्तः । इदं च वन्यमृगाणां विश्वासार्थम् । तुरगस्य वल्गनेन गतिविशेषेण चञ्चलकुण्डलोऽसौ दशरथो रुरुभिर्मृगविशेषैश्चेष्टि-ताश्चरिता या भूमयस्तासु विरुरुचे दिदीपे ॥ ५१ ॥

तनुलताविनिवेशितविग्रहा भ्रमरसंक्रमितेक्षणवृत्तयः ।
ददृशुरध्वनि तं वनदेवताः सुनयनं नयनन्दितकोसलम् ॥ ५२ ॥

र्णं मृगं रुरुम्। 'समानौ रुरुं पूर्वं शिरसा पुंस्पुंसकम्' इत्यमरः। तस्य दश-रथस्य पुरस्तादग्रे आविर्बभूव। वसन्ततिलकवृत्तम्॥ ५५॥

तत्प्रार्थितं जवनवाजिगतेन राज्ञा तूणीमुखोद्धृतशरेण विशीर्णपङ्क्ति।
श्यामीचकार वनमाकुलदृष्टिपातैर्वातेरितोत्पलदलप्रकरैरिवार्द्रैः॥ ५६॥

तदिति। जवनो जवशीलः। "जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः" इत्यनेन युच्प्रत्ययः। 'तरस्वी त्वरितो वेगी प्रजवी जवनो जवः' इत्यमरः। तं वाजिनमश्वं गतेनारूढेन। तूणीमुखे। "बह्वादिभ्यश्च" इति ङीष्। तस्मा मुखादुद्धृतः शरो येन राज्ञा प्रार्थितमभियातम्। 'याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः' इति केशवः। अत एव विशीर्णा पङ्क्तिः सङ्घीभावो यस्य तत् मृगयूथं कर्तृ। आर्द्रैर्भयाश्रुक्लिन्नैराकुला भयचकिता ये दृष्टिपातास्तैः। वातेरितोत्पल-दलप्रकरैः पवनकम्पितैर्नीलोत्पलदलसङ्घैरिव। वनं श्यामीचकार॥ ५६॥

लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः
प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम्।
आकर्णकृष्टमपि कामितया स धन्वी
बाणं कृपामृदुमनाः प्रतिसंजहार॥ ५७॥

लक्ष्यीकृतस्येति। हरिरिन्द्रो विष्णुर्वा। तस्येव प्रभावः सामर्थ्यं यस्य सः तथोक्तः। धन्वी धनुष्मान् नृपः। लक्ष्यीकृतस्य वेद्धुमिष्टस्य हरिणस्य तत्प्रियो देहं व्यवधायान्तर्धाय स्थिताम्। सह चरतीति सहचरी। पचादिषु चरडिति टित्करणान्ङीप्। यथाह वामनः— 'अनुचरीति चरेष्टित्वात्' इति। तां सहचरीं हरिणीं प्रेक्ष्य कामितया स्वयं कामुकत्वात्, कृपामृदुमनाः करुणार्द्रचित्तः सन्। आक-र्णकृष्टमपि दुष्प्रतिसंहरमपीत्यर्थः। बाणं प्रतिसंजहार, नैपुण्यातिशयात्। नैपुण्यं तु धन्वीत्यनेन गम्यते॥ ५७॥

तस्यापरेष्वपि मृगेषु शरान्मुमुक्षोः
कर्णान्तमेत्य बिभिदे निबिडोऽपि मुष्टिः।
त्रासातिमात्रचटुलैः स्मरतः सुनेत्रैः
प्रौढप्रियानयनविभ्रमचेष्टितानि॥ ५८॥

तस्येति। त्रासातिमात्रचटुलैस्त्रासादत्यन्तचञ्चलैः सुनेत्रैः प्रौढप्रियानयनवि-भ्रमचेष्टितानि प्रगल्भकान्ताविलोचनविलासव्यापारान्स्मारयत्सु स्मरतः। अपरेष्वपि

मृगेषु शरान्मुमुक्षोर्मोक्तुमिच्छोस्तस्य नृपस्य मित्रेष्विव रक्षोऽपि मुष्टिः कर्णान्तमेत्य प्राप्य बिभिदे। स्वयमेव भिद्यते स्म। भिदेः कर्मकर्तरि लिट्। अभिमतस्तस्य मित्रादिप्रेमस्मृतिजनितरसातिरेकेण मुष्टिभेदः। न त्वनैपुण्यादिति तात्पर्यार्थः ॥ ५८ ॥

उत्तस्थुषः सपदि पल्वलपङ्कमध्यान्मुस्ताप्ररोहकवलावयवानुकीर्णम् ।
जग्राह स द्रुतवराहकुलस्य मार्गं सुव्यक्तमार्द्रपदपङ्क्तिभिरायताभिः ॥ ५९ ॥

उत्तस्थुष इति । स नृपः । मुस्ताप्ररोहाणां मुस्ताङ्कुराणां कवला ग्रासाः । तेषामवयवैः खण्डैरनुकीर्णं व्याप्तम् । आयताभिर्दीर्घाभिरार्द्रपदपङ्क्तिभिः सुव्यक्तम्। सपदि पल्वलपङ्कमध्यादुत्तस्थुष उत्थितस्य द्रुतवराहकुलस्य पलायितवराहयूथस्य मार्गं जग्राहानुससार। विशेषणबलाद्वर्त्मग्रहणमनुमानादित्यर्थः ॥ ५९ ॥

तं वाहनादवनतोत्तरकायमीषद्विध्यन्तमुद्धृतसटाः प्रतिहन्तुमीषुः ।
नात्मानमस्य विविदुः सहसा वराहा वृक्षेषु विद्धमिषुभिर्जघनाश्रयेषु ॥ ६० ॥

तमिति । वराहाः । वाहनादश्वादीषदवनतोत्तरकायं किञ्चिदानतपूर्वकायं विध्यन्तं प्रहरन्तं तं नृपम् । उद्धृतसटा ऊर्ध्वकेसराः सन्तः । 'सटा जटाकेसरयोः' इति केशवः । प्रतिहन्तुमीषुः प्रतिहर्तुमैच्छन् । अस्य नृपस्येषुभिः सहसा जघनाश्रयेषु वृक्षेषु विद्धमात्मानं न विविदुः । एतेन वराहाणां मनस्वित्वं नृपस्य हस्तलाघवं चोक्तम् ॥ ६० ॥

तेनाभिघातरभसस्य विकृष्य पत्री वन्यस्य नेत्रविवरे महिषस्य मुक्तः ।
निर्भिद्य विग्रहमशोणितलिप्तपुङ्खस्तं पातयां प्रथममास पपात पश्चात् ॥ ६१ ॥

तेनेति । अभिघाते रभस औत्सुक्यं यस्य तस्य अभिहन्तुमुद्यतस्येत्यर्थः । वन्यस्य वने भवस्य महिषस्य नेत्रविवरे नेत्रमध्ये तेन नृपेण विकृष्याकृष्य मुक्तः पत्री शरो विग्रहं महिषदेहं निर्भिद्य विदार्य । अतिवेगादशोणितलिप्तपुङ्खः सन् । तं महिषं प्रथमं पातयामास । स्वयं पश्चात्पपात । "कृञ्चानुप्रयुज्यते लिटि" इत्यत्रानुप्रयोगस्य व्यवहितविपर्यस्तप्रयोगानभिधानात् 'पातयां प्रथममास' इत्यपप्रयोग इति पाणिनीयाः । यथाह वार्तिककारः— 'विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं च' इति ॥ ६१ ॥

प्रायो विषाणपरिमोक्षलघूत्तमाङ्गान्खड्गांश्चकार नृपतिर्निशितैः क्षुरप्रैः ।
शृङ्गं स दृप्तविनयाधिकृतः परेषामत्युच्छ्रितं न ममृषे न तु दीर्घमायुः ॥ ६२ ॥

प्राय इति । नृपतिर्निशितैः क्षुरप्रैः शरविशेषैः अर्धचन्द्राकारैरित्यर्थः । खड्गान्

तान्हत्वा गजकुलबद्धतीव्रवैरान्काकुत्स्थः कुटिलनखाग्रलग्नमुक्तान् ।
आत्मानं रणकृतकर्मणां गजानामानृण्यं गतमिव मार्गणैरमंस्त ॥६५॥

तानिति । काकुत्स्थो दशरथः । गजकुलेषु बद्धं तीव्रं वैरं यैस्तान् । कुटिलेषु नखाग्रेषु लग्नानि मुक्तानि गजकुम्भमौक्तिकानि येषां तान्सिंहान्हत्वा । आत्मानं रणेषु कृतकर्मणां कृतोपकाराणां गजानामानृण्यमनृणत्वं मार्गणैः शरैः । मार्गणो याचके शरे इति विश्वः । गतं प्राप्तमिवामंस्त मेने ॥ ६५ ॥

चमरान्परितः प्रवर्तिताश्वः क्वचिदाकर्णविकृष्टभल्लवर्षी ।
नृपतीनिव तान्वियोज्य सद्यः सितबालव्यजनैर्जगाम शान्तिम् ॥६६॥

चमरानिति । क्वचिच्चमरान्परितः । अभितः परितः समयानिकषाहाप्रतियोगेऽपि इत्यनेन द्वितीया । प्रवर्तिताश्वः प्रधाविताश्वः । आकर्णविकृष्टभल्लानिषुविशेषान्वर्षतीति तथोक्तः स नृपः । नृपतीनिव तांश्चमरान्सितबालव्यजनैः छत्रचामरैर्वियोज्य विरहय्य सद्यः शान्तिं जगाम । पुराणां परमैश्वर्यमेवापहृतम् । न तु जीवितमिति भावः । औपच्छन्दसिकं वृत्तम् ॥ ६६ ॥

अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्ष्यीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥ ६७ ॥

अपीति । स नृपस्तुरगसमीपादुत्पतन्तमपि सुप्रहारमपीत्यर्थः । रुचिरकलापं मञ्जुबर्हम् । मयूरमविचार्येव रौपोक्ति मयूरो बर्ही । चित्रैराश्चर्यकारत्वाद्युः । तं चित्रैर्माल्यैरनुकीर्णे रतौ विगलितबन्धे प्रियायाः केशपाशे सपदि गतमनस्कः प्रवृत्तचित्तः । "उरः प्रभृतिभ्यः कप्" इति कप्प्रत्ययः । न बाणलक्ष्यीचकार, न प्रजहारेत्यर्थः ॥ ६७ ॥

तस्य कर्कशविहारसम्भवं स्वेदमाननविलग्नजालकम् ।
आचचाम सतुषारशीकरो भिन्नपल्लवपुटो वनानिलः ॥ ६८ ॥

तस्येति । कर्कशविहारात्कठिनव्यायामात्सम्भवो यस्य तम् । आनने विलग्नजालकं बद्धकदम्बकं तस्य नृपस्य स्वेदम् । सतुषारशीकरः शिशिराम्बुकणसहितः । भिन्ना विदलिताः पल्लवानां पुटाः कोशा येन सः वनानिल आचचाम जहारेत्यर्थः । रथोद्धता वृत्तमेतत् ॥ ६८ ॥

इति विस्मृतान्यकरणीयमात्मनः सचिवावलम्बितधुरं धराधिपम् ।
परिवृद्धरागमनुबन्धसेवया मृगया जहार चतुरेव कामिनी ॥ ६९ ॥

इतीति । इति पूर्वोक्तप्रकारेणात्मनो विस्मृतमन्यत्करणीयं कार्यं येन तम् विस्मृतात्मकार्यान्तरमित्यर्थः । सचिवैरवलम्बिता धृता धूर्यस्य तम् । 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्तोऽप्रत्ययः । अनुबन्धसेवया सन्ततसेवया परिवृद्धो रागो यस्य तं धराधिपं । मृग्यन्ते यस्यां मृगा इति मृगया 'परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्' इति शप्रत्ययान्तो निपातः । चतुरा विदग्धा कामिनीव जहाराचकर्ष । 'न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इति मनुः ॥ ६९ ॥

स ललितकुसुमप्रवालशय्यां ज्वलितमहौषधिदीपिकासनाथाम् ।
नरपतिरतिवाहयांबभूव क्वचिदसमेतपरिच्छदस्त्रियामाम् ॥ ७० ॥

स इति । स नरपतिः । ललितानि कुसुमानि प्रवालानि पल्लवानि शय्या यस्यां ताम् । ज्वलिताभिर्महौषधीभिरेव दीपिकाभिः सनाथाम् सप्रदीपामित्यर्थः । त्रियामा त्रयो यामा यस्याः सा ताम् रात्रिं क्वचिदसमेतपरिच्छदः परिहृतपरिजनः सन्नित्यर्थः । अतिवाहयांबभूव गमयामास । पुष्पिताग्रा वृत्तम् ॥ ७० ॥

उषसि स गजयूथकर्णतालैः पटुपटहध्वनिभिर्विनीतनिद्रः ।
अरमत मधुराणि तत्र शृण्वन्विहगविकूजितबन्दिमङ्गलानि ॥ ७१ ॥

उषसीति । उषसि प्रातः पटूनां पटहानामिव ध्वनिर्येषां तैर्गजयूथानां हस्तिसमूहानां कर्णैरेव तालैर्वाद्यप्रभेदैर्विनीतनिद्रः स नृपस्तत्र वने मधुराणि विहगानां विकूजितान्येव बन्दिनां मङ्गलानि मङ्गलगीतानि शृण्वन्नरमत ॥ ७१ ॥

अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैरलक्ष्यमाणः ।
श्रमफेनमुचा तपस्विगाढां तमसां प्राप नदीं तुरङ्गमेण ॥ ७२ ॥

अथेति । अथ जातु कदाचिद्रुरोर्मृगस्य गृहीतवर्त्मा स्वीकृतरुरुमार्गो विपिने वने पार्श्वचरैरनुचरैरलक्ष्यमाणः तुरगवेगादित्यर्थः । श्रमेण फेनमुचा सफेनं स्रवतेत्यर्थः । तुरङ्गमेण तपस्विभिर्गाढामवगाढां सेवितां तमसां नाम नदीं सरितं प्राप ॥ ७२ ॥

कुम्भपूरणभवः पटुरुच्चैरुच्चचार निनदोऽम्भसि तस्याः ।
तत्र स द्विरदबृंहितशङ्की शब्दपातिनमिषुं विससर्ज ॥ ७३ ॥

कुम्भेति । तस्याः तमसाया अम्भसि कुम्भपूरणे भवः उत्पन्नः । पचाद्यच् । पटु

मेदुरः । उच्चैर्गम्भीरो निनदो ध्वनिरस्यास्तीति तथाभूतस्य । तत्र निनदे स नृपः । द्विरदस्य बृंहितं शङ्कते इति द्विरदबृंहितशङ्की सन् । शब्देन शब्दानुसारेण पततीति शब्दपाति निशितं विसृष्टम् । स्वागता वृत्तम् ॥ ७३ ॥

नृपतेः प्रतिषिद्धमेव तत्कृतवान्पङ्क्तिरथो विलङ्घ्य यत् ।
अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ७४ ॥

नृपतेरिति । तत्कर्म नृपतेः क्षत्रियस्य प्रतिषिद्धमेव यदेतत्कर्म गजवधरूपं पङ्क्तिरथो दशरथो विलङ्घ्य । "नृपतीनामहो दुर्गानन्यत्र करिवधं न कुर्यात्" इति शास्त्रमुल्लङ्घ्य कृतवान् । ननु विदुषस्तस्य कथमीदृशं वर्तनमित्यत आह—अपथ इति । श्रुतवन्तोऽपि विद्वांसोऽपि रजोनिमीलिताः रजोगुणावृता जनाः । न पन्था अपथम् । "पथो विभाषा" इति वा समासान्तः । "अपथं नपुंसकम्" इति नपुंसकम् । "अपन्थास्त्वपथं तुल्ये" इत्यमरः । तस्मिन्नपथेऽमार्गे पदमर्पयन्ति हि निक्षिपन्ति हि प्रवर्तन्त इत्यर्थः । वैतालीयं वृत्तम् ॥ ७४ ॥

हा तातेति क्रन्दितमाकर्ण्य विषण्णस्तस्यान्विष्यन्वेतसगूढं प्रभवं सः ।
शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्रं तापादन्तःशल्य इवासीत्क्षितिपोऽपि ॥ ७५ ॥

हेति । हेत्यार्तौ । तातो जनकः । 'हा विषादशुगर्तिषु' इति । 'तातस्तु जनकः पिता' इति चामरः । हा तातेति क्रन्दितं क्रोशनमाकर्ण्य । विषण्णो भग्नोत्साहः सन् । तस्य क्रन्दितस्य वेतसैर्गूढं छन्नम् । प्रभवत्यस्मादिति प्रभवः कारणम् । तमन्विष्य शल्येन शरेण प्रोतं स्यूतम् । "शल्यं शङ्कौ शरे वंशे" इति विश्वः । सकुम्भं मुनिपुत्रं प्रेक्ष्य स क्षितिपोऽपि तापाद्दुःखादन्तःशल्यं यस्य सोऽन्तःशल्य इवासीत् । मत्तमयूरं वृत्तम् ॥ ७५ ॥

तेनावतीर्य तुरगात्प्रथितान्वयेन पृष्टान्वयः स जलकुम्भनिषण्णदेहः ।
तस्मै द्विजेतरतपस्विसुतं स्खलद्भिरात्मानमक्षरपदैः कथयांबभूव ॥ ७६ ॥

तेनेति । प्रथितान्वयेन प्रख्यातवंशेन । एतेन पापभीरुत्वं सूचितम् । तेन राज्ञा तुरगादवतीर्य पृष्टान्वयो ब्रह्महत्याशङ्कया पृष्टकुलः । जलकुम्भनिषण्णदेहः स मुनिपुत्रस्तस्मै राज्ञे स्खलद्भिः व्यथितत्वात्प्रतिस्खलितैरित्यर्थः । अक्षरप्रायैः पदैरक्षरपदैरात्मानं द्विजेतरश्चासौ तपस्विसुतश्च तं द्विजेतरतपस्विसुतं कथयांबभूव न त्वाहं ब्राह्मणपुत्रोऽस्मि किन्तु करणः । "वैश्यात्तु करणः शूद्रायाम्" इति याज्ञवल्क्यः । शूद्रो ब्राह्मणेत्यर्थः । तथा च रामायणे—"ब्रह्महत्याकृतं पापं हृदयादप

नीयताम् । न द्विजातिरहं राजन्मा भूत्ते मनसो व्यथा । शूद्रायामस्मि वैश्येन जातो जनपदाधिप ॥ इति ॥ ७६ ॥

तच्चोदितश्च तमनुद्धृतशल्यमेव
पित्रोः सकाशमवसन्नदृशोर्निनाय ।
ताभ्यां तथागतमुपेत्य तमेकपुत्रम्
अज्ञानतः स्वचरितं नृपतिः शशंस ॥ ७७ ॥

तच्चेति । तच्चोदितस्तेन पुत्रेण चोदितः प्रेरितः पितृसमीपं प्रापयेत्युक्तः स नृपतिरनुद्धृतमनुत्पाटितशल्यमेव तं मुनिपुत्रम् । अवसन्नदृशोर्नष्टचक्षुषोरन्धयोरित्यर्थः । पित्रोर्मातापित्रोः । 'पिता मात्रा' इत्येकशेषः । सकाशं समीपं निनाय । इदं च रामायणविरुद्धम् । तत्र— 'अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ । अस्पर्शयमहं पुत्रं तं मुनिं सह भार्यया' इति । यथोक्तोर्थ एव मृतं पुत्रं प्रति पित्रोरानयनाभिधानात् । तथागतं वेतसगूढम् । एकश्चासौ पुत्रश्चैकपुत्रस्तम् । एकग्रहणं पित्रोरनन्यगतिकत्वसूचनार्थम् । तं मुनिपुत्रमुपेत्य सविधं गत्वाज्ञानतः करिभ्रान्त्या स्वचरितं स्वकृतं । ताभ्यां मातापितृभ्याम् । [illegible] । शशंस कथितवान् ॥ ७७ ॥

तौ दम्पती बहु विलप्य शिशोः प्रहर्त्रा
शल्यं निखातमुदहारयतामुरस्तः ।
सोऽभूत्परासुरथ भूमिपतिं शशाप
हस्तार्पितैर्नयनवारिभिरेव वृद्धः ॥ ७८ ॥

ताविति । तौ जाया च पतिश्च दम्पती । राजदन्तादिषु जायाशब्दस्य दम्भावो जम्भावश्च विकल्पेन निपातितः । 'दम्पती जम्पती जायापती भार्यापती च तौ' इत्यमरः । बहु विलप्य भूरि परिदेव्य । 'विलापः परिदेवनम्' इत्यमरः । शिशोरुरस्तो वक्षसः । पञ्चम्यास्तसिल् । निखातं लग्नं शरं प्रहर्त्रा राज्ञैवोदहारयतामुद्धारयामासतुः । स शिशुः परासुर्गतप्राणोऽभूत् । अथ वृद्धो हस्तार्पितैर्नयनवारिभिरेव शापदानस्य जलपूर्वकत्वात्तैरेव भूमिपतिं शशाप ॥ ७८ ॥

दिष्टान्तमाप्स्यति भवानपि पुत्रशोका
दन्त्ये वयस्यहमिवेति तमुक्तवन्तम् ।

न चोपलेभे पूर्वेषामृणनिर्मोक्षसाधनम् ।
सुताभिधानं स ज्योतिः सद्यः शोकतमोपहम् ॥ २ ॥

नेति । स दशरथः पूर्वेषां पितॄणामृणनिर्मोक्षसाधनम् "एष वा अनृणो यः पुत्री" इति श्रुतेः । पितॄणामृणविमुक्तिकारणम् । सद्यः शोक एव तमस्तदपहन्तीति शोकतमोपहम् । अत्रापहकर इतिवदुपपदेऽपि तदन्तविधिमाश्रित्य । "अपे क्लेश-तमसोः" इति डप्रत्ययः । सुताभिधानं सुताख्यं ज्योतिर्नोपलेभे न प्राप च ॥ २ ॥

अतिष्ठत्प्रत्ययापेक्षसन्ततिः स चिरं नृपः ।
प्राङ्मन्थादनभिव्यक्तरत्नोत्पत्तिरिवार्णवः ॥ ३ ॥

अतिष्ठदिति । प्रत्ययं हेतुमपेक्षत इति प्रत्ययापेक्षा सन्ततिर्यस्य स तथोक्तः । "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः । स नृपः मन्थात्प्राक् मन्थनात्पूर्वं अनभिव्यक्ताऽप्रकटा रत्नोत्पत्तिर्यस्य सोऽर्णव इव । चिरमतिष्ठत् । कालमपेक्षमाणाद्विलम्बो न तु वन्ध्यत्वादिति भावः ॥ ३ ॥

ऋष्यशृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः ।
आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः ॥ ४ ॥

ऋष्येति । ऋष्यशृङ्गादयः । ऋष्यशृङ्गो नाम कश्चिदृषिः तदादयः ऋतुसन्ती वा यजन्तीत्यृत्विजो याजकाः । "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" इत्यनेन क्विन्नन्तो निपातः । जितात्मानो जितान्तःकरणाः सन्तः सन्तानकाङ्क्षिणः पुत्रा-र्थिनस्तस्य दशरथस्य पुत्रीयां पुत्रनिमित्ताम् । "पुत्राच्छ च" इति छप्रत्ययः । इष्टिं यागमारेभिरे प्रचक्रमिरे ॥ ४ ॥

तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम् ।
अभिजग्मुर्निदाघार्ताश्छायावृक्षमिवाध्वगाः ॥ ५ ॥

तस्मिन्निति । तस्मिन्नवसरे पुत्रकामेष्टिप्रारम्भसमये देवाः पुलस्त्यस्य पौत्रा-पत्यं पुमान्पौलस्त्यो रावणः तेनोपप्लुताः पीडिताः सन्तः । निदाघार्ता घर्मातुराः । अध्वानं गच्छन्तीत्यध्वगाः पान्थाः । "अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः" इति डप्रत्ययः । छायाप्रधानं वृक्षं छायावृक्षमिव । शाकपार्थिवादित्वात्समासः । हरिं विष्णुमभिजग्मुः ॥ ५ ॥

ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः ।
अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥ ६ ॥

न चोपलेभे पूर्वेषामृणनिर्मोक्षसाधनम् ।
सुताभिधानं स ज्योतिः सद्यः शोकतमोपहम् ॥ २ ॥

नेति । स दशरथः पूर्वेषां पितॄणामृणनिर्मोक्षसाधनम् "एष वा अनृणो यः पुत्री" इति श्रुतेः । पितॄणामृणविमुक्तिकारणम् । सद्यः शोक एव तमस्तदपहन्तीति शोकतमोपहम् । अनामयङ्कर इतिवदुपपदेऽपि तदन्तविधिमाश्रित्य । "अपे क्लेशतमसोः" इति डप्रत्ययः । सुताभिधानं सुताख्यं ज्योतिर्नोपलेभे न प्राप च ॥ २ ॥

अतिष्ठत्प्रत्ययापेक्षसन्ततिः स चिरं नृपः ।
प्राङ्मन्थादनभिव्यक्तरत्नोत्पत्तिरिवार्णवः ॥ ३ ॥

अतिष्ठदिति । प्रत्ययं हेतुमपेक्षत इति प्रत्ययापेक्षा सन्ततिर्यस्य स तथोक्तः । "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः । स नृपः मन्थात्प्राङ्मन्थनात्पूर्वमनभिव्यक्ताऽप्रकाशा रत्नोत्पत्तिर्यस्य सोऽर्णव इव । चिरमतिष्ठत् । सामग्र्यभावाद्विलम्बो न तु वन्ध्यत्वादिति भावः ॥ ३ ॥

ऋष्यशृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः ।
आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः ॥ ४ ॥

ऋष्येति । ऋष्यशृङ्गादयः । ऋष्यशृङ्गो नाम कश्चिदृषिः तदादयः ऋतुमतो वा यजन्तीत्यृत्विजो याज्ञिकाः । "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" इत्यनेन क्विन्नन्तो निपातः । जितात्मानो जितान्तःकरणाः सन्तः सन्तानकाङ्क्षिणः पुत्रार्थिनस्तस्य दशरथस्य पुत्रीयां पुत्रनिमित्ताम् । "पुत्राच्छ च" इति छप्रत्ययः । इष्टिं यागमारेभिरे प्रक्रमिरे ॥ ४ ॥

तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम् ।
अभिजग्मुर्निदाघार्ताश्छायावृक्षमिवाध्वगाः ॥ ५ ॥

तस्मिन्निति । तस्मिन्नवसरे पुत्रकामेष्टिप्रवृत्तिसमये देवाः पुलस्त्यस्य गोत्रापत्यं पुमान्पौलस्त्यो रावणः तेनोपप्लुताः पीडिताः सन्तः । निदाघार्ता घर्मातुराः । अध्वानं गच्छन्तीत्यध्वगाः पान्थाः । "अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः" इति डप्रत्ययः । छायाप्रधानं वृक्षं छायावृक्षमिव । शाकपार्थिवादित्वात्समासः । हरिं विष्णुमभिजग्मुः ॥ ५ ॥

ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः ।
अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥ ६ ॥

सुवर्णपीतम् । अन्यत्र प्रारम्भ आदौ सुवर्णपीतं शारदं शरत्सम्बन्धिनं दिवसमिव स्थितम् ॥ ९ ॥

प्रभानुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणम् ।
कौस्तुभाख्यमपां सारं बिभ्राणं बृहतोरसा ॥ १० ॥

प्रभेति । पुनः किंविधम् । प्रभयाऽनुलिप्तमनुरञ्जितं श्रीवत्सं नाम लाञ्छनं येन तं । लक्ष्म्या विभ्रमदर्पणं कौस्तुभ इत्याख्या यस्य तम् । अपां समुद्राणां सारं स्थिरांशम् । अन्यतममणिमित्यर्थः । बृहतोरसा विशालवक्षःस्थलेन बिभ्राणम् ॥ १ ॥

बाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः ।
आविर्भूतमपां मध्ये पारिजातमिवापरम् ॥ ११ ॥

बाहुभिरिति । विटपाकारैः दीर्घपीवरैरित्यर्थः । दिव्याभरणभूषितैर्बाहुभिरुपलक्षितम् । अत एवापां सैन्धवानां मध्ये आविर्भूतमपरं द्वितीयं पारिजातमिव स्थितम् ॥ ११ ॥

दैत्यस्त्रीगण्डलेखानां मदरागविलोपिभिः ।
हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम् ॥ १२ ॥

दैत्येति । दैत्यस्त्रीगण्डलेखानामसुराङ्गनाकपोलस्थलीनां यो मदरागस्तं विलुम्पन्ति हरन्तीति मदरागविलोपिनः तैश्चेतनावद्भिः सजीवैर्हेतिभिः सुदर्शनादिभिः आयुधैः । 'रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः' इत्यमरः । उदीरितजयस्वनं । जयशब्दमुद्घोषयन्तीभिर्मूर्तिमतीभिरस्त्रदेवताभिरुपास्यमानमित्यर्थः ॥ ११ ॥

मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा ।
उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता ॥ १३ ॥

मुक्तेति । मुक्तो भगवत्सेवाकारणात् शेषेणाहीश्वरेण सह विरोधः सहजमपि वैरं येन तेन । कुलिशव्रणस्य वज्रव्रणस्य अमृताहरणकाल इन्द्रयुद्धे यो वज्रप्रहारास्त एव लक्ष्माणि यस्य स तेन । प्रबद्धोऽञ्जलिर्येन तेन प्राञ्जलिना प्रबद्धाञ्जलिनेत्यर्थः । विनीतेनानुद्धतेन गरुत्मतोपस्थितमुपासितम् । पुरा किल मातृदास्यविमोचनेन भगवता तद्बुद्धिपूर्णपक्षोऽसि परन्तु भक्तविश्वस्य गरुडस्य भगवति हृते स्वामिवत्सलत्वमनु- मितं पक्षिराजं त्वद्दोर्दण्डं त्वत्तो बलवत् इति गर्वितं स्ववामतर्जनीमात्रेणैव भगवत्स्व- मपचान्वितमायेति महाभारतीयां कथां सूचयति विनीतेनेत्यनेन ॥ १३ ॥

योगनिद्रान्तविशदैः पावनैरवलोकनैः ।
भृग्वादीननुगृह्णन्तं सौखशायनिकानृषीन् ॥ १४ ॥

योगेति । योगो मनसो विषयान्तरव्यावृत्तिः तद्रूपा या निद्रा तस्या अन्तेऽवसाने विशदैः प्रसन्नैः पावनैः शोधनैरवलोकनैः सुखशयनं पृच्छन्तीति सौखशायनिकान् । 'पृच्छतौ सुस्नातादिभ्यः' इत्युपसंख्यानाट्ठक्प्रत्ययः । भृग्वादीनृषीननुगृह्णन्तम् ॥ १४ ॥

प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ।
अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् ॥ १५ ॥

प्रणिपत्येति । अथ दर्शनानन्तरं सुराः सुरद्विषामसुराणां शमयित्रे विनाशकाय तस्मै विष्णवे प्रणिपत्य स्तुत्यं स्तोतार्हम् । 'एतिस्तुशास्वृदृजुषः क्यप्' इति क्यप्प्रत्ययः । वाक् च मनश्च वाङ्मनसे । 'अचतुर-' इत्यच्प्रत्ययान्तो निपातः । तयोर्गोचरो विषयो न भवतीत्यवाङ्मनसगोचरः ।—यथाह 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेः । तमेनं विष्णुं तुष्टुवुरस्तुवन् ॥ १५ ॥

नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ १६ ॥

नम इति । पूर्वमादौ विश्वसृजे विश्वस्रष्ट्रे 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेः । तदनु सर्गानन्तरं विश्वं बिभ्रते पुष्णते । अथ विश्वस्य संहर्त्रे । एवं त्रेधा सृष्टिस्थितिसंहारकर्तृत्वेन स्थित आत्मा स्वरूपं यस्य तस्मै । ब्रह्मविष्णुहरात्मने तुभ्यं नमः ॥ १६ ॥

ननु कूटस्थस्य कथं त्रैरूप्यमित्याशङ्क्योपाधिकमित्याह—

रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ १७ ॥

रसान्तराणीति । एकरसं मधुरैकरसं दिवि भवं दिव्यं पयो वर्षोदकं देशे देशे ऊषरादिदेशेऽन्यान्यरसान्तराणि लवणादीनि यथाश्नुते प्राप्नोति । एवमविक्रियो निर्विकारः एकरूप इत्यर्थः । त्वं गुणेषु सत्त्वादिष्ववस्थाः ब्रह्मत्वादिरूपा अश्नुषे ॥ १७ ॥

अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः ।
अजितो जिष्णुरत्यन्तमव्यक्तो व्यक्तकारणम् ॥ १८ ॥

अमेय इति । हे देव । त्वममेयो मर्यादारहिततया न परिच्छेद्यः मितलोकः परि च्छिन्नलोकः । अनर्थी निःस्पृहः । प्रार्थनामावहतीति प्रार्थनावहः । पचाद्यच् । प्रार्थ्यमानानामावहः अमरः । अजितोऽन्यैर्न जित । जिष्णुर्जयशीलः । अत्यन्तमव्यक्तोऽपि सूक्ष्मरूपः । व्यक्तस्य स्थूलरूपस्य कारणम् ॥ १८ ॥

हृदयस्थमनासन्नमकामं त्वां तपस्विनम् ।
दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥ १९ ॥

हृदयस्थमिति । हे देव । त्वां हृदयस्थं सर्वान्तर्यामितया नित्यसन्निहितं तथाप्यनासन्नमगम्यरूपत्वाद्विप्रकृष्टं च विदुः । सन्निकृष्टस्यापि विप्रकृष्टत्वमिति विरोधः । तथाऽकामं न कामोऽभिलाषोऽस्य तं परिपूर्णत्वादिच्छारहितं निष्कामम् । तथापि तपस्विनं प्रशस्ततपोयुक्तं विदुः । यो निष्कामः स कथं तपः कुरुत इति विरोधः । परिहारस्तु ऋषिरूपेण दुश्चरं तपस्तप्यत इति । दयालुं परदुःखप्रहाणपरं तथाप्यनघस्पृष्टं नित्यानन्दस्वरूपत्वाद्दुःखिनं विदुः । अघं दुरितदुःखयोः इति विश्वः । दयालुर्दुःखी चेति विरोधः । 'इमौ हि पुरुषौ लोके नित्यौ दुःखितौ मतौ । परमार्थोपजीवी च यश्चैते नित्यदुःखिताः” । इति महाभारते । पुराणमनादिमजरं निर्विकारत्वादजरं विदुः । चिरन्तनं च जीर्णं च इति विरोधाभासः । उक्तं च— आभासत्वे विरोधस्य विरोधाभास इष्यते इति । विरोधेन चाक्षेपिकमहिम त्वं व्यज्यते ॥ १९ ॥

सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥ २० ॥

सर्वज्ञ इति । त्वं सर्वं जानासीति सर्वज्ञः । इगुपधज्ञाप्रीकिरः कः इति कप्रत्ययः । अविज्ञातः न केनापि विज्ञात इत्यर्थः । त्वं सर्वस्य योनिः कारणं । त्वमात्मन एव भवतीत्यात्मभूः स्वयम्भूः न ते किंचित्कारणमस्तीत्यर्थः । त्वं सर्वस्य प्रभुः त्वमनीशः त्वमेकः सर्वरूपभाक् । त्वमेक एव सर्वात्मना वर्तस इत्यर्थः ॥ २० ॥

सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् ।
सप्तार्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम् ॥ २१ ॥

सप्तेति । हे देव । त्वां सप्तभिः सामभी रथन्तरबृहद्वामदेव्यवैरूप्य वामदेव्यवैराजमहानाम्नीरूपैरुपगीतम् "तद्धितार्थोत्तरपदसमाहारे च" इत्युत्तरपदस माासः । सप्तानामर्णवानां जलं सप्तार्णवजलं । पूर्ववत्समासः । तत्र शेते यः स सप्ता

र्णवजलेशयः तम् । "[illegible]" इत्यमरः । सप्तार्चिर्मुखं यस्य तम् "अग्निमुखा वै देवाः" इति श्रुतिः । सप्तानां लोकानां भूर्भुवःस्वरादीनामेकमाश्रयम् । एवंभूतमाश्रयस्तु ॥ २१ ॥

चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः ।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥ २२ ॥

चतुर्वर्गफलमिति । चतुर्णां धर्मार्थकाममोक्षाणां वर्गश्चतुर्वर्गः । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः' इत्यमरः । तत्फलकं ज्ञानम् । चत्वारि युगानि कृतत्रेतादीनि यासु ताश्चतुर्युगाः कालावस्थाः कालपरिमाणम् । चत्वारो वर्णाः प्रकृता उच्यन्ते यस्मिन्निति चतुर्वर्णमयः चतुर्वर्णप्रचुर इत्यर्थः । तत्प्रकृतवचने मयट् । 'तद्धितार्थोत्तरपदसमाहारे च' इत्यनेन तद्धितार्थे विषये तत्पुरुषः । स लोकः इत्येवं रूपं सर्वं चतुर्मुखाच्चतुर्मुखरूपिणस्त्वत्तः जातमिति शेषः । "इदं सर्वमसृजत यदिदं किंच" इति श्रुतेः ॥ २२ ॥

अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ।
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये ॥ २३ ॥

अभ्यासेति । अभ्यासेन निगृहीतं विषयान्तरेभ्यो निवर्तितम् । तेन मनसा योगिनो हृदयाश्रयं हृदयस्थं ज्योतिर्मयं त्वां विमुक्तये मोक्षार्थं विचिन्वन्त्यन्विष्यन्ति ध्यायन्तीत्यर्थः ॥ २३ ॥

अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥ २४ ॥

अजस्येति । न जायत इत्यजः । "अन्येष्वपि दृश्यते" इति डप्रत्ययः । तस्याजस्य जन्मशून्यस्यापि जन्म गृह्णतः । मत्स्यादिरूपेण जायमानस्य । निरीहस्य चेष्टारहितस्यापि हतद्विषः शत्रुघातिनो जागरूकस्य सर्वसाक्षितया नित्यप्रबुद्धस्यापि स्वपतो योगनिद्रामनुभवतः । एवं विरुद्धचेष्टस्य तव याथार्थ्यं को वेद वेत्ति । 'विदो लटो वा' इति णलादेशः ॥ २४ ॥

शब्दादीन्विषयान्भोक्तुं चरितुं दुश्चरं तपः ।
पर्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्तितुम् ॥ २५ ॥

शब्दादीनिति । किंच कृष्णादिरूपेण शब्दादीन्विषयान्भोक्तुम् । नरनारायणादिरूपेण दुश्चरं तपश्चरितुम् । तथा दैत्यमर्दनेन प्रजाः पातुम् । औदासीन्येन

तावत्त्वमेव वर्णितुं न पर्याप्ता समर्थोऽसि । मौनतपसो वाङ्नौदासीन्यमोक्ष परस्प- रविरुद्धयोरप्युपाये त्वदन्यः कः समर्थ इत्यर्थः ॥ १५ ॥

बहुधाऽप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः ।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥ २६ ॥

बहुधेति । आगमैस्त्रयीसांख्यादिभिर्दर्शनैर्बहुधा भिन्ना अपि सिद्धिहेतवः पु- रुषार्थसाधकाः पन्थान उपायाः जाह्नव्या इमे जाह्नवीया गाङ्गाः । "वृद्धाच्छः" इति छप्रत्ययः । ओघाः प्रवाहाः तेऽर्णवमुपत्यकाभिर्बहुधा भिन्नाः सिद्धिहेतवश्च अर्णव इव त्वय्येव निपतन्ति प्रविशन्ति । येन केनापि रूपेण त्वामेवोपगच्छन्तीत्यर्थः । यथा पुराणमो—"किं बहुना यतोऽपि विश्वकर्मैरुपास्यते" इति ॥ २६ ॥

त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।
गतिस्त्वं वीतरागाणामभूयः संनिवृत्तये ॥ २७ ॥

त्वयीति । त्वय्यावेशितं निवेशितं चित्तं यैस्तेषां तुभ्यं समर्पितानि कर्माणि यैस्तेषां 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रति जाने प्रियोऽसि मे" इति भगवद्वचनात् । वीतरागाणां विरक्तानामभूयःसंनिवृत्तये ऽपुनरावृत्तये मोक्षायेत्यर्थः । त्वमेव गतिः साधनम् । "तमेव विदित्वातिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेरित्यर्थः ॥ २७ ॥

प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ॥ २८ ॥

प्रत्यक्ष इति । प्रत्यक्षः प्रत्यक्षप्रमाणगम्योऽपि तव मह्यादिः पृथिव्यादिर्महि- मैश्वर्यमपरिच्छेद्यः । इयत्तया नावधार्यः । आप्तवाग्वेदः । "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतेः । अनुमानं—क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवदित्यादि- ताभ्यां साध्यं गम्यं त्वां प्रति का कथा प्रत्यक्षमपि त्वत्कार्यं जगदपरिच्छेद्यम् । त- त्कारणमप्रत्यक्षस्त्वमपरिच्छेद्य इति किमु वक्तव्यमित्यर्थः ॥ २८ ॥

केवलं स्मरणेनैव पुनासि पुरुषं यतः ।
अनेन वृत्तयः शेषा निवेदितफलास्त्वयि ॥ २९ ॥

केवलमिति । स्मरणेन केवलं कृत्स्नम् । 'केवलः कृत्स्नमेकश्च' इति शाश्वत । पुरुषं स्मर्तारं जनं पुनासि यतः पवित्रयसि । अनेन स्मृतिकार्येणैव त्वयि त्वद्विषये याः शेषा अवशिष्टा वृत्तयो दर्शनस्पर्शनादयो व्यापारास्ता निवेदितफला विज्ञापि-

तद्धर्मा । तव स्मरणस्यैवेत्थम् दर्शनादीनां तु किमिति नास्माकमाम इति भावः ॥ २९ ॥

उदधेरिव रत्नानि तेजांसीव विवस्वतः ।
स्तुतिभ्यो व्यतिरिच्यन्ते दूराणि चरितानि ते ॥ ३० ॥

उदधेरिति । उदधीयते इति उदधिस्तस्य रत्नानीव । विवस्वतस्तेजांसीव । दूराण्यवाङ्मनसगोचराणि ते चरितानि स्तुतिभ्यो व्यतिरिच्यन्ते । निःशेषं स्तोतुं न शक्यन्त इत्यर्थः ॥ ३० ॥

अनवाप्तमवाप्तव्यं न ते किंचन विद्यते ।
लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोः ॥ ३१ ॥

अनवाप्तमिति । अनवाप्तमप्राप्तम् अवाप्तव्यं प्राप्तव्यं ते तव किंचन किंचिदपि न विद्यते नित्यपरिपूर्णत्वादिति भावः । तर्हि किंनिमित्ते जन्मकर्मणी तत्राह—लोकेति । एको लोकानुग्रह एव ते तव जन्मकर्मणोर्हेतुः । परमकारुणिकस्य ते परार्थैव प्रवृत्तिः न स्वार्थेत्यर्थः ॥ ३१ ॥

महिमानं यदुत्कीर्त्य तव संह्रियते वचः ।
श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥ ३२ ॥

महिमानमिति । तव महिमानमुत्कीर्त्य वचः संह्रियत इति यत् । तद्वचः संहरणं श्रमेण वाग्व्यापारश्रान्त्या । अशक्त्या अतःपरं वक्तुमसामर्थ्याद्वा । गुणानामियत्तया इदं परिमाणमस्य इयान् तस्य भावः इयत्ता तया एतावन्मात्रतया न तेषामानन्त्यादिति भावः ॥ ३२ ॥

इति प्रसादयामासुस्ते सुरास्तमधोक्षजम् ।
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ॥ ३३ ॥

इतीति । इति ते सुरास्तमधोभूतमक्षमिन्द्रियजं ज्ञानं यस्मिंस्तमधोक्षजम् । विष्णुं प्रसादयामासुः प्रसन्नं चक्रुः । हि यस्मात्परमेष्ठिनः सर्वोत्तमस्य तस्य देवस्य सा देवैः कृता भूतार्थव्याहृतिर्भूतस्य सत्यस्यार्थस्य व्याहृतिरुक्तिः । 'युक्ते क्ष्मादावृते भूतम्' इत्यमरः । न स्तुतिर्न प्रशंसामात्रम् । महात्म्ये हि यथावद्वर्णितम् इति भावः । परमे स्थाने तिष्ठतीति परमेष्ठी । 'परमे कित्' इत्युणादिसूत्रेण इनिप्रत्ययः । तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । "स्थास्थिन्स्थूनाम्—" इति षत्वम् ॥ ३३ ॥

> तस्मै कुशलसम्प्रश्नव्यञ्जितप्रीतये सुराः ।
> भयमप्रलयोद्वेलादाचख्युर्नैर्ऋतोदधेः ॥ १४ ॥

तस्मै इति । सुरा देवाः कुशलस्य सम्प्रश्नेन व्यञ्जिता प्रकटीकृता प्रीतिर्येन तस्मै कथितप्रसादायेत्यर्थः । अन्यथा अनवसरविज्ञप्तिर्मुखरत्वमिव निष्फला स्यादिति भावः । तस्मै विष्णवेऽप्रलये प्रलयाभावेऽप्युद्वेलादुन्मर्यादात् । नैर्ऋतो राक्षसः स एवोदधिः । तस्माद्भयमाचख्युः कथितवन्तः ॥ १४ ॥

> अथ वेलासमासन्नशैलरन्ध्रानुनादिना ।
> स्वरेणोवाच भगवान्परिभूतार्णवध्वनिः ॥ १५ ॥

अथेति । अथ वेलायामब्धिकूले समासन्नानां सन्निकृष्टानां शैलानां रन्ध्रेषु गह्वरेष्वनुनादिना प्रतिध्वनिमता स्वरेण परिभूतार्णवध्वनिस्तिरस्कृतसमुद्रघोषो भगवानुवाच ॥ १५ ॥

> पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता ।
> बभूव कृतसंस्कारा चरितार्थैव भारती ॥ १६ ॥

पुराणस्येति । पुराणस्य चिरन्तनस्य कवेस्तस्य भगवतो वर्णस्थानेषूरःकण्ठादिषु समीरिता सम्यगुच्चारिता । अत एव कृतः सम्पादितः संस्कारः साधुत्वस्पष्टत्वादिप्रयत्नो यस्याः सा भारती वाणी चरितार्था कृतार्था बभूवैव । एवकारस्तस्य स्वाभाविपरीतभावनाव्युदासार्थः ॥ १६ ॥

> बभौ सदशनज्योत्स्ना सा विभोर्वदनोद्गता ।
> निर्यातशेषा चरणाद्गङ्गेवोर्ध्वप्रवर्तिनी ॥ १७ ॥

बभाविति । विभोर्विष्णोर्वदनादुद्गता निःसृता । सदशनज्योत्स्ना दन्तकान्तिसहिता । इदं च विशेषणं भावस्यातिशयार्थम् । अत एव सा भारती । चरणादङ्घ्रेर्निर्याता याऽतो शेषा च निर्यातशेषा निःशेषावशिष्टेत्यर्थः । "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इत्यनुवर्त्य "पुंवत्कर्मधारयजातीयदेशीयेषु" इति पुंवद्भावः । निर्यातशब्दस्य या निर्याता सावशेषा सा गङ्गेवेति सामानाधिकरण्यनिर्वाहः । निर्यातायाः शेषेति विग्रहे पुंवद्भावो दुर्घट एव । ऊर्ध्वप्रवर्तिन्यूर्ध्वचारिणी गङ्गेव बभौ इत्युत्प्रेक्षा ॥ १७ ॥

यदाह भगवांस्तदाह—

> जाने वो रक्षसाऽऽक्रान्तावनुभावपराक्रमौ ।
> अङ्गिनां तमसेवोभौ गुणौ प्रथममध्यमौ ॥ १८ ॥

स्थान इति । हे देवाः ! यो युष्माकमनुभावपराक्रमौ महिमप्रभावौ रक्षसा रावणेन । अहिमा शरीरिणं प्रथममध्यमावुभौ गुणौ सत्त्वरजसी तमसेव तमोगुणेनेव । रुद्धौ स्थाने गुणे तमः इत्यमरः । आमन्त्रो याते । यथार्थः कर्म ॥ ३८ ॥

विदितं तप्यमानं च तेन मे भुवनत्रयम् ।
अकामोपनतेनेव साधोर्हृदयमेनसा ॥ ३९ ॥

विदितमिति । किञ्च अकामेनानिच्छयोपनतेन प्रमादवशगतेनैनसा पापेन साधोः सज्जनस्य हृदयमिव । तेन रक्षसा तप्यमानं सन्तप्यमानम् । तपेर्मोदयदिवच्च कर्मणि शानच् । भुवनत्रयं च मे विदितम् । मया ज्ञातं इत्यर्थः । 'मतिबुद्धिपूजार्थेभ्यश्च' इत्यनेन वर्तमाने क्तः । 'क्तस्य च वर्तमाने' इति षष्ठी ॥ ३९ ॥

कार्येषु चैककार्यत्वादभ्यर्थ्योऽस्मि न वज्रिणा ।
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते ॥ ४० ॥

कार्येष्विति । किञ्च एककार्यत्वात् एकं कार्यं ययोस्तौ तयोर्भावः एककार्यत्वं तस्मात्समानकार्यत्वाद्धेतोः । कार्येषु कर्तव्यार्थेषु विषयेषु वज्रिणेन्द्रेणाभ्यर्थ्य इदं कुर्विति प्रार्थनीयो नास्मि । तथा हि । वातः स्वयमेवाग्नेः सारथ्यं साहाय्यं प्रतिपद्यते प्राप्नोति । न तु वह्निप्रार्थनया इत्येककार्यार्थः । प्रेक्षावतां हि स्वार्थेषु स्वत एव प्रवृत्तिः । न तु परप्रार्थनया । स्वार्थश्चायं ममापीत्यर्थः ॥ ४० ॥

पुरा किल त्रिपुरारिप्रीणनाय स्वशिरांसि छिन्दता दशकन्धरेण चक्रस्य शिरो ऽवशेषितं तन्मत्कार्यमित्याह—

स्वासिधारापरिहृतः कामं चक्रस्य तेन मे ।
स्थापितो दशमो मूर्धा लभ्यांश इव रक्षसा ॥ ४१ ॥

स्वेति । स्वासिधारया स्वखड्गधारया परिहृतः अच्छिन्न इत्यर्थः । दशमो मूर्धा मे मम चक्रस्य कामं पर्याप्तो लभ्यांशः प्राप्यमाण इव तेन रक्षसा स्थापितः । तदर्थमेव तमहं हनिष्यामीत्यर्थः ॥ ४१ ॥

तर्हि किं प्रागुपेक्षितमत आह—

स्रष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः ।
अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः ॥ ४२ ॥

स्रष्टुरिति । किन्तु स्रष्टुर्ब्रह्मणो वरातिसर्गाद्वरदानाद्धेतोः । मया तस्य दुरात्मनो रिपो रावणस्यात्यारूढमत्याधिक्यम् अतिवृद्धिरित्यर्थः । नपुंसके भावे क्तः ।

मोचितः सर्पस्यास्यात्त्वं चन्दनेनेव सोऽहम् । चन्दनद्रुमस्यापि तथा सहर्षं वपुर्मिव तैरिति द्रष्टव्यम् ॥ ४१ ॥

सम्प्रति वरस्वरूपमाह—

> धातारं तपसा प्रीतं ययाचे स हि राक्षसः ।
> दैवात्सर्गादवध्यत्वं मर्त्येष्वास्थापराङ्मुखः ॥ ४२ ॥

धातारमिति । स राक्षसस्तपसा प्रीतं सन्तुष्टं धातारं ब्रह्माणम् । मर्त्येषु विषये आस्थापराङ्मुखः आदरविमुखः सन् मर्त्यमनादृत्यैवेत्यर्थः । दैवात्सर्गाद्देवसर्गादवध्यत्वं ययाचे हि ॥ ४२ ॥

तर्हि का गतिरित्याशङ्क्य मनुष्यावतारेण हनिष्यामीत्याह—

> सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम् ।
> करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम् ॥ ४४ ॥

स इति । सोऽहं । दशरथस्यापत्यं पुमान्दाशरथिः । "अत इञ्" इति इञ्प्रत्ययः । रामो भूत्वा तीक्ष्णैः शरैस्तस्य रावणस्य शिरांस्येव कमलानि तेषामुच्चयं राशिं रणभूमेर्बलिक्षमं पूजार्हं करिष्यामि । पुष्पबलयो हि भूमेरिति भावः ॥ ४४ ॥

> अचिराद्यज्वभिर्भागं कल्पितं विधिवत्पुनः ।
> मायाविभिरनालीढमादास्यध्वे निशाचरैः ॥ ४५ ॥

अचिरादिति । हे देवाः । यज्वभिर्याज्ञिकैर्विधिवत्कल्पितमुपाहृतं भागं हविर्भागं मायाविभिर्मायावद्भिः । "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः । निशाचरै रक्षोभिरनालीढमनास्वादितं यथा तथाऽचिरात्पुनरादास्यध्वे ग्रहीष्यध्वे ॥ ४५ ॥

> वैमानिकाः पुण्यकृतस्त्यजन्तु मरुतां पथि ।
> पुष्पकालोकसंक्षोभं मेघावरणतत्पराः ॥ ४६ ॥

वैमानिका इति । मरुतां देवानां पथि वायूनां पथि व्योम्नि वैमानिका विमानैश्चरन्तः । "चरति" इति ठक्प्रत्ययः । मेघावरणतत्पराः रावणभयान्मेघैरन्तर्धानतत्पराः पुण्यकृतः सुकृतिनः पुष्पकालोकेन पुष्पकस्य रावणविमानस्य दर्शनेन यः संक्षोभो भयं तं त्यजन्तु । "संक्षोभो भयचकितम्" इति शब्दार्णवे ॥ ४६ ॥

> मोक्ष्यध्वे स्वर्गबन्दीनां वेणीबन्धानदूषितान् ।
> शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः ॥ ४७ ॥

मोक्ष्यध्व इति । हे देवाः । पूर्वं यो येन नलकूबरशापेन यन्त्रितः प्रति

मन्दाः पौलस्त्यस्य रावणस्य भवत्सम्बन्धेन मे कथमहो केनाप्युपायेनोपशमनुपद्र-तास्वर्गवन्दीमा इवस्वर्गोद्भवानां देवीनामाम्नोद्भवे । पुरा किल नलकूबरेणरम्भा-मभिसरन्त्या रम्भाया बलात्कारेण सम्भोगात्कुद्धेन सुरम्भा रावणः शप्तः । स्त्रीणां बलाद्ग्रहणे मूर्धा ते शतधा भविष्यतीति भारतीया कथानुसन्धेया ॥ ४७ ॥

रावणावग्रहक्लान्तमिति वागमृतेन सः ।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ॥ ४८ ॥

रावणेति । स कृष्णो विष्णुः स एव मेघो कृष्णमेघः । विश्रवसोऽपत्यं पुमानिति विग्रहे रावणः । विश्रव शब्दाच्छिवादित्वादणि विश्रवसः । "विश्रवसरवणौ" इत्यनुवर्तमाने विश्रवःशब्दस्य वृत्तिविषये रवणादेशे रावण इति सिद्धम् । स एवावग्रहो वर्षप्रतिबन्धः । तेन क्लान्तं म्लानं मरुतो देवा एव सस्यं तत् । इत्येवं रूपेण वागमृतेन वाक्सलिलेन । अमृतं यज्ञशेषे स्यात्पीयूषे सलिलेऽमृतम् इति विश्वः । अभिवृष्याभिषिच्य तिरोदधेऽन्तर्दधे ॥ ४८ ॥

पुरुहूतप्रभृतयः सुरकार्योद्यतं सुराः ।
अंशैरनुययुर्विष्णुं पुष्पैर्वायुमिव द्रुमाः ॥ ४९ ॥

पुरुहूतेति । पुरुहूतप्रभृतय इन्द्रादयः सुराः सुरकार्ये रावणवधरूपे उद्यतं विष्णुमंशैरात्मांशैः । द्रुमाः पुष्पैः स्वावयवैर्वायुमिव अनुययुः सुग्रीवादिरूपेण वानर-योनिषु जाता इत्यभिप्रायः ॥ ४९ ॥

अथ तस्य विशाम्पत्युरन्ते काम्यस्य कर्मणः ।
पुरुषः प्रबभूवाग्नेर्विस्मयेन सहर्त्विजाम् ॥ ५० ॥

अथेति । अथ तस्य विशाम्पत्युर्दशरथस्य सम्बन्धिनः काम्यस्य कामयितु-मर्हस्याभ्यासुत्रार्थं वाञ्छितस्य कर्मणः पुत्रकामेष्टेरन्तेऽवसानेऽग्नेः पायसपुरुषः ऋत्विजां पुरुषदर्शनजनितेन विस्मयेन सह प्रबभूव प्रादुर्बभूव । तदाविर्भावात्तेषामपि विस्मयोऽभूदित्यर्थः ॥ ५० ॥

तमेव पुरुषं विशिनष्टि—

हेमपात्रगतं दोर्भ्यामादधानः पयश्चरुम् ।
अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम् ॥ ५१ ॥

हेमेति । स तस्य पुमान् विष्णोरनुप्रवेशादधिष्ठानादेतोस्तेन दिव्यपुरुषेणापि दुर्वहम् । अनुदत्त ... भगवतो हरेरंशस्य सारोद्भूतमाधयम् । हेमपात्र-

गतं पयसि पक्वं चरुं पयश्चरुं पायसान्नं दोर्भ्यामादधानो वहन् । अनपत्यमितो-न्यस्म्यपक्व मोदनश्चरुः । इति शाश्वतः ॥ ५१ ॥

प्राजापत्योपनीतं तदन्नं प्रत्यग्रहीन्नृपः ।
वृषेव पयसां सारमाविष्कृतमुदन्वता ॥ ५२ ॥

प्राजापत्येति । नृपो दशरथः प्राजापत्येन प्रजापतिसम्बन्धिना पुरुषेणोपनीतं न तु वसिष्ठेन । "प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप" इति रामायणात् । तदन्नं पायसान्नम् । वृषा इन्द्रः उदन्वतोदधिनाविष्कृतं प्रकाशितं पयसां सारममृतं वृषा वासव इव । "वासवो वृत्रहा वृषा" इत्यमरः । प्रत्यग्रहीत्स्वीचकार ५२

अनेन कथिता राज्ञो गुणास्तस्यान्यदुर्लभाः ।
प्रसूतिं चकमे तस्मिंस्त्रैलोक्यप्रभवोऽपि यत् ॥ ५३ ॥

अनेनेति । तस्य राज्ञो दशरथस्यान्यदुर्लभा असाधारण्या गुणा अनेन कथिता व्याख्याताः । यद्यस्मात्त्रैलोक्यम् । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । तस्य प्रभवः कारणं विष्णुरपि तस्मिन्राज्ञि प्रसूतिमुत्पत्तिं चकमे कामितवान् । त्रिभुवनस्य कारणस्यापि कार्यमिति परमावधिर्गुणसमाधय इत्यर्थः ॥ ५३ ॥

स तेजो वैष्णवं पत्न्योर्विभेजे चरुसंज्ञितम् ।
द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् ॥ ५४ ॥

स इति । स नृपः चरुसंज्ञास्य संजाता चरुसंज्ञितम् । वैष्णवं तेजः । पत्न्योः द्वे सम्भावितेभ्यो । द्यौश्च पृथिवी च द्यावापृथिव्यौ । "दिवसश्च पृथिव्याम्" इति चकाराद्दिवशब्दस्य द्यावादेशः । तयोर्द्यावापृथिव्योः । अहः पतिरहर्पतिः सूर्यः । "अहरादीनां पत्यादिषु वा रेफः" इत्युपसंख्यानाद्विकल्पे रेफस्य रेफादेशो विसर्गापवादः । प्रत्यग्रं नूतनमातपं घर्मातपमिव । विभेजे । विभज्य दत्तवानित्यर्थः ॥ ५४ ॥

पत्नीद्वये सति द्वयोरेव विभागे कारणमाह—

अर्चिता तस्य कौसल्या प्रिया केकयवंशजा ।
अतः संभाविता ताभ्यां सुमित्रामैच्छदीश्वरः ॥ ५५ ॥

अर्चितेति । तस्य राज्ञः । कौ पृथिव्यां शलति गच्छतीति कोशलः । शल गतौ पचाद्यच् । कुशब्दस्य पृषोदरादित्वात्साधुः । कोशलस्य राज्ञोऽपत्यं स्त्री कौसल्या । "वृद्धेत्कोसलाजादाञ्ञ्यङ्" इति ञ्यङ् । "यङश्चाप्" इति चाप् । अत एव सूत्रे निर्देशात्कोसलशब्दो दन्त्यसकारमध्यमः । अर्चिता ज्येष्ठा मान्या । केकयवंशजा कैकेयी

यादवः— तासां चत्वारि चत्वारि रामस्य । चतुर्थं द्वितीयसर्गे तासाम् मेरुर्य पर्वते । यान्वायाः हि मेध्याय पूततमा पूतना इति । चतुर्भिश्च पृथिव्या- स्याः सर्वा अमृता इति ॥ ५८ ॥

सममापन्नसत्त्वास्ता रेजुरापाण्डुरत्विषः ।
अन्तर्गतफलारम्भाः सस्यानामिव सम्पदः ॥ ५९ ॥

सममिति । समं युगपदापन्ना गृहीताः सत्त्वाः प्राणिनो याभिस्ता आपन्नस त्वा गर्भिण्यः "आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी" इत्यमरः । अत एवा पाण्डुरत्विषः ईषत्पाण्डुरवर्णास्ता राजपत्न्यः । अन्तर्गता गूढाः फलारम्भाः फलप्रादुर्भावा यासां ताः । सस्यानां सम्पद इव रेजुर्बभुः ॥ ५९ ॥

सम्प्रति तासां स्वप्नदर्शनमाह—

गुप्तं ददृशुरात्मानं सर्वाः स्वप्नेषु वामनैः ।
जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्तिभिः ॥ ६० ॥

गुप्तमिति । सर्वास्ताः स्वप्नेषु जलजः शङ्खः जलजासिगदाशार्ङ्गचक्रैर्लाञ्छिता मूर्तयो येषां तैर्वामनैर्ह्रस्वैः पुरुषैर्गुप्तं रक्षितमात्मानं स्वरूपम् । ददृशुरित्यर्थः ॥ ६० ॥

हेमपक्षप्रभाजालं गगने च वितन्वता ।
उह्यन्ते स्म सुपर्णेन वेगाकृष्टपयोमुचा ॥ ६१ ॥

हेमेति । किञ्चेति चार्थः । हेम्नः सुवर्णस्य पक्षयोः प्रभाजालं कान्तिपुञ्जं वितन्वता विस्तारयता वेगेनाकृष्टाः पयोमुचो मेघा येन तेन । सुपर्णेन गरुत्मता गगने ता उह्यन्तेस्मोढाः ॥ ६१ ॥

बिभ्रत्या कौस्तुभन्यासं स्तनान्तरविलम्बिनम् ।
पर्युपास्यन्त लक्ष्म्या च पद्मव्यजनहस्तया ॥ ६२ ॥

बिभ्रत्येति । किञ्च स्तनयोरन्तरे मध्ये विलम्बितं लम्बमानम् । न्यस्यत इति न्यासः कौस्तुभ एव न्यासस्तम् । पत्या कौस्तुभन्यस्तं कौस्तुभमिवार्थः । बिभ्रत्या पद्ममेव व्यजनं हस्ते यस्यास्तया लक्ष्म्या पर्युपास्यन्तोपासिताः ॥ ६२ ॥

कृताभिषेकैर्दिव्यायां त्रिस्रोतसि च सप्तभिः ।
ब्रह्मर्षिभिः परं ब्रह्म गृणद्भिरुपतस्थिरे ॥ ६३ ॥

कृतेति । किञ्च । दिवि भवायां दिव्यायां त्रिस्रोतस्याकाशगङ्गायां कृताभि

शय्यागतेन रामेण माता शातोदरी बभौ ।
सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ ६९ ॥

शय्यागतेनेति । शातोदरी कर्शोदरी कृशोदरी माता शय्यागतेन रामेण सैकते पुलिने योऽम्भोजबलिः पद्मोपहारस्तेन शरदि कृशा जाह्नवी गङ्गेव बभौ ॥

कैकेय्यास्तनयो जज्ञे भरतो नाम शीलवान् ।
जनयित्रीमलंचक्रे यः प्रश्रय इव श्रियम् ॥ ७० ॥

कैकेय्या इति । केकयस्य राज्ञोऽपत्यं स्त्री कैकेयी 'तस्यापत्यम्' इत्यणि कृते 'केकयमित्रयुप्रलयानां यादेरियः' इतीयादेशः । तस्या भरतो नाम शीलवांस्तनयो जज्ञे जातः । यस्तनयः प्रश्रयो विनयः श्रियमिव । जनयित्रीं मातरमलंचक्रे ॥

सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ ।
सम्यगाराधिता विद्या प्रबोधविनयाविव ॥ ७१ ॥

सुताविति । सुमित्रा लक्ष्मणशत्रुघ्नौ नाम यमौ युग्मजातौ सुतौ पुत्रौ । सम्यगाराधिता सम्यक्सेविता विद्या प्रबोधविनयौ तत्त्वज्ञानेन्द्रियजयाविव । सुषुवे ॥ ७१ ॥

निर्दोषमभवत्सर्वमाविष्कृतगुणं जगत् ।
अन्वगादिव हि स्वर्गो गां गतं पुरुषोत्तमम् ॥ ७२ ॥

निर्दोषमिति । सर्वं जगत् भूर्लोको निर्दोषं दुर्भिक्षादिदोषरहितम् आविष्कृतगुणं प्रकटीकृतारोग्यादिगुणं चाभवत् । अत्रोत्प्रेक्षते—गां भुवं गतमवतीर्णं पुरुषोत्तमं विष्णुं स्वर्गोऽप्यन्वगमदिव । स्वर्गो हि गुणवान्निर्दोषश्चेत्यागमः । स्वर्गतुल्यमभूदित्यर्थः ॥ ७२ ॥

तस्योदये चतुर्मूर्तेः पौलस्त्यचकितेश्वराः ।
विरजस्कैर्नभस्वद्भिर्दिश उच्छ्वसिता इव ॥ ७३ ॥

तस्येति । चतुर्मूर्तेः रामादिरूपेण चतूरूपस्य तस्य हरेरुदये सति । पौलस्त्याद्रावणाच्चकिता भीता ईश्वरा नाथा इन्द्रादयो यासां ता दिशो विरजस्कैर्निर्धूलिभिर्नभस्वद्भिर्वायुभिः मिषेण उच्छ्वसिता इव लब्धोच्छ्वासा इव इत्युत्प्रेक्षा । इवशब्दः कर्तरि क्तः । स्वनाथपरवशानामस्तमुक्तानां दिशामुच्छ्वासवाता इव वाता ववुरित्यर्थः । चतुर्दिगीश्वरसर्वं मूर्तिचतुष्टयप्रयोजनमिति भावः ॥ ७३ ॥

कृशानुरपधूमत्वात्प्रसन्नत्वात्प्रभाकरः ।
रक्षोविप्रकृतावास्तामपविद्धशुचाविव ॥ ७४ ॥

कृशानुरिति। रक्षसा रावणेन विप्रकृतावपकृतौ पीडितावित्यर्थः। कृशानु-रग्निः प्रभाकरः सूर्यश्च यथासंख्यमपधूमत्वात्प्रसन्नत्वाच्चापगतविप्लवौ निरस्तधूमरजो-विकारावभवताम् ॥ ७४ ॥

दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः।
मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः ॥ ७५ ॥

दशाननेति। तत्क्षणं तस्मिन्क्षणे रामोत्पत्तिसमये राक्षसश्रियोऽश्रुबिन्दवो दशाननकिरीटेभ्यो मणीनां व्याजेन मिषेण पृथिव्यां पर्यस्ताः पतिताः। रामोत्पत्तौ सति तद्वध्यस्य रावणस्य किरीटमणिभ्रंशलक्षणं दुर्निमित्तमभूदित्यर्थः ॥ ७५ ॥

पुत्रजन्मप्रवेश्यानां तूर्याणां तस्य पुत्रिणः।
आरम्भं प्रथमं चक्रुर्देवदुन्दुभयो दिवि ॥ ७६ ॥

पुत्रजन्मेति। पुत्रिणो जातपुत्रस्य तस्य दशरथस्य पुत्रजन्मनि प्रवेश्यानां प्रवेशयितव्यानां वादनीयानामित्यर्थः। तूर्याणां वाद्यानामारम्भमुपक्रमं प्रथमं दिवि देवदुन्दुभयश्चक्रुः। तस्मात्पितुर्दशरथादपि देवा अधिकं प्रहृष्टा इत्यर्थः ॥ ७६ ॥

सन्तानकमयी वृष्टिर्भवने चास्य पेतुषी।
सन्मङ्गलोपचाराणां सैवादिरचनाऽभवत् ॥ ७७ ॥

सन्तानेति। अस्य राज्ञो भवने सन्तानकानां कल्पवृक्षकुसुमानां विकारः सन्तानकमयी वृष्टिः पेतुषी पपात। "क्वसुश्च" इति क्वसुप्रत्ययः। "उगितश्च" इति ङीप्। सा वृष्टिरेव सन्तः [illegible] ये मङ्गलोपचारास्तेषामादिरचना प्रथमक्रियाऽभवत् ॥ ७७ ॥

कुमाराः कृतसंस्कारास्ते धात्रीस्तन्यपायिनः।
आनन्देनाग्रजेनेव समं ववृधिरे पितुः ॥ ७८ ॥

कुमारा इति। कृताः संस्कृता जातकर्मादयो येषां ते। धात्रीणामुपमातॄणां स्तन्यानि पयांसि पिबन्तीति तथोक्ताः। ते कुमाराः अग्रे जातेनाग्रजेन ज्येष्ठेनैव स्थितेन पितुरानन्देन समं ववृधिरे। कुमारवद्वपि पिता महान्तमानन्दमवापेत्यर्थः। कुमारजन्मनः प्रागेव जातत्वादग्रजत्वमानन्दस्य ॥ ७८ ॥

स्वाभाविकं विनीतत्वं तेषां विनयकर्मणा।
मुमूर्च्छ सहजं तेजो हविषेव हविर्भुजाम् ॥ ७९ ॥

स्वाभाविकमिति। तेषां कुमाराणां सम्बन्धि स्वाभाविकं सहजं विनीतत्वं

पितृकर्मणि सिक्ता । हविर्भुग्ममसौ सहजं तेजो हविषाऽऽत्पादितेनैव मुमूर्च्छ ववृधे । निसर्गसंस्काराभ्यां विनीता इत्यर्थः ॥ ७९ ॥

परस्पराविरुद्धास्ते तद्रघोरनघं कुलम् ।
अलमुद्द्योतयामासुर्देवारण्यमिवर्तवः ॥ ८० ॥

परस्परेति । परस्परमविरुद्धा अविद्विषः । सौभ्रात्रयुक्ता इत्यर्थः । ते कुमारास्तदनघं निष्पापं रघोः कुलम् । ऋतवो वसन्तादयो देवारण्यं नन्दनमिव । सहजविरोधानामप्यृतूनां सहावस्थानसम्भावनार्थं देवविशेषणम् । अलमत्यर्थमुद्द्योतयामासुः प्रकाशयामासुः । सौभ्रात्रवन्तः कुलमभूषयन्त इति भावः ॥ ८० ॥

समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ ।
तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः ॥ ८१ ॥

समान इति । शोभनाः स्निग्धा भ्रातरो येषां ते सुभ्रातरः । "नद्यृतश्च" इति कप् न भवति । "वन्दिते भ्रातुः" इति निषेधात् । तेषां भावः सौभ्रात्रं सुभ्रा-तृत्वम् । तस्मिन्समाने चतुर्णां तुल्येऽपि यथोभौ रामलक्ष्मणौ प्रीत्या द्वन्द्वं बभूवतुः तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं द्वौ द्वौ साहचर्येणाभिव्यक्तौ बभूवतुः । "द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु" इत्यभिव्यक्त्यर्थे निपातः । कथितस्यापि स्नेहो नातिरिच्यत इति भावः ॥ ८१ ॥

तेषां द्वयोर्द्वयोरैक्यं बिभिदे न कदाचन ।
यथा वायुविभावस्वोर्यथा चन्द्रसमुद्रयोः ॥ ८२ ॥

तेषामिति । तेषां चतुर्णां मध्ये द्वयोर्द्वयोः रामलक्ष्मणयोर्भरतशत्रुघ्नयोश्चेत्यर्थः । यथा वायुविभावस्वोर्वातवह्न्योरिव चन्द्रसमुद्रयोरिव च ऐक्यमैकमत्यं कदाचन न बिभिदे एककार्यत्वं समानसुखदुःखत्वं च अन्योऽन्यमुपमानोपमेयभावेन कल्प्यते । सहचारौ हि पवनाग्नी चन्द्रवृद्धौ हि वर्धते सिन्धुस्तत्क्षये च क्षीयत इति ॥ ८२ ॥

ते प्रजानां प्रजानाथास्तेजसा प्रश्रयेण च ।
मनो जह्रुर्निदाघान्ते श्यामाभ्रा दिवसा इव ॥ ८३ ॥

त इति । प्रजानाथास्ते कुमारास्तेजसा प्रभावेण प्रश्रयेण विनयेन च निदाघान्ते ग्रीष्मान्ते श्यामान्यभ्राणि मेघा येषां ते श्यामाभ्राः नातिशीतोष्णा इत्यर्थः । दिवसा इव प्रजानां लोकानां मनश्चित्तं जह्रुः हरन्ति स्म ॥ ८३ ॥

कौशिकेनेति । कौशिकेन कुशिकापत्येन विश्वामित्रेणेत्यागत्य स क्षितीश्वरो दशरथः । अध्वरविघातशान्तये यज्ञविघ्ननिवर्तनाय । काकपक्षधरं बालकोचितशिखाधरम् । "बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः" इति हलायुधः । रामं याचितः किल प्रार्थितः खलु । "याचिर्द्विकर्मकप्रधाने कर्मणि लः अप्रधाने दुहादीनाम्" इति वचनात् । बालं याचितवान् इत्याशङ्क्याह—तेजसां तेजस्विनां वयो बाल्यादि न समीक्ष्यते हि, अप्रयोजकमित्यर्थः । अत्र सर्गे रथोद्धता वृत्तम् । लक्षणं च— 'रान्नराविह रथोद्धता लगौ' इति ॥ १ ॥

कृच्छ्रलब्धमपि लब्धवर्णभाक् तं दिदेश मुनये सलक्ष्मणम् ।
अप्यसुप्रणयिनां रघोः कुले न व्यहन्यत कदाचिदर्थिता ॥ २ ॥

कृच्छ्रेति । लब्धा वर्णाः प्रसिद्धयो येन स लब्धवर्णो विचक्षणः । "लब्धवर्णो विचक्षणः" इत्यमरः । तान् भजत इति लब्धवर्णभाक् विद्वत्सेवीत्यर्थः । स राजा कृच्छ्रलब्धमपि सलक्ष्मणं तं रामं मुनये दिदेशातिसृष्टवान् । तथा हि । असुप्रणयिनां प्राणार्थिनामप्यर्थिता याच्ञा रघोः कुले कदाचिदपि न व्यहन्यत न विहता न विफलीकृतेत्यर्थः । यैरर्थिभ्यः प्राणा अपि समर्प्यन्ते तेषां पुत्रादित्यागो न विस्मयावह इति भावः ॥ २ ॥

यावदादिशति पार्थिवस्तयोर्निर्गमाय पुरमार्गसंस्क्रियाम् ।
तावदाशु विदधे मरुत्सखैः सा सपुष्पजलवर्षिभिर्घनैः ॥ ३ ॥

यावदिति । पार्थिवः पृथिवीश्वरस्तयो रामलक्ष्मणयोर्निर्गमाय निष्क्रमणाय पुरमार्गसंस्क्रियां धूलिसम्मार्जनगन्धोदकसेचनपुष्पोपहाररूपसंस्कारं यावदादिशत्याज्ञापयति तावन्मरुत्सखैर्वायुसहायैः । अनेन धूलिसम्मार्जनं गम्यते । सपुष्पजलवर्षिभिः पुष्पसहितजलवर्षिभिर्घनैः सा मार्गसंस्क्रियाशु विदधे विहिता । एतेन देवकार्यप्रवृत्तयोर्दैवानुकूल्यं सूचितम् ॥ ३ ॥

तौ निदेशकरणोद्यतौ पितुर्धन्विनौ चरणयोर्निपेततुः ।
भूपतेरपि तयोः प्रवत्स्यतोर्नम्रयोरुपरि बाष्पबिन्दवः ॥ ४ ॥

ताविति । निदेशकरणोद्यतौ पित्राज्ञाकरणोद्युक्तौ धन्विनौ धनुष्मन्तौ तौ कुमारौ पितुश्चरणयोर्निपेततुः प्रणतावित्यर्थः । भूपतेरपि बाष्पबिन्दवः प्रवत्स्यतोः प्रवासं करिष्यतोः । अत एव नम्रयोः प्रणतयोः । "नमिकम्पि" इति रप्रत्ययः । तयोरुपरि निपेतुः पतिताः ॥ ४ ॥

तौ बलातिबलयोः प्रभावतो विद्ययोः पथि मुनिप्रदिष्टयोः ।
मम्लतुर्न मणिकुट्टिमोचितौ मातृपार्श्वपरिवर्तिनाविव ॥ ९ ॥

ताविति । मणिकुट्टिमोचितौ मणिबद्धभूमिसञ्चारोचितौ तौ मुनिप्रदिष्टयोः मुनिनोपदिष्टयोः बलातिबलयोर्विद्ययोर्बलातिबलाख्ययोर्मन्त्रयोः प्रभावतः सामर्थ्यात् मातृपार्श्वपरिवर्तिनौ मातृसमीपवर्तिनाविव पथि न मम्लतुः न म्लानावित्यर्थः । अत्र रामायणश्लोकः— 'क्षुत्पिपासे न ते राम भविष्येते नरोत्तम । बलामतिबलां चैव पठतः पथि राघव' ॥ ९ ॥

पूर्ववृत्तकथितैः पुराविदः सानुजः पितृसखस्य राघवः ।
उह्यमान इव वाहनोचितः पादचारमपि न व्यभावयत् ॥ १० ॥

पूर्वेति । वाहनोचितः सानुजो राघवः । पुराविदः पूर्ववृत्ताभिज्ञस्य पितृसखस्य मुनेः पूर्ववृत्तकथितैः पुरावृत्तकथाभिरुह्यमान इव वाहनेन प्राप्यमाण इव । वहेर्धातोः कर्मणि शानच् । "उह्यमान" इत्यत्र दीर्घादिरपपाठः । दीर्घप्राप्त्यभावात् । पादचारमपि न व्यभावयत् ज्ञातवान् ॥ १० ॥

तौ सरांसि रसवद्भिरम्बुभिः कूजितैः श्रुतिसुखैः पतत्रिणः ।
वायवः सुरभिपुष्परेणुभिश्छायया च जलदाः सिषेविरे ॥ ११ ॥

ताविति । तौ राघवौ कर्मभूतौ सरांसि कर्तॄणि रसवद्भिर्मधुरैरम्बुभिः सिषेविरे । पतत्रिणः पक्षिणः । सुखयन्तीति सुखानि । पचाद्यच् । श्रुतीनां सुखानि तैः कूजितैः । वायवः सुरभिपुष्परेणुभिः सुगन्धिपरागैः । जलदाश्छायया च सिषेविरे इति सर्वत्र सम्बध्यते ॥ ११ ॥

नाम्भसां कमलशोभिनां तथा शाखिनां च न परिश्रमच्छिदाम् ।
दर्शनेन लघुना यथा तयोः प्रीतिमापुरुभयोस्तपस्विनः ॥ १२ ॥

नाम्भसामिति । तप एषामस्तीति तपस्विनः । 'तपःसहस्राभ्यां विनीनी' इति विनिप्रत्ययः । लघुनेत्येन 'प्रियेऽपि लघु' इत्यमरः । तयोरुभयोः कर्मभूतयोः । दर्शनेन यथा प्रीतिमापुः तथा कमलशोभिनामम्भसां दर्शनेन नापुः । परिश्रमच्छिदां शाखिनां दर्शनेन च नापुः ॥ १२ ॥

स्थाणुदग्धवपुषस्तपोवनं प्राप्य दाशरथिरात्तकार्मुकः ।
विग्रहेण मदनस्य चारुणा सोऽभवत्प्रतिनिधिर्न कर्मणा ॥ १३ ॥

स्थाणुदग्धेति । स आत्तकार्मुकः । दशरथस्यापत्यं पुमान्दाशरथी राम ।

अत एव दूरीभूतश्रमः । स्वादुतरः । 'स्वादु मिष्टे मनोज्ञे' इति विश्वः । तेन पदपङ्क्तिर्मदनस्य तपोवनं प्राप्य वास्तव्य विभ्रमेण भ्रमेण । 'विभ्रमः संभ्रमे भ्रमे' इति विश्वः । प्रतिनिधिः प्रतिकृतिः सदृशोऽभवत्कामोऽपि न पुनः स्वेन मदन सुन्दर इति भावः ॥ १३ ॥

तौ सुकेतुसुतया खिलीकृते कौशिकाद्विदितशापया पथि ।
निन्यतुः स्थलनिवेशिताटनी लीलयैव धनुषी अधिज्यताम् ॥ १४ ॥

ताविति । अत्र रामायणवचनम्—"अगस्त्यः परमक्रुद्धस्ताटकामभिशप्तवान् । पुरुषादी महायक्षी विरूपा विकृतानना । इदं रूपमपहाय दारुणं रूपमस्तु ते ।" इति । तदेतदाह—विदितशापयेति । कौशिकाद्विश्वामित्रात् । "आख्यातोपयोगे" इत्यपादानात्पञ्चमी । विदितशापया सुकेतुसुतया ताटकया खिलीकृते पथि । 'खिलमप्रहतं स्थानम्' इति हलायुधः । तौ रामलक्ष्मणौ । स्थले निवेशिते अटनी धनुःकोटी याभ्यां तौ तथोक्तौ । 'कोटिरस्याटनी' इत्यमरः । लीलयैव धनुषी । अधिगते ज्ये मौर्व्यौ ययोस्ते अधिज्ये । 'ज्या मौर्वीमातृभूमिषु' इति विश्वः । तयोर्भावस्तामधिज्यतां निन्यतुर्नीतवन्तौ नयतिर्द्विकर्मकः ॥ १४ ॥

ज्यानिनादमथ गृह्णती तयोः प्रादुरास बहुलक्षपाछविः ।
ताटका चलकपालकुण्डला कालिकेव निबिडा बलाकिनी ॥ १५ ॥

ज्यानिनादमिति । अथ तयोर्ज्यानिनादं गृह्णती जानती शृण्वतीत्यर्थः । बहुलक्षपाछविः कृष्णपक्षरात्रिवर्णा । 'बहुलः कृष्णपक्षे च' इति विश्वः । चले कपाले एव कुण्डले यस्याः सा तथोक्ता ताटका । निबिडा सान्द्रा बलाकिनी बलाकावती । व्रीह्यादिभ्यश्च इतीनिः । कालिकेव घनावलीव । 'कालिका योगिनीभेदे कार्ष्ण्ये गौर्यां घनावलौ' इति विश्वः । प्रादुरास प्रादुर्बभूव ॥ १५ ॥

तीव्रवेगधुतमार्गवृक्षया प्रेतचीवरवसा स्वनोग्रया ।
अभ्यभावि भरताग्रजस्तया वात्ययेव पितृकाननोत्थया ॥ १६ ॥

तीव्रवेगेति । तीव्रवेगेन धुताः कम्पिता मार्गवृक्षा यया तथोक्तया । प्रेतचीवराणि वस्त इति प्रेतचीवरवसा । तया प्रेतचीवरवसा । वसतेराच्छादनार्थात्क्विप् । स्वनेन सिंहनादेनोग्रया तया ताटकया । पितृकानने श्मशाने उत्थोत्पन्ना तया । "आतश्चोपसर्गे" इत्युपपूर्वात्तिष्ठतेः कर्तरि कप्रत्ययः । तया वात्ययेव वातसमूहेनेव । 'पाशा

रिम्बो मः इति वा । भरताग्रजो रामोऽप्यमाप्यभिभूतः । कर्मणि क्तः । तीव्रवेगे-त्यादिविशेषणानामपि सार्थक्यानि ॥ १६ ॥

उद्यतैकभुजयष्टिमायतीं श्रोणिलम्बिपुरुषान्त्रमेखलाम् ।
तां विलोक्य वनितावधे घृणां पत्रिणा सह मुमोच राघवः ॥ १७ ॥

उद्यतेति । उद्यतोऽन्नमित एको भुज एव यष्टिर्यस्यास्ताम् । आयतीमायान्तीम् । इणो धातोः शतरि । 'उगितश्च' इति ङीप् । श्रोणिलम्बिनी पुरुषान्त्राण्येव मेखला यस्यास्ताम् । इति विशेषणद्वयेनात्याततायित्वं सूचितम् । अत एव तां विलोक्य राघवो वनितावधे स्त्रीवधविषये घृणां जुगुप्सां करुणां वा । 'घृणा जुगुप्साकरुणे' इत्यमरः । पत्रिणेषुणा सह । 'पत्री रोप इषुर्द्वयोः' इत्यमरः । मुमोच मुक्त-वान् । आततायिवधे मनुः— 'आततायिनमायान्तं हन्यादेवाविचारयन् । विद्याधीनान् तेन महता भवेत् । नाततायिवधे दोषो हन्तुर्भवति कश्चन' इति ॥ १७ ॥

यच्चकार विवरं शिलाघने ताडकोरसि स रामसायकः ।
अप्रविष्टविषयस्य रक्षसां द्वारतामगमदन्तकस्य तत् ॥ १८ ॥

यदिति । स रामसायकः शिलावद्घने सान्द्रे ताडकोरसि यद्विवरं रन्ध्रं चकार तद्विवरं रक्षसामप्रविष्टविषयस्य अप्रविष्टदेशस्येत्यर्थः । सापेक्षत्वेऽपि गमकत्वा-त्समासः । 'विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च' इति विश्वः । अन्तकस्य यमस्य द्वारतामगमत् । इयं प्रथमा रक्षोमृतिरिति भावः ॥ १८ ॥

बाणभिन्नहृदया निपेतुषी सा स्वकाननभुवं न केवलाम् ।
विष्टपत्रयपराजयस्थिरां रावणश्रियमपि व्यकम्पयत् ॥ १९ ॥

बाणभिन्नेति । बाणभिन्नहृदया निपेतुषी निपतिता सती । 'क्वसुश्च' इति क्वसुप्रत्ययः । 'उगितश्च' इति ङीप् । सा केवलामेकाम् । 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः' इत्यमरः । स्वकाननभुवं न व्यकम्पयत् । किन्तु विष्टप-त्रयस्य लोकत्रयस्य पराजयेन स्थिरां रावणश्रियमपि व्यकम्पयत् । ताडकावधे-नैव रावणस्यापि भयमुत्पन्नमिति भावः ॥ १९ ॥

अथ ताडकाया अभिसारिकया समाधिरभिधीयते—

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ २० ॥

राममन्मथेति । सा निशासु चरतीति निशाचरी राक्षसी । अभिसारिका च ।

दुःसहेन सोढुमशक्येन राम एव मन्मथः। अन्यत्राभिरामो मन्मथः। तस्य शरेण हृदये उरसि मनसि च। 'हृदयं मन उरसोः' इति विश्वः। ताडिता निशाचरी म-न्मथवद्दुर्गन्धि गन्धवद्रुधिरमेव चन्दनं तेनोक्षिता सिक्ता। अपरत्र मन्मथपक्षे सुग-न्धिनी ये रुधिरचन्दने कुङ्कुमचन्दने ताभ्यामुक्षिता। यद्वा गन्धवत् रुधिरमिव चन्दनं हरिचन्दनमित्यर्थः। 'रुधिरं कुङ्कुमासृजोः' इत्युभयत्रापि विश्वः। जीविते-शस्यान्तकस्य प्राणेश्वरस्य च वसतिं जगाम ॥२०॥

नैर्ऋतघ्नमथ मन्त्रवन्मुनेः प्रापदस्त्रमवदानतोषितात्।
ज्योतिरिन्धननिपाति भास्करात्सूर्यकान्त इव ताडकान्तकः ॥२१॥

नैर्ऋतघ्नमिति। अथानन्तरं ताडकान्तको रामः। अवदानं पराक्रमः। 'परा-क्रमोऽवदानं स्यात्' इति भागुरिः। तेन तोषितान्मुनेः नैर्ऋतान् राक्षसान्हन्तीति नैर्ऋतघ्नम्। 'अमनुष्यकर्तृके च' इति टक्। मन्त्रवन्मन्त्रयुक्तमस्त्रम्। सूर्यकान्तो मणिविशेषो भास्करादिन्धनानि निपातयतीतीन्धननिपाति अग्न्याख्यं ज्योतिरिव। प्रापत्प्राप्तवान् ॥२१॥

वामनाश्रमपदं ततः परं पावनं श्रुतमृषेरुपेयिवान्।
उन्मनाः प्रथमजन्मचेष्टितान्यस्मरन्नपि बभूव राघवः ॥२२॥

वामनेति। ततः परं राघवः। ऋषेः कौशिकस्य वाक्यात् श्रुतं पावनं शोधनं वामनस्य स्वपूर्वावतारविशेषस्याश्रमपदमुपेयिवानुपगतः सन्। 'उपेयिवाननाश्वा-ननूचानश्च' इति निपातः। प्रथमजन्मचेष्टितानि रामवामनयोरैक्यात्स्वचेष्टितान्यपि रामस्यावतारान्तरत्वेन संस्कारदौर्बल्यादस्मरन्नपि उन्मना उत्सुको बभूव ॥२२॥

आससाद मुनिरात्मनस्ततः शिष्यवर्गपरिकल्पितार्हणम्।
बद्धपल्लवपुटाञ्जलिद्रुमं दर्शनोन्मुखमृगं तपोवनम् ॥२३॥

आससादेति। ततो मुनिः। शिष्यवर्गेण परिकल्पिता संपादितार्हणा पूजासा-मग्री यस्मिंस्तत्तथोक्तम्। 'सपर्यार्चार्हणाः समाः' इत्यमरः। बद्धाः पल्लवपुटा एवा-ञ्जलयो यैस्ते तथाभूता द्रुमा यस्मिंस्तत्तथोक्तम्। दर्शनेन मुनिदर्शनेनोन्मुखा मृगा यस्मिंस्तत्। आत्मनस्तपोवनमाससाद। एतेन विषयवासिष्वप्यतिथिसत्कारपरत्वा-त्स्वविनयवत्तया सूचिता ॥२३॥

तत्र दीक्षितमृषिं ररक्षतुर्विघ्नतो दशरथात्मजौ शरैः।
लोकमन्धतमसात्क्रमोदितौ रश्मिभिः शशिदिवाकराविव ॥२४॥

तत्रेति । तत्र तपोवने आश्रमे दशरथात्मजौ दीक्षितं दीक्षासंस्कृतमृषिं शरैर्विघ्नतो विघ्नेभ्यः । क्रमेण पर्यायेण रात्रिंदिवसयोरुदितौ शशिदिवाकरौ रश्मिभिः किरणैरन्धतमसाद्गाढान्धकारात् । 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः । "अवसमन्धेभ्यस्तमसः" इति समासान्तोऽच्प्रत्ययः । लोकमिव ररक्षतुः । रथोद्धतावृत्तमिदम् ॥२४॥

वीक्ष्य वेदिमथ रक्तबिन्दुभिर्बन्धुजीवपृथुभिः प्रदूषिताम् ।
सम्भ्रमोऽभवदपोढकर्मणामृत्विजां च्युतविकङ्कतस्रुचाम् ॥ २५ ॥

वीक्ष्येति । अथ बन्धुजीवपृथुभिर्बन्धुजीवकुसुमस्थूलैः । 'रक्तकस्तु बन्धूको बन्धुजीवकः' इत्यमरः । रक्तबिन्दुभिः प्रदूषितामुपहतां वेदिं वीक्ष्य । अपोढकर्माणां त्यक्तकर्माणामस्तकर्मणां । च्युता विकङ्कतमुखी यज्ञपात्राणि येभ्यस्तेषामृत्विजां याजकानां सम्भ्रमोऽभवत् । विकङ्कतग्रहणं खदिरादीनामुपलक्षणम् । स्रुगादीनां खदिरादिप्रकृतिकत्वात् । स्रुवादिपात्रस्यैव विकङ्कतप्रकृतिकत्वात् । 'विकङ्कतः स्रुवावृक्षः' इत्यमरः । अतः स्रुक्शब्दस्य विकङ्कतप्रकृतिकत्वमस्तु । प्रकृतेऽपि याजकसम्भवात् । यथाह भगवानापस्तम्बः — खादिरः स्रुवः पर्णमयी जुहूर्वैकङ्कती ध्रुवा [illegible] ॥२५॥

उन्मुखः सपदि लक्ष्मणाग्रजो बाणमाश्रयमुखात्समुद्धरन् ।
रक्षसां बलमपश्यदम्बरे गृध्रपक्षपवनेरितध्वजम् ॥ २६ ॥

उन्मुख इति । सपदि लक्ष्मणाग्रजो रामो बाणमाश्रयमुखात्तूणीरमुखात्समुद्धरन् । उन्मुख ऊर्ध्वमुखोऽम्बरे । गृध्रपक्षपवनैरीरिताः कम्पिता ध्वजा यस्य तत्तथोक्तम् । रक्षसां दुर्निमित्तसूचनमेतत् । तदुक्तं शकुनार्णवे—"[illegible] चरन्ति पक्षिणो मूर्ध्नि ध्वजोर्ध्वभागे" इति । रक्षसां निशाचराणां बलमपश्यत् ॥२६॥

तत्र यावधिपती मखद्विषां तौ शरव्यमकरोत्स नेतरान् ।
किं महोरगविसर्पिविक्रमो राजिलेषु गरुडः प्रवर्तते ॥ २७ ॥

तत्रेति । स रामस्तत्र रक्षसां मध्ये यौ मखद्विषां मखं मखं द्विषन्तीति तेषाम् । अधिपती तौ सुबाहुमारीचौ शरव्यं लक्ष्यमकरोत् । 'लक्ष्यं लक्ष्यं शरव्यं च' इत्यमरः । इतरान्नाकरोत् । तथा हि महोरगविसर्पिविक्रमो गरुडो गरुत्मान्राजिलेषु जलव्यालेषु प्रवर्तते किम् न प्रवर्तत इत्यर्थः । 'अलगर्दो जलव्यालः समौ राजिलडुण्डुभौ' इत्यमरः ॥ २७ ॥

सोऽस्त्रमुग्रजवमस्त्रकोविदः सन्दधे धनुषि वायुदैवतम् ।
तेन शैलगुरुमप्यपातयत्पाण्डुपत्रमिव ताडकासुतम् ॥ २८ ॥

तैः शिवेषु वसतिर्गताध्वभिः सायमाश्रमतरुष्वगृह्यत ।
येषु दीर्घतपसः परिग्रहो वासवक्षणकलत्रतां ययौ ॥ ३३ ॥

तैरिति । गताध्वभिस्तैस्त्रिभिः सायं शिवेषु रम्येष्वाश्रमतरुषु वसतिः स्थानं अगृह्यत । येष्वाश्रमतरुषु दीर्घतपसो गौतमस्य परिग्रहः पत्नी । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः । अहल्येति यावत् । वासवस्येन्द्रस्य क्षणकलत्रतां ययौ ॥ ३३ ॥

प्रत्यपद्यत चिराय यत्पुनश्चारु गौतमवधूः शिलामयी ।
स्वं वपुः स किल किल्बिषच्छिदां रामपादरजसामनुग्रहः ॥ ३४ ॥

प्रत्यपद्यतेति । शिलामयी भर्तृशापाच्छिलात्वं प्राप्ता गौतमवधूरहल्या चारु स्वं वपुश्चिराय पुनः प्रत्यपद्यत प्राप्तवती यत् । स किल्बिषच्छिदां पापहारिणाम् । 'पापं किल्बिषकल्मषम्' इत्यमरः । रामपादरजसामनुग्रहः किल प्रसादः किलेति श्रूयते ॥ ३४ ॥

राघवान्वितमुपस्थितं मुनिं तं निशम्य जनको जनेश्वरः ।
अर्थकामसहितं सपर्यया देहबद्धमिव धर्ममभ्यगात् ॥ ३५ ॥

राघवेति । राघवाभ्यामन्वितं युक्तमुपस्थितमागतं तं मुनिं जनको जनेश्वरो निशम्य आकर्ण्य । अर्थकामाभ्यां सहितं देहबद्धं बद्धदेहं, मूर्तिमन्तमित्यर्थः । धर्मं ताभ्यामविरुद्धः । धर्ममिव । सपर्ययाऽभ्यगात्प्रत्युद्गतवान् ॥ ३५ ॥

तौ विदेहनगरीनिवासिनां गां गताविव दिवः पुनर्वसू ।
मन्यते स्म पिबतां विलोचनैः पक्ष्मपातमपि वञ्चनां मनः ॥ ३६ ॥

ताविति । दिवः सुरवर्त्मन आकाशात् । 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः । गां भुवं गतौ । 'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्यमरः । पुनर्वसू इव तन्नामनक्षत्रविशेषाविव स्थितौ । तौ राघवौ विलोचनैः पिबताम् अत्यासक्त्या पश्यतामित्यर्थः । विदेहनगरी मिथिला तन्निवासिनां मनः कर्तृ पक्ष्मपातं निमेषमपि तद्दर्शनप्रतिबन्धकत्वाद्वञ्चनां विप्रलम्भं मन्यते स्म मेने । "लट् स्मे" इति भूतार्थे लट् ॥ ३६ ॥

यूपवत्यवसिते क्रियाविधौ कालवित्कुशिकवंशवर्धनः ।
राममिष्वसनदर्शनोत्सुकं मैथिलाय कथयांबभूव सः ॥ ३७ ॥

यूपवतीति । यूपवति क्रियाविधौ कर्मानुष्ठाने यज्ञविधिरर्थः । अवसिते समाप्ते

इति कथितवत्सरः कुशिकवंशवर्धनः स मुनी रामम् । अस्यतेऽनेनेत्यसनम् । धनुष्यसनमित्यसनं चापम् । तस्य दर्शने कौतुकं मैथिलस्य जनकस्य कथयाम्बभूव कथितवान् ॥ ४७ ॥

तस्य वीक्ष्य ललितं वपुः शिशोः पार्थिवः प्रथितवंशजन्मनः ।
स्वं विचिन्त्य च धनुर्दुरानमं पीडितो दुहितृशुल्कसंस्थया ॥ ४८ ॥

तस्येति । पार्थिवो जनकः । प्रथितवंशे जन्म यस्य तथोक्तस्य । एतेन वरसंपत्तिरुक्ता । शिशोस्तस्य रामस्य ललितं कोमलं वपुर्वीक्ष्य । स्वं स्वकीयं दुरानममानमयितुमशक्यम् । धनुर्विचिन्त्य च दुहितृशुल्कं कन्यामूल्यं नाम तृतीयम् । 'शुल्कं घट्टादिदेये स्याज्जामातुर्धनयाचनेऽपि च' इति विश्वः । तस्य धनुर्भङ्गरूपस्य संस्थया स्थित्या । सत्या स्थितौ व्रते नाशे' इति विश्वः । पीडितो बाधितः । शिशुना रामेण दुष्करमिति दुःखित इति भावः ॥ ४८ ॥

अब्रवीच्च भगवन्मतङ्गजैर्यद्बृहद्भिरपि कर्म दुष्करम् ।
तत्र नाहमनुमन्तुमुत्सहे मोघवृत्ति कलभस्य चेष्टितम् ॥ ४९ ॥

अब्रवीदिति । अब्रवीच्च । मुनिमिति शेषः । किमिति । हे भगवन्मुने ! बृहद्भिर्मतङ्गजैर्महागजैरपि दुष्करं यत्कर्म तत्र कर्मणि कलभस्य बालगजस्य । 'कलभः करिशावकः' इत्यमरः । मोघवृत्ति व्यर्थव्यापारं चेष्टितं साहसमनुमन्तुमहं नोत्सहे ॥

ह्रेपिता हि बहवो नरेश्वरास्तेन तात ! धनुषा धनुर्भृतः ।
ज्यानिघातकठिनत्वचो भुजान्स्वान्विधूय धिगिति प्रतस्थिरे ॥ ५० ॥

ह्रेपितेति । हे तात ! तेन धनुषा बहवो धनुर्भृतो नरेश्वरा ह्रेपिता ह्रियं प्रापिता हि । जिह्रेतेर्ण्यन्तात्कर्मणि क्तः । "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ" इत्यनेन पुगागमः । ते नरेश्वरा ज्यानिघातैः कठिनत्वचः स्वान्भुजान्धिगिति विधूय धिक्कृत्य प्रतस्थिरे प्रस्थिताः ॥ ५० ॥

प्रत्युवाच तमृषिर्निशम्यतां सारतोऽयमथवा गिरा कृतम् ।
चाप एव भवतो भविष्यति व्यक्तशक्तिरशनिर्गिराविव ॥ ५१ ॥

प्रत्युवाचेति । ऋषिस्तं नृपं प्रत्युवाच । किमिति । अयं रामः सारतो बलेन निशम्यतां श्रूयताम् । अथवा गिरा सारवर्णनया कृतमलम् । 'गीर्णे वाक्येऽस्त्रियाम्' । युगपर्याप्तयोः कृतम्' इत्यमरः । अव्ययं चैतत् । 'तं निषेधनिषेधयोः' इति गणव्याख्याने । गिरेति करणे तृतीया । निषेधक्रियां प्रति करणत्वात् । किन्तु

निर्वृतो गिरिरिव । चापे धनुष्येव भवतस्तव व्यक्त्याविर्भूतसारो भविष्यति ॥ ४१ ॥

एवमाप्तवचनात्स पौरुषं काकपक्षकधरेऽपि राघवे ।
श्रद्दधे त्रिदशगोपमात्रके दाहशक्तिमिव कृष्णवर्त्मनि ॥ ४२ ॥

एवमिति । एवमाप्तस्य यथार्थवक्तुर्मुनेर्वचनात्स जनकः काकपक्षधरे बालेऽपि राघवे पुरुषस्य कर्म पौरुषं पराक्रमम् । "हायनान्तयुवादिभ्योऽण्" इति युवादित्वादण् । पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसि इति विश्वः । त्रिदशगोप इन्द्रगोपकीटः प्रमाणमस्य त्रिदशगोपमात्रः । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इत्येव मात्रच्प्रत्ययः । ततः स्वार्थे कप्रत्ययः । तस्मिन्कृष्णवर्त्मनि वह्नौ दाहशक्तिमिव श्रद्दधे विश्वस्तवान् ॥ ४२ ॥

व्यादिदेश गणशोऽथ पार्श्वगान्कार्मुकाभिहरणाय मैथिलः ।
तैजसस्य धनुषः प्रवृत्तये तोयदानिव सहस्रलोचनः ॥ ४३ ॥

व्यादिदेशेति । अथ मैथिलः पार्श्वगाननुचरान्कार्मुकाभिहरणाय कार्मुकमानेतुम् । "तुमर्थाच्च भाववचनात्" इति चतुर्थी । सहस्रलोचन इन्द्रस्तैजसस्य तेजोमयस्य धनुषः प्रवृत्तये आविर्भावाय तोयदान्मेघानिव गणशो गणशः । "संख्यैकवचनाच्च वीप्सायाम्" इति शस्प्रत्ययः । व्यादिदेश प्रजिघाय ॥ ४३ ॥

तत्प्रसुप्तभुजगेन्द्रभीषणं वीक्ष्य दाशरथिराददे धनुः ।
विद्रुतक्रतुमृगानुसारिणं येन बाणमसृजद्वृषध्वजः ॥ ४४ ॥

तदिति । दाशरथी रामः प्रसुप्तभुजगेन्द्र इव भीषणं भयङ्करं तद्धनुर्वीक्ष्याददे जग्राह । वृषो ध्वजचिह्नं यस्य स शिवो येन धनुषा । क्रतुरेव मृगः । विद्रुतं पलायितं क्रतुमृगमनुसरति । ताच्छील्ये णिनिः । तं विद्रुतक्रतुमृगानुसारिणं बाणमसृजदमुञ्चत् ॥

आततज्यमकरोत्स संसदा विस्मयस्तिमितनेत्रमीक्षितः ।
शैलसारमपि नातियत्नतः पुष्पचापमिव पेशलं स्मरः ॥ ४५ ॥

आततज्यमिति । स रामः संसदा सभया विस्मयेन स्तिमिते नेत्रे यस्मिन्कर्मणि तद्यथा तथेक्षितः सन् । शैलस्येव सारो यस्य तच्छैलसारमपि धनुः । स्मरः पेशलं कोमलं पुष्पचापमिव नातियत्नतो नातियत्नात् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । आततज्यमधिज्यमकरोत् ॥ ४५ ॥

भज्यमानमतिमात्रकर्षणात्तेन वज्रपरुषस्वनं धनुः ।
भार्गवाय दृढमन्यवे पुनः क्षत्रमुद्यतमिव न्यवेदयत् ॥ ४६ ॥

भज्यमानेति। तेन रामेणातिमात्रकर्षणाद्भज्यमानमत एव वज्रपरुषस्वनम्। वज्रस्येव परुषः स्वनो यस्य तत्। धनुः कर्तृ। दृष्टमन्यवे दृष्टकोपाय। मन्युः क्रोधे क्रतौ दैन्ये इति विश्वः। भार्गवाय क्षत्रं क्षत्रकुलं पुनरुद्धृतं न्यवेदयदिव ज्ञापयामासेव ॥ ४६ ॥

दृष्टसारमथ रुद्रकार्मुके वीर्यशुल्कमभिनन्द्य मैथिलः।
राघवाय तनयामयोनिजां रूपिणीं श्रियमिव न्यवेदयत् ॥४७॥

दृष्टसारमिति। अथ मैथिलो जनको रुद्रकार्मुके धनुष्यपि दृष्टः सारः स्थिरांशो यस्य तद्दृष्टसारं निर्णीतविक्रमम्। सारो बले स्थिरांशे च इति विश्वः। वीर्यमेव शुल्कं, धनुर्भङ्गरूपमित्यर्थः। अभिनन्द्य राघवाय रामायायोनिजां देवयजनसम्भवां तनयां सीतां रूपिणीं श्रियमिव साक्षाल्लक्ष्मीमिव न्यवेदयदर्पितवान्। भार्येति शेषः ॥ ४७ ॥

तदेवार्थं सोपस्कारमाह—

मैथिलः सपदि सत्यसङ्गरो राघवाय तनयामयोनिजाम्।
सन्निधौ द्युतिमतस्तपोनिधेरग्निसाक्षिक इवातिसृष्टवान् ॥ ४८ ॥

मैथिल इति। सत्यसङ्गरः सत्यप्रतिज्ञः। अथ प्रतिज्ञाजिसंविदापत्सु सङ्गरः इत्यमरः। मैथिलो राघवायायोनिजां तनयां द्युतिमतस्तेजस्विनस्तपोनिधेः कौशिकस्य सन्निधौ। अग्निः साक्षी यस्य सोऽग्निसाक्षिकः। "शेषाद्विभाषा" इति कप्प्रत्ययः। स इव। अतिसृष्टवान् दत्तवान् ॥ ४८ ॥

प्राहिणोच्च महितं महाद्युतिः कोसलाधिपतये पुरोधसम्।
भृत्यभावि दुहितुः परिग्रहाद्दिश्यतां कुलमिदं निमेरिति ॥ ४९ ॥

प्राहिणोदिति। महाद्युतिर्जनको महितं पूजितं पुरोधसं पुरोहितं कोसलाधिपतये दशरथाय प्राहिणोत्प्रहितवान्। किमिति। निमिर्नाम जनकानां पूर्वजः कश्चित्। इदं निमेः कुलं दुहितुः सीतायाः परिग्रहात्स्नुषात्वेन स्वीकाराद्धेतोः। भृत्यस्य भावो भृत्यभावः सोऽस्यास्तीति भृत्यभावि दिश्यतामनुमन्यतामिति। त्वयेति शेषः ॥ ४९ ॥

अन्वियेष सदृशीं स च स्नुषां प्राप चैनमनुकूलवाग्द्विजः।
सद्य एव सुकृतां हि पच्यते कल्पवृक्षफलधर्मि काङ्क्षितम् ॥५०॥

अन्वियेषेति। स दशरथश्च सदृशीमनुरूपां स्नुषामन्वियेष रामविवाहमाकाङ्क्षदित्यर्थः। अनुकूलवाक्स्नुषाप्रार्थनारूपानुकूलार्थवादी द्विजो जनकपुरोधाः

सततानन्यत्वेन समत्वं प्राप । तथाहि । कर्मस्थक्रियस्य यो धर्मः यथा पाकरूपः सोऽस्मास्तीति कर्मस्थक्रियधर्मि । अतः सुकरो पुष्पकारिणा कर्तृत्वं मयोरपा सम एव पच्यते हि । कर्मकर्तरि लट् । स्वयमेव पक्वं भवतीत्यर्थः । कर्मवत्कर्मणा तुल्यक्रियः" इति कर्मवद्भावात् । 'भावकर्मणोः' इत्यात्मनेपदम् ॥ ५० ॥

तस्य कल्पितपुरस्क्रियाविधेः शुश्रुवान्वचनमग्रजन्मनः ।
उच्चचाल वलभित्सखो वशी सैन्यरेणुमुषितार्कदीधितिः ॥ ५१ ॥

तस्येति । वलभित्सख इन्द्रसखः वशी स्वाधीनात्मा । 'वशगामसक्तायां च' इति विश्वः । कल्पितपुरस्क्रियाविधेः कृतपूजाविधेस्तस्याग्रजन्मनो द्विजस्य वचनं जनकेन सन्दिष्टं शुश्रुवाञ्छ्रुतवान् । स्मृतेः कसुः । सैन्यरेणुमुषितार्कदीधितिः सन्नुच्चचाल प्रतस्थे ॥ ५१ ॥

आससाद मिथिलां स वेष्टयन्पीडितोपवनपादपां बलैः ।
प्रीतिरोधमसहिष्ट सा पुरी स्त्रीव कान्तपरिभोगमायतम् ॥ ५२ ॥

आससादेति । स दशरथो बलैः सैन्यैः पीडितोपवनपादपां मिथिलां वेष्टयन्नवरोधं कुर्वन् आससाद । सा पुरी स्त्री युवतिरायतमतिप्रसक्तं कान्तपरिभोगं प्रियसम्भोगमिव । प्रीत्या रोधं प्रीतिरोधमसहिष्ट सोढवती । द्वेषरोधं तु न सहत इति भावः ॥ ५२ ॥

तौ समेत्य समये स्थितावुभौ भूपती वरुणवासवोपमौ ।
कन्यकातनयकौतुकक्रियां स्वप्रभावसदृशीं वितेनतुः ॥ ५३ ॥

ताविति । समये विवाहादौ स्थितावाचारनिष्ठौ । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । वरुणवासवावुपमोपमानं ययोस्तौ तथोक्तौ । उभौ भूपती जनकदशरथौ समेत्य स्वप्रभावसदृशीमात्ममहिमानुरूपां कन्यकानां सीतादीनां तनयानां रामादीनां च कौतुकक्रियां विवाहोत्सवं वितेनतुर्विस्तृतवन्तौ-रति दैर्भिद् ॥ ५३ ॥                    रस्य

पार्थिवीमुदवहद्रघूद्वहो लक्ष्मणस्तदनुजामथोर्मिलाम् ।
यौ तयोरवरजौ वरौजसौ तौ कुशध्वजसुते सुमध्यमे ॥ ५४ ॥

पार्थिवीमिति । उदवहदुपयेमे । रघूणामुद्वहो रघूद्वहो रामः पृथिव्या अपत्यं स्त्री पार्थिवी । "तस्यापत्यम्" इत्यण् । 'टिड्ढाणञ्' इति ङीप् । तां सीतामुदवहत्परिणीतवान् । अथ लक्ष्मणस्तस्याः सीताया अनुजां

कन्यौरसीमूर्मिलामुपयमत् । यौ यवीयांसौ तयो रामलक्ष्मणयोरवरजावनुजातौ भरतशत्रुघ्नौ तौ सुमध्यमे कुशध्वजस्य जनकानुजस्य सुते कन्यके माण्डवीं श्रुतकीर्तिं चोद्वहताम् । नात्र व्युत्क्रमविवाहदोषो भिन्नोदरत्वात् । तदुक्तम्— "पितृव्यपुत्रे सापत्न्ये परनारीसुतेषु च । विवाहाधानयज्ञादौ परिवेत्राद्यदूषणम्" ॥ इति ॥ ५४ ॥

ते चतुर्थसहितास्त्रयो बभुः सूनवो नववधूपरिग्रहाः ।
सामदानविधिभेदविग्रहाः सिद्धिमन्त इव तस्य भूपतेः ॥ ५५ ॥

त इति । ते चतुर्थसहितास्त्रयः चत्वार इत्यर्थः । वृत्तानुसारेणैवमुक्तम् । सूनवो नववधूपरिग्रहाः । सिद्धिमन्तः फलसिद्धियुक्तास्तस्य भूपतेर्दशरथस्य सामदानविभेदनिग्रहाश्चत्वार उपाया इव बभुः । विधीयत इति विधिः । दानमेव विधिः । विग्रहो दण्डः सूनूनामुपायचतुर्भूता सिद्धिभिश्चौपम्यमित्यनुसन्धेयम् ॥ ५५ ॥

ता नराधिपसुता नृपात्मजैस्ते च ताभिरगमन्कृतार्थताम् ।
सोऽभवद्वरवधूसमागमः प्रत्ययप्रकृतियोगसंनिभः ॥ ५६ ॥

ता इति । ता नराधिपसुता जनककन्यका नृपात्मजैर्दशरथपुत्रैः कृतार्थतां कृतकृत्यत्वमवाप्य साफल्यमगमन् । ते राघवाश्च ताभिः सीतादिभिस्तथा । किं च स वराणां वधूनां च समागमः । प्रत्ययानां प्रकृतीनां च योग इव संनिभा तीति संनिभः अभवत् । पचाद्यच् । प्रत्ययाः सनादयो धातुभ्यो विधीयन्ते ताः प्रकृतयः । यथा प्रकृतिप्रत्यययोः सैकार्थसाधनत्वं तद्वदत्रापीति भावः ॥ ५६ ॥

एवमात्तरतिरात्मसम्भवांस्तान्निवेश्य चतुरोऽपि तत्र सः ।
अध्वसु त्रिषु विसृष्टमैथिलः स्वां पुरीं दशरथो न्यवर्तत ॥ ५७ ॥

एवमिति । एवमात्तरतिः प्राप्तानन्दः स दशरथस्तांश्चतुरोऽप्यात्मसम्भवान्सुतान् तत्र मिथिलायां निवेश्य विवाह्य । 'निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्तितः' इति विश्वः । त्रिष्वध्वसु प्रयाणेषु गतेषु विसृष्टमैथिलः सन् । स्वां पुरीं न्यवर्तत । स्वतन्त्रक्रियापेक्षया कर्मत्वं पुर्याः ॥ ५७ ॥

तस्य जातु मरुतः प्रतीपगा वर्त्मसु ध्वजतरुप्रमाथिनः ।
चिक्लिशुर्भृशतया वरूथिनीमुत्तटा इव नदीरयाः स्थलीम् ॥ ५८ ॥

तस्येति । जातु कदाचिद्वर्त्मसु ध्वजा एव तरवस्तान्प्रमथ्नन्ति ये ते ध्वजतरुप्रमाथिनः प्रतीपगाः प्रतिकूलगामिनो मरुतः । तस्य नदीरयाः स्थलीमकृत्रिमभू

कौशिकं प्रश्नमित्यर्थः । तं भार्गवं दृष्ट्वा दशरथः बालाः सूनवो यस्य स पार्थिवो विषसाद । स्वस्यापि वीर्यक्षत्रप्रभावातिक्रमेऽपत्यान्निजविषयेऽपि भयहेतोऽ-मपरिस्पर्शः ॥ ६७ ॥

नाम राम इति तुल्यमात्मजे वर्तमानमहिते च दारुणे ।
हृदयस्य भयदायि चाभवद्रत्नजातमिव हारसर्पयोः ॥ ६८ ॥

नामेति । आत्मजे पुत्रे दारुणे वैरिण्यहिते शत्रौ च तुल्यमविशेषेण वर्तमानं राम इति नाम । हारसर्पयोर्वर्तमानं रत्नजातं रत्नजातिरिव । 'जातिर्जातं च सामान्यं व्यक्तिस्तु पृथगात्मता' इत्यमरः । अस्य दशरथस्य हृदयं हृदयङ्गमं भय दायि भयङ्करं चाभवत् ॥ ६८ ॥

अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम् ॥ ६९ ॥

अर्घ्यमिति । स भार्गवः । अर्घ्यमर्घ्यमिति वादिनं नृपमनवेक्ष्य । यतो यत्र भरताग्रजस्ततस्तत्र । "इतराभ्योऽपि दृश्यन्ते" इति सार्वविभक्तिकस्तसिः । क्षत्रे क्षत्रकुले विषये यः कोपदहनो रोषाग्निस्तस्यार्चिषं ज्वालामिव स्थिताम् । 'ज्वाला-भासोर्नपुंस्यर्चिः' इत्यमरः । उदग्रा तारका कनीनिका यस्यास्ताम् । 'तारकाक्ष्णः कनीनिका' इत्यमरः । दृशं सन्दधे ॥ ६९ ॥

तेन कार्मुकनिषक्तमुष्टिना राघवो विगतभीः पुरोगतः ।
अङ्गुलीविवरचारिणं शरं कुर्वता निजगदे युयुत्सुना ॥ ७० ॥

तेनेति । कार्मुकनिषक्तमुष्टिना । शरमङ्गुलीविवरचारिणं कुर्वता युयुत्सुना यो-द्धुमिच्छता । तेन भार्गवेण कर्त्रा । विगतभीर्निर्भीकः सन् । पुरोगतोऽग्रगतो रा-घवो निजगदे उक्तः । कर्मणि लिट् ॥ ७० ॥

क्षत्रजातमपकारवैरि मे तन्निहत्य बहुशः शमं गतः ।
सुप्तसर्प इव दण्डघट्टनाद्रोषितोऽस्मि तव विक्रमश्रवात् ॥ ७१ ॥

क्षत्रजातमिति । क्षत्रजातं क्षत्रजातिर्मेऽपकारेण पितृवधरूपेण वैरि द्वेषि । तत्क्षत्रजातं बहुधा एकविंशतिवारान्निहत्य शमं गतोऽस्मि । तथापि सुप्तसर्पो दण्डघ-ट्टनात् यष्टिप्रहरणादिव तव विक्रमस्य श्रवणात्कर्णनाद्रोषितो रोषं प्रापितोऽस्मि ॥ ७१ ॥

मैथिलस्य धनुरन्यपार्थिवैस्त्वं किलानमितपूर्वमक्षणोः ।
तन्निशम्य भवता समर्थये वीर्यशृङ्गमिव भग्नमात्मनः ॥ ७२ ॥

मैथिलस्येति । धन्वैः पार्थिवैः । अनमितपूर्वं पूर्वमनमितम् । सुप्सुपेति समासः । तस्य मैथिलस्य धनुषस्तत्समस्य भञ्जनात् । किंवदन्ति वार्तायाम् । वार्ताप्रवृत्त्योः किंवदन्ती इत्यमरः । तच्छ्रुत्वैव निपातनाकर्ण्य भवता आत्मनो मम वीर्यमेव शृङ्गं भग्नमिव समर्थये मन्ये ॥ ७१ ॥

अन्यदा जगति राम इत्ययं शब्द उच्चरित एव मामगात् ।
व्रीडमावहति मे स सम्प्रति व्यस्तवृत्तिरुदयोन्मुखे त्वयि ॥७२॥

अन्यदेति । अन्यदाऽन्यस्मिन्काले । जगति राम इत्ययं शब्द उच्चरितः सन् मामेवागात् अगमत् । सम्प्रति त्वय्युदयोन्मुखे सति व्यस्तवृत्तिर्विपरीतवृत्तिः । अन्यगामीति यावत् । स शब्दो मे व्रीडमावहति लज्जां करोति ॥ ७२ ॥

बिभ्रतोऽस्त्रमचलेऽप्यकुण्ठितं द्वौ रिपू मम मतौ समागसौ ।
धेनुवत्सहरणाच्च हैहयस्त्वं च कीर्तिमपहर्तुमुद्यतः ॥ ७३ ॥

बिभ्रत इति । अचले क्रौञ्चाद्रावप्यकुण्ठितमस्त्रं बिभ्रतो मम द्वौ समागसौ तुल्यापराधौ रिपू मतौ । आगोऽपराधो मन्तुश्च इत्यमरः । धेनोः पितृहोमधेनोर्वत्सस्य हरणाद्धेतोर्हैहयः कार्तवीर्यश्च । कीर्तिमपहर्तुमुद्यत उद्युक्तस्त्वं च । वत्सहरणे भारताख्यानम्—"प्रमत्तस्याश्रमात्तस्य होमधेन्वास्तथा बलात् । जहार वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान्" ॥ इति ॥ ७३ ॥

क्षत्रियान्तकरणोऽपि विक्रमस्तेन मामवति नाजिते त्वयि ।
पावकस्य महिमा स गण्यते कक्षवज्ज्वलति सागरेऽपि यः ॥७४॥

क्षत्रियान्तेति । तेन कारणेन । क्रियते येनासौ करणः । क्षत्रियान्तस्य करणोऽपि विक्रमः । त्वय्यजिते । मां नावति न प्रीणाति । तथा हि । पावकस्याग्नेर्महिमा स गण्यते । यः कक्षवत्तृण इव । 'तत्र तस्येव' इति सप्तम्यर्थे वतिः । सागरेऽपि ज्वलति ॥ ७४ ॥

विद्धि चात्तबलमोजसा हरेरैश्वरं धनुरभाजि यत्त्वया ।
खातमूलमनिलो नदीरयैः पातयत्यपि मृदुस्तटद्रुमम् ॥ ७५ ॥

विद्धीति । किं च ऐश्वरं धनुर्हरेर्विष्णोरोजसा बलेनात्तबलं हृतसारं च विद्धि । यद्धनुस्त्वयाऽभाज्यभञ्जि । 'भञ्जेश्च चिणि' इति विभाषया नलोपः । तथा हि नदीरयैः खातमूलमवदारितपादं तटद्रुमं मृदुरप्यनिलः पातयति । ततः शिवस्यापि रौद्रं धनुरभाङ्क्षमिति मा गर्वीरिति भावः ॥ ७५ ॥

तन्मदीयमिदमायुधं ज्यया सङ्गमय्य सशरं विकृष्यताम् ।
तिष्ठतु प्रधनमेवमप्यहं तुल्यबाहुतरसा जितस्त्वया ॥ ७७ ॥

तदिति । तत्तस्मान्मदीयमिदमायुधं कार्मुकं ज्यया सङ्गमय्य संयोज्य । "ल्यपि लघुपूर्वात्" इति णेरयादेशः । सशरं यथा तथा त्वया विकृष्यताम् । प्रधनं रणस्तिष्ठतु, प्रधनं तावदास्तामित्यर्थः । "प्रधनं मारणे रणे" इति विश्वः । एवमपि मत्कार्मुककर्षेऽप्यहं तुल्यबाहुतरसा समबाहुबलेन । "रंहस्तरसी तु रयः स्यदः" इत्यमरः । त्वया जितः ॥ ७७ ॥

कातरोऽसि यदि वोद्गतार्चिषा तर्जितः परशुधारया मम ।
ज्यानिघातकठिनाङ्गुलिर्वृथा बध्यतामभययाचनाञ्जलिः ॥ ७८ ॥

कातर इति । यदि वोद्गतार्चिषोद्गतत्विषा मम परशुधारया तर्जितः कातरोऽसि भीतोऽसि । वृथा ज्यानिघातेन मौर्वीसङ्घट्टनेन कठिना अङ्गुल्यो यस्य स तथोक्तोऽभययाचनाञ्जलिरभयप्रार्थनाञ्जलिर्बध्यताम् । "द्वौ संयुतावञ्जलिः पुमान्" इत्यमरः ॥ ७८ ॥

एवमुक्तवति भीमदर्शने भार्गवे स्मितविकम्पिताधरः ।
तद्धनुर्ग्रहणमेव राघवः प्रत्यपद्यत समर्थमुत्तरम् ॥ ७९ ॥

एवमिति । भीमदर्शने भार्गवे एवमुक्तवति सति । राघवः स्मितेन हासेन विकम्पिताधरः सन् । तद्धनुर्ग्रहणमेव समर्थमुचितमुत्तरं प्रत्यपद्यताङ्गीचकार ॥ ७९ ॥

पूर्वजन्मधनुषा समागतः सोऽतिमात्रलघुदर्शनोऽभवत् ।
केवलोऽपि सुभगो नवाम्बुदः किं पुनस्त्रिदशचापलाञ्छितः ॥ ८० ॥

पूर्वजन्मेति । पूर्वजन्मनि नारायणावतारे यद्धनुस्तेन समागतः सङ्गतः स रामोऽतिमात्रमत्यन्तं लघुदर्शनः प्रियदर्शनोऽभवत् । तथा हि । नवाम्बुदः केवलो रिक्तोऽपि सुभगः सौम्यत्वात् । त्रिदशचापेनेन्द्रधनुषा लाञ्छितश्चेदस्ति किं पुनः । सुभग एवेति भावः ॥ ८० ॥

तेन भूमिनिहितैककोटि तत्कार्मुकं च बलिनाऽधिरोपितम् ।
निष्प्रभश्च रिपुरास भूभृतां धूमशेष इव धूमकेतनः ॥ ८१ ॥

तेनेति । बलिना तेन रामेण भूमिनिहितैककोटि यस्य तत् । कर्मणि प्रभवतीति कार्मुकं धनुः । "कर्मण उकञ्" इत्युकञ्प्रत्ययः । अधिरोपितम् । भूभृतां रिपुर्भार्गवश्च । धूमशेषो धूममात्रशेषोऽग्निरिव । निष्प्रभो निस्तेजस्क आस बभूव ।

र्निर्वापितो वह्निरिव हततेजा अभूदित्यर्थः । आहोस्विदिति विकल्पप्रतिरूपकमव्ययं दीप्त-र्भिकस्यास्ते रूपं वा ॥ ८१ ॥

तावुभावपि परस्परस्थितौ वर्धमानपरिहीनतेजसौ ।
पश्यति स्म जनता दिनात्यये पार्वणौ शशिदिवाकराविव ॥८२॥

ताविति । परस्परस्थितावन्योन्याभिमुखौ । वर्धमानं च परिहीनं चेति द्वन्द्वः । वर्धमानपरिहीने तेजसी ययोस्तावुभौ राघवभार्गवावपि । दिनात्यये सायङ्काले पर्वणि भवौ पार्वणौ शशिदिवाकराविव । जनता जनसमूहः । "ग्रामजनबन्धुसहायेभ्यस्तल्" इति तल्प्रत्ययः । पश्यति स्मापश्यत् । अत्र राघवस्य शशिना भार्गवस्य भानुनौपम्यं द्रष्टव्यम् ॥ ८२ ॥

तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्यमात्मनि ।
स्वं च संहितममोघमाशुगं व्याजहार हरसूनुसंनिभः ॥ ८३ ॥

तमिति । हरसूनुसंनिभः स्कन्दसमः । कृपामृदू राघवः । आत्मनि विषये स्खलितवीर्यं कुण्ठितशक्तिं तं भार्गवं स्वं स्वकीयं संहितममोघमाशुगं बाणं चावेक्ष्य । व्याजहार बभाषे ॥ ८३ ॥

न प्रहर्तुमलमस्मि निर्दयं विप्र इत्यभिभवत्यपि त्वयि ।
शंस किं गतिमनेन पत्त्रिणा हन्मि लोकमुत ते मखार्जितम् ॥८४॥

नेति । अभिभवत्यपि त्वयि । विप्र इति हेतोः । निर्दयं प्रहर्तुमलं समर्थो नास्मि किंत्वनेन पत्त्रिणा शरेण ते गतिं गमनं हन्मि । उत मखार्जितं लोकं स्वर्गं हन्मि शंस ब्रूहि ॥ ८४ ॥

प्रत्युवाच तमृषिर्न तत्त्वतस्त्वां न वेद्मि पुरुषं पुरातनम् ।
गां गतस्य तव धाम वैष्णवं कोपितो ह्यसि मया दिदृक्षुणा ॥८५॥

प्रत्युवाचेति । ऋषिर्भार्गवस्तं रामं प्रत्युवाच । किमिति । तत्त्वतः स्वरूपतस्त्वा पुरातनं पुरुषं न वेद्मीति न किन्तु वेद्म्येवेत्यर्थः । किन्तु गां गतस्य भुवमवनीगतस्य तव वैष्णवं धाम तेजो दिदृक्षुणा द्रष्टुमिच्छुना मया कोपितोऽसि ॥८५॥

भस्मसात्कृतवतः पितृद्विषः पात्रसाच्च वसुधां ससागराम् ।
आहितो जयविपर्ययोऽपि मे श्लाघ्य एव परमेष्ठिना त्वया ॥८६॥

भस्मसादिति । पितृद्विषः पितृवैरिणो भस्मसात्कृतवतः कोपेन भस्मीकृतवतः । "विभाषा साति कार्त्स्न्ये" इति सातिप्रत्ययः । ससागरां वसुधां च पात्रसा-

स्वात्मानं देवं स्तुवत । वेदे मा भव इति भगवत्स्तुति । कृतस्मयस्य मे पर-मेष्ठिना परमे लोके तिष्ठतीति तेन, परमपुरुषेण त्वयाऽऽश्रितः कृतो जयविपर्ययः पराभवोऽपि श्लाघ्य आधास्व एव ॥ ८६ ॥

तद्गतिं मतिमतां वरेप्सितां पुण्यतीर्थगमनाय रक्ष मे ।
पीडयिष्यति न मां खिलीकृता स्वर्गपद्धतिरभोगलोलुपम् ॥ ८७ ॥

तद्गतिमिति । यत्तस्मात्कारणात् हे मतिमतां वर । पुण्यतीर्थगमनायाप्युपेप्सितमी-प्सितां मे गतिं रक्ष पाहि । किन्तु खिलीकृता दुर्गमीकृतापि स्वर्गपद्धतिरभोगलो-लुपं भोगनिःस्पृहं मां न पीडयिष्यति । अतस्तामेव जहीत्यर्थः ॥ ८७ ॥

प्रत्यपद्यत तथेति राघवः प्राङ्मुखश्च विससर्ज सायकम् ।
भार्गवस्य सुकृतोऽपि सोऽभवत्स्वर्गमार्गपरिघो दुरत्ययः ॥ ८८ ॥

प्रतीति । राघवस्तथेति प्रत्यपद्यताङ्गीकृतवान् । प्राङ्मुख इन्द्रदिङ्मुखः सा-यकं विससर्ज च । स सायकः सुकृतोऽपि साधुकारिणोऽपि । करोतेः क्विप् । भार्ग-वस्य दुरत्ययो दुःखेन अत्ययो नाशो यस्य स दुरत्ययो दुरतिक्रमः स्वर्गमार्गस्य परिघः प्रतिबन्धोऽभवत् ॥ ८८ ॥

राघवोऽपि चरणौ तपोनिधेः क्षम्यतामिति वदन्समस्पृशत् ।
निर्जितेषु तरसा तरस्विनां शत्रुषु प्रणतिरेव कीर्तये ॥ ८९ ॥

राघव इति । राघवोऽपि क्षम्यतामिति वदंस्तपोनिधेर्भार्गवस्य चरणौ सम-स्पृशत्स्पृष्टवान् । तथा हि, तरस्विनां बलवतां तरसा बलेन निर्जितेषु शत्रुषु प्रणति-रेव कीर्तये । भवतीति शेषः ॥ ८९ ॥

राजसत्वमवधूय मातृकं पित्र्यमस्मि गमितः शमं यदा ।
नन्वनिन्दितफला मम त्वया निग्रहोऽप्ययमनुग्रहीकृतः ॥ ९० ॥

राजसत्वमिति । मातुरागतं मातृकं राजसत्वं रजोगुणप्रधानत्वमवधूय तिर-स्कृत्य पितुरागतं पित्र्यं शमं यदा गमितोऽस्मि तदा त्वया ममापेक्षितत्वादनिन्दि-तमगर्हितं फलं स्वर्गहानिलक्षणं यस्य सोऽयं निग्रहोऽपकारोऽप्यनुग्रहीकृत उप-कारीकृतः खलु ॥ ९० ॥

साधयाम्यहमविघ्नमस्तु ते देवकार्यमुपपादयिष्यतः ।
ऊचिवानिति वचः सलक्ष्मणं लक्ष्मणाग्रजमृषिस्तिरोदधे ॥ ९१ ॥

साधयामीति । अहं साधयामि गच्छामि । धातूनामनेकार्थत्वात् इति । देव-

## द्वादशः सर्गः ।

वन्दामहे महोदग्रदोर्दण्डौ रघुनन्दनौ ।
तेजोनिर्जितमार्तण्डमण्डलौ लोकनन्दनौ ॥

निर्विष्टविषयस्नेहः स दशान्तमुपेयिवान् ।
आसीदासन्ननिर्वाणः प्रदीपार्चिरिवोषसि ॥ १ ॥

निर्विष्टेति । स्नेहयन्ति प्रीणयन्ति पुरुषमिति स्नेहाः । पचाद्यच् । स्निह्यन्ति पुरुषा एष्विति वा स्नेहाः । अधिकरणार्थे घञ् । विषयाः शब्दादयस्त एव स्नेहा निर्विश्य भुक्ता विषयस्नेहा येन स तथोक्तः । 'निर्वेशो भृतिभोगयोः' इति विश्वः । दशा यौवनाद्यवस्था तस्य अन्तं वार्धकमुपेयिवान्स दशरथः । उषसि प्रदीपार्चिरिव दीपज्वालेव । आसन्नं निर्वाणं मोक्षो यस्य स तथोक्त आसीत् । अर्चिःपक्षे तु—विषयो देश आश्रयः । भाजनमिति यावत् । 'विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च' इति विश्वः । स्नेहस्तैलादिः । 'स्नेहस्तैलादिकरसे द्रवे स्यात्सौहृदेऽपि च' इति विश्वः । दशा वर्तिका । 'दशा वर्तावस्थायाम्' इति विश्वः । निर्वाणं विनाशः । 'निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने' इति यादवः ॥ १ ॥

तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति ।
कैकेयीशङ्कयेवाह पलितच्छद्मना जरा ॥ २ ॥

तमिति । जरा कैकेयीशङ्कयेव पलितस्य केशादिशौक्ल्यस्य छद्मना मिषेण । 'पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा' इत्यमरः । कर्णमूलं कर्णोपकण्ठमागत्य रामे श्री राज्यलक्ष्मीर्न्यस्यतां निधीयतामिति तमाह । दशरथो वृद्धोऽभूदिति विचार्य रामस्य यौवराज्याभिषेकं चकाङ्क्षेत्यर्थः ॥ २ ॥

सा पौरान्पौरकान्तस्य रामस्याभ्युदयश्रुतिः ।
प्रत्यकं ह्लादयामास कुल्येवोद्यानपादपान् ॥ ३ ॥

सेति । सा पौरकान्तस्य रामस्याभ्युदयश्रुतिरभिषेकवार्ता । कुल्या कृत्रिमा सरित् । 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः । उद्यानपादपानिव पौरान्प्रत्येकं ह्लादयामास ॥ ३ ॥

तस्याभिषेकसंभारं कल्पितं क्रूरनिश्चया ।
दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः ॥ ४ ॥

तस्येति । क्रूरनिश्चया कैकेयी तस्य रामस्य कल्पितं सम्भृतमभिषेकस्य

राजाऽपि तद्वियोगार्तः स्मृत्वा शापं स्वकर्मजम् ।
शरीरत्यागमात्रेण शुद्धिलाभममन्यत ॥ १० ॥

राजेति । तद्वियोगार्तः पुत्रवियोगदुःखितः राजाऽपि स्वकर्मणा मुनिपुत्रवधकर्मणा जातः स्वकर्मजस्तं शापं पुत्रशोकेन मरणरूपं स्मृत्वा शरीरत्यागमात्रेण देहत्यागेनैव शुद्धिलाभं प्रायश्चित्तममन्यत । मृत इत्यर्थः ॥ १० ॥

विप्रोषितकुमारं तद्राज्यमस्तमितेश्वरम् ।
रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां ययौ ॥ ११ ॥

विप्रोषितेति । विप्रोषिताः प्रवासिताः कुमारा यस्मिंस्तत्तथोक्तम् । अस्तमितो मृत ईश्वरो राजा यस्य तत्तथोक्तं तद्राज्यं रन्ध्रान्वेषणदक्षाणां द्विषां शत्रूणामामिषतां भोग्यवस्तुतां ययौ । 'आमिषं भोग्यवस्तुनि' इति केशवः ॥ ११ ॥

अथानाथाः प्रकृतयो मातृबन्धुनिवासिनम् ।
मौलैरानाययामासुर्भरतं स्तम्भिताश्रुभिः ॥ १२ ॥

अथेति । अनाथाः प्रकृतयोऽमात्याः । 'प्रकृतिः सहजे योनावमात्ये परमात्मनि' इति विश्वः । मातृबन्धुषु निवासिनं भरतं स्तम्भिताश्रुभिः । पितृमरणगुप्त्यर्थमिति भावः । मौलैराप्तैः सचिवैरानाययामासुरागमयामासुः ॥ १२ ॥

श्रुत्वा तथाविधं मृत्युं कैकेयीतनयः पितुः ।
मातुर्न केवलं स्वस्याः श्रियोऽप्यासीत्पराङ्मुखः ॥ १३ ॥

श्रुत्वेति । कैकेयीतनयो भरतः पितुस्तथाविधं रामवियोगादित्यर्थः । स्वमातृमूलं मृत्युं मरणं श्रुत्वा स्वस्या मातुः केवलं मातुरेव पराङ्मुखो न किन्तु श्रियोऽपि पराङ्मुख आसीत् ॥ १३ ॥

ससैन्यश्चान्वगाद्रामं दर्शितानाश्रमालयैः ।
तस्य पश्यन्ससौमित्रेरुदश्रुर्वसतिद्रुमान् ॥ १४ ॥

ससैन्यमिति । ससैन्यो भरतो राममन्वगात् । किं कुर्वन् । आश्रमालयैराश्रमवासिभिर्मुनिभिर्दर्शितानेते रामनिवासा इति कथितान् ससौमित्रेर्लक्ष्मणसहितस्य तस्य रामस्य वसतिद्रुमान्निवासवृक्षान् पश्यन्नुदश्रुरुद्गतबाष्पः सन् ॥ १४ ॥

चित्रकूटवनस्थं च कथितस्वर्गतिर्गुरोः ।
लक्ष्म्या निमन्त्रयाञ्चक्रे तमनुच्छिष्टसम्पदा ॥ १५ ॥

चित्रकूटेति । चित्रकूटवनस्थं तं रामं च गुरोः पितुः कथितस्वर्गतिः कथि

तपितृमरणः सन्निस्पर्धः । अमुष्मिन्ननुभूतमिव सम्पत् गुणोत्कर्षो यस्याः सा । सम्पत्पूर्ती गुणोत्कर्षे इति केशवः । तस्या अस्याः क्रमेण निमन्त्र्यमाणोऽपि मातुरवाप्तं, राज्यमनुमन्तेरग्राहीत्स्वयं ॥ १५ ॥

स हि प्रथमजे तस्मिन्नकृतश्रीपरिग्रहे ।
परिवेत्तारमात्मानं मेने स्वीकरणाद्भुवः ॥ १६ ॥

स इति । स हि भरतः प्रथमजेऽग्रजे तस्मिन् रामेऽकृतश्रीपरिग्रहे सति स्वयं भुवः स्वीकरणादात्मानं परिवेत्तारं मेने । परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् इत्यमरः । भूपरिग्रहोऽपि दारपरिग्रहसम इति भावः ॥ १६ ॥

तमशक्यमपाक्रष्टुं निदेशात्स्वर्गिणः पितुः ।
ययाचे पादुके पश्चात्कर्तुं राज्याधिदेवते ॥ १७ ॥

तमिति । स्वर्गिणः स्वर्गतस्य पितुर्निदेशादाज्ञातोऽपाक्रष्टुं निवर्तयितुमशक्यं तं रामं पश्चाद्राज्याधिदेवते स्वामिन्यौ कर्तुं पादुके ययाचे ॥ १७ ॥

स विसृष्टस्तथेत्युक्त्वा भ्रात्रा नैवाविशत्पुरीम् ।
नन्दिग्रामगतस्तस्य राज्यं न्यासमिवाभुनक् ॥ १८ ॥

स इति । स भरतो भ्रात्रा रामेण तथेत्युक्त्वा विसृष्टः सन् पुरीमयोध्यां नाविशदेव । किन्तु नन्दिग्रामगतः सन् तस्य रामस्य राज्यं न्यासमिव निक्षेपमिवा-भुनगपालयत् न तूपभुक्तवानित्यर्थः । अन्यथा "भुजोऽनवने" इत्यात्मनेपदप्रस-ङ्गात् । भुजेर्लङ् ॥ १८ ॥

दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् ॥ १९ ॥

दृढेति । ज्येष्ठे दृढभक्ती राज्यतृष्णापराङ्मुखो भरत इति पूर्वोक्तानुष्ठानेन मातुः पापस्य प्रायश्चित्तं तदपनोदकं कर्माकरोदिवेत्युत्प्रेक्षा । दृढभक्तिरित्यत्र दृढ-शब्दस्य । स्त्रियाः पुंवत्— इत्यादिना पुंवद्भावो दुर्घटः । अप्रियादिषु इति नि-षेधात् । भक्तिशब्दस्य प्रियादिषु पाठात् । अतो दृढं भक्तिरस्येति नपुंसकपूर्वपदो बहुव्रीहिरिति गणव्याख्याने दृढभक्तिरित्येवमादिषु पूर्वपदस्य नपुंसकस्य विवक्षित-त्वात्सिद्धमिति समाधेयम् । वृत्तिकारस्तु—दीर्घमित्यतिमात्रपरो दृढभक्तिशब्दो लिङ्ग-विशेषस्यानुपकारत्वात् स्त्रीत्वमविवक्षितमेव तस्मात्स्त्रीत्वाभावात् दृढभक्तिशब्दस्यास्य प्रयोग इत्यभिप्रायः । न्यासकारोऽप्येवम् । भोजराजस्तु—सर्वत्रासमस्तैव भक्ति-

रामं इति । रामस्यावासलदेवत्वाद्देवो पुनर्भरतागमनमात्राद्‌पौरसुकुमाराजा सुलभ्यिंतहरिणं चित्रकूटस्यस्थी मही तत्याज । आसवस्थासी देवत्येति विग्रहः॥२४॥

प्रययावातिथेयेषु वसन्नृषिकुलेषु सः ।
दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः ॥ २५ ॥

प्रययाविति । स रामः अतिथिषु साधून्यातिथेयानि । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ्प्रत्ययः । तेष्वृषिकुलेष्वाश्रमेषु । कुलं कुलमे गवे देहे गेहे जनपदेऽन्वये इति हैमः । वर्षासु भवानि वार्षिकाणि । 'वर्षाभ्यष्ठक्' इति ठक्प्रत्ययः । तेष्वृक्षेषु नक्षत्रेषु राशिषु वा भास्कर इव वसन् दक्षिणां दिशं प्रययौ ॥२५॥

बभौ तमनुगच्छन्ती विदेहाधिपतेः सुता ।
प्रतिषिद्धापि कैकेय्या लक्ष्मीरिव गुणोन्मुखी ॥ २६ ॥

बभाविति । तं राममनुगच्छन्ती अनुयान्ती विदेहाधिपतेः सुता सीता कैकेय्या प्रतिषिद्धा निवारितापि गुणोन्मुखी गुणेष्वासक्ता लक्ष्मी राज्यलक्ष्मीरिव बभौ॥२६॥

अनसूयातिसृष्टेन पुण्यगन्धेन काननम् ।
सा चकाराङ्गरागेण पुष्पोच्चलितषट्पदम् ॥ २७ ॥

अनसूयेति । सा सीताऽनसूययाऽत्रिभार्ययाऽतिसृष्टेन दत्तेन पुण्यगन्धेनाङ्गरागेण काननं वनं पुष्पेभ्य उच्चलिता निर्गताः षट्पदा भ्रमरा यस्मिंस्तत्तथाभूतं चकार॥२७॥

सन्ध्याभ्रकपिशस्तस्य विराधो नाम राक्षसः ।
अतिष्ठन्मार्गमावृत्य रामस्येन्दोरिव ग्रहः ॥ २८ ॥

सन्ध्याभ्रेति । सन्ध्याभ्रकपिशः सन्ध्याभ्रवत्कपिशः पिङ्गो विराधो नाम राक्षसः । ग्रहो राहुरिन्दोरिव । तस्य रामस्य मार्गमध्वानमावृत्यावष्टभ्यातिष्ठत् ॥२८॥

स जहार तयोर्मध्ये मैथिलीं लोकशोषणः ।
नभोनभस्ययोर्वृष्टिमवग्रह इवान्तरे ॥ २९ ॥

स इति । लोकस्य शोषणः शोषकः जगत्सन्तापकारीत्यर्थः । स राक्षसस्तयो रामलक्ष्मणयोर्मध्ये मैथिलीम् । नभोनभस्ययोः श्रावणभाद्रपदयोरन्तरे मध्ये वृष्टिमवग्रहो वर्षप्रतिबन्ध इव जहार । 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' इत्यमरः॥२९॥

तं विनिष्पिष्य काकुत्स्थौ पुरा दूषयति स्थलीम् ।
गन्धेनाशुचिना चेति वसुधायां निचख्नतुः ॥ ३० ॥

तमिति । ककुत्स्थस्य गोत्रापत्ये पुमांसौ काकुत्स्थौ रामलक्ष्मणौ तं विराधं

पर्णशालामथ क्षिप्रं विकृष्टासिः प्रविश्य सः ।
वैरूप्यपौनरुक्त्येन भीषणां तामयोजयत् ॥ ४० ॥

पर्णशालामिति । अथ स लक्ष्मणो विकृष्टासिः कोशादुद्धृतखड्गः सन् क्षिप्रं पर्णशालां प्रविश्य । भीषयतीति भीषणाम् । नन्द्यादित्वाल्ल्युट् कर्तरि । तां राक्षसीं कर्णनासिकाच्छेदाद्वैरूप्यं तस्य वैरूप्यस्य पौनरुक्त्यं द्वैगुण्यं तेन । तेनायोजयदयोजितवान् । स्वभावत एव विरूपां तां कर्णनासिकाच्छेदेन पुनरपि विरूपामकरोदित्यर्थः ॥ ४० ॥

सा वक्रनखधारिण्या वेणुकर्कशपर्वया ।
अङ्कुशाकारयाङ्गुल्या तावतर्जयदम्बरे ॥ ४१ ॥

सेति । सा वक्रनखान्धारयतीति वक्रनखधारिणी । तया वेणुवत्कर्कशपर्वया । अत एवाङ्कुशस्याकार इवाकारो यस्याः सा तया अङ्गुल्या । तौ राघवावम्बरे व्योम्नि स्थिता । 'अम्बरं व्योम्नि वाससि' इत्यमरः । अतर्जयदभर्त्सयत् । 'तर्ज भर्त्सने' इति धातोर्भौवादिकत्वात्परस्मैपदेन भाव्यम् । तथापि चक्षिङो ङित्करणज्ञापकादनुदात्तेत्त्वनिमित्तस्यात्मनेपदस्यानित्यत्वात्परस्मैपदमूह्यमित्युक्तमाकरमतवचनिका-नाम् । "तर्जयते भर्त्सयते तर्जयतीत्यपि च दृश्यते क्वचित्" इति ॥ ४१ ॥

प्राप्य चाशु जनस्थानं खरादिभ्यस्तथाविधम् ।
रामोपक्रममाचख्यौ रक्षःपरिभवं नवम् ॥ ४२ ॥

प्राप्येति । सा आशु जनस्थानं प्राप्य खरादिभ्यो राक्षसेभ्यस्तथाविधं स्वाङ्गच्छे-दलक्षणं नासिकाच्छेदरूपम् । उपक्रम्यत इत्युपक्रमः । कर्मणि घञ्प्रत्ययः । रामस्य कर्तुरुपक्रमः । रामोपक्रमम् । रामेण प्रथमोपक्रान्तमित्यर्थः । "उपज्ञोपक्रमं तदाद्या-चिख्यासायाम्" इति क्लीबत्वम् । नवं रक्षसां कर्मभूतानां परिभवमाचख्यौ च ॥ ४२ ॥

मुखावयवलूनां तां नैर्ऋता यत्पुरो दधुः ।
रामाभियायिनां तेषां तदेवाभूदमङ्गलम् ॥ ४३ ॥

मुखेति । नैर्ऋता राक्षसाः । 'नैर्ऋतो यातुरक्षसी' इत्यमरः । मुखावयवेषु कर्णादिषु लूनां छिन्नां तां पुरो दधुरग्रे चक्रुरिति यत्तदेव रामाभियायिनां राममभि-यतां तेषाममङ्गलमभूत् ॥ ४३ ॥

उदायुधानापततस्तान्दृप्तान्प्रेक्ष्य राघवः ।
निदधे विजयाशंसां चापे सीतां च लक्ष्मणे ॥ ४४ ॥

उदायुधेति । उद्यतायुधानुद्यतायुधानापततः आगच्छतो दृप्तान् [illegible]

इव रामचापे मनुषि विजयस्यार्थसामाप्तौ अवसये सीता च निदधे । सीतारक्षणे लक्ष्मणं नियुज्य स्वयं युद्धाय सन्निद्ध इति भावः ॥ ४४ ॥

एको दाशरथिः कामं यातुधानाः सहस्रशः ।
ते तु यावन्त एवाजौ तावांश्च ददृशे स तैः ॥ ४५ ॥

एक इति । दाशरथी राम एकोऽद्वितीयः । यातुधानाः कामं सहस्रशः सन्तीति शेषः । तैर्यातुधानैस्तु स राम आजौ युद्धे ते यातुधाना यावन्तो यावत्संख्याकास्त एव तावांस्तावत्संख्याकश्च ददृशे ॥ ४५ ॥

असज्जनेन काकुत्स्थः प्रयुक्तमथ दूषणम् ।
न चक्षमे शुभाचारः स दूषणमिवात्मनः ॥ ४६ ॥

असज्जनेनेति । अथ शुभाचारो रमे साधुचारी सद्वृत्तः स काकुत्स्थोऽसज्जनेन दुर्जनेन रक्षोजनेन च प्रयुक्तं प्रतिप्रयुक्तं प्रेरितं च दूषणं दूषयतीति दूषणस्तं एव व्यवर्यं आत्मसमस्तमो दूषणं दोषमिव न चक्षमे न सेहे । प्रतिकर्तुं प्रावृतदित्यर्थः ॥ ४६ ॥

तं शरैः प्रतिजग्राह खरत्रिशिरसौ च सः ।
क्रमशस्ते पुनस्तस्य चापात्सममिवोद्ययुः ॥ ४७ ॥

तमिति । स रामस्तं दूषणं खरत्रिशिरसौ च शरैः प्रतिजग्राह, प्रतिजहारेत्यर्थः । क्रमशो यथाक्रमम् । प्रयुक्ता अपीति शेषः । तस्य ते शराः पुनश्चापात्समं युगपदिवोद्ययुः । अतिलघुहस्त इति भावः ॥ ४७ ॥

तैस्त्रयाणां शितैर्बाणैर्यथापूर्वविशुद्धिभिः ।
आयुर्देहातिगैः पीतं रुधिरं तु पतत्रिभिः ॥ ४८ ॥

तैरिति । देहमतीत्य गच्छन्तीति देहातिगाः । तैर्यथापूर्वविशुद्धिर्येषां तैः । अतिवेगत्वेन देहमेवात्मानमिव रुधिरलेपरहितैरित्यर्थः । शितैस्तीक्ष्णैस्तैर्बाणैस्त्रयाणां खरादीनामायुर्जीवितं पीतम् । रुधिरं तु पतत्रिभिः पक्षिभिः पीतम् ॥ ४८ ॥

तस्मिन्रामशरोत्कृत्ते बले महति रक्षसाम् ।
उत्थितं ददृशेऽन्यच्च कबन्धेभ्यो न किंचन ॥ ४९ ॥

तस्मिन्निति । तस्मिन्रामशरैरुत्कृत्ते छिन्ने महति रक्षसां बले कबन्धसमुत्थानक्रियाविशिष्टं प्राणिनां कबन्धेभ्यः शिरोहीनशरीरेभ्यः । कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् इत्यमरः । अन्यदन्यत्किंचन न ददृशे । कबन्धेभ्य इत्यत्र अन्यारात् इति पञ्चमी । निःशेषं हतमित्यर्थः ॥ ४९ ॥

सा बाणवर्षिणं रामं योधयित्वा सुरद्विषाम् ।
अप्रबोधाय सुष्वाप गृध्रच्छाये वरूथिनी ॥ ५० ॥

सेति । सा सुरद्विषां रक्षसां वरूथिनी सेना बाणवर्षिणं रामं योधयित्वा युद्धं कारयित्वा । गृध्राणां छाया गृध्रच्छायम् । 'छाया बाहुल्ये' इति क्लीबत्वम् । तस्मिन् अप्रबोधायापुनर्बोधाय सुष्वाप ममारेत्यर्थः । अत्र सुरतश्रान्तकान्तासमाधिर्व्यज्यते ॥५०॥

राघवास्त्रविदीर्णानां रावणं प्रति रक्षसाम् ।
तेषां शूर्पणखैवैका दुष्प्रवृत्तिहराऽभवत् ॥ ५१ ॥

राघवेति । शूर्पवन्नखानि यस्याः सा शूर्पणखा । 'पूर्वपदात्संज्ञायामगः' इति णत्वम् । 'नखमुखात्संज्ञायाम्' इति ङीप्प्रतिषेधः । सैव रावणं प्रति राघवास्त्रैर्विदीर्णानां हतानां तेषां रक्षसां खरादीनां दुष्प्रवृत्तिं वार्तां हरति प्रापयतीति दुष्प्रवृत्तिहराऽभवत् । वार्ता प्रवृत्तिर्वृत्तान्तः इत्यमरः । 'हरतेरनुद्यमनेऽच्' इत्यच्प्रत्ययः ॥५१॥

निग्रहात्स्वसुराप्तानां वधाच्च धनदानुजः ।
रामेण निहितं मेने पदं दशसु मूर्धसु ॥ ५२ ॥

निग्रहादिति । स्वसुः शूर्पणखाया निग्रहाद्वैरूप्यकरणादाप्तानां बन्धूनां खरादीनां वधाच्च धनदानुजो रावणो रामेण दशसु मूर्धसु पदं पादं निहितं मेने ॥५२॥

रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ ।
जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ॥ ५३ ॥

रक्षसेति । स रावणो मृगरूपेण रक्षसा मारीचेन राघवौ वञ्चयित्वा प्रतार्य पक्षीन्द्रस्य जटायुषः प्रयासेन युद्धरूपेण क्षणं विघ्नितः सञ्जातविघ्नः सन् सीतां जहार ॥ ५३ ॥

तौ सीतान्वेषिणौ गृध्रं लूनपक्षमपश्यताम् ।
प्राणैर्दशरथप्रीतेरनृणं कण्ठवर्तिभिः ॥ ५४ ॥

ताविति । सीतान्वेषिणौ तौ राघवौ लूनपक्षं रावणेन छिन्नपक्षं कण्ठवर्तिभिः प्राणैर्दशरथप्रीतेर्दशरथस्नेहस्यानृणमपर्णैर्विमुक्तं गृध्रं जटायुषमपश्यतां ददृशतुः । [illegible] क्रमम् ॥ ५४ ॥

स रावणहृतां ताभ्यां वचसाऽऽचष्ट मैथिलीम् ।
आत्मनः सुमहत्कर्म व्रणैरावेद्य संस्थितः ॥ ५५ ॥

स इति । स जटायू रावणहृतां मैथिलीं ताभ्यां राघवाभ्याम् । "क्रिया

"अन्यदपि कर्तव्यम्" इति सम्प्रदानत्वाच्चतुर्थी । मयका नागस्त्वाऽयम् । मास्मन सुमहत्कर्म सुकृतं मनोरथेन संस्थितो मृतः ॥ ५५ ॥

तयोस्तस्मिन्नवीभूतपितृव्यापत्तिशोकयोः ।
पितरीवाग्निसंस्कारात्परा ववृतिरे क्रियाः ॥ ५६ ॥

तयोरिति । व्यापत्तिर्मरणम् । नवीभूतः पितृव्यापत्तिशोको ययोः पितुः दशरथस्य व्यापत्तेर्मरणस्य शोकः नवीभूतो ययोस्तौ तयो राघवयोस्तस्मिन्गृध्रे पितरीवाग्निसंस्कारात् अग्निसंस्कारमारभ्य परा उत्तराः क्रिया ववृतिरेऽवर्तन्त । तस्य पितृवदौर्ध्वदैहिकं चक्रतुरित्यर्थः ॥ ५६ ॥

वधनिर्धूतशापस्य कबन्धस्योपदेशतः ।
मुमूर्छ सख्यं रामस्य समानव्यसने हरौ ॥ ५७ ॥

वधेति । वधेन रामकृतेन निर्धूतशापस्य देवभुवं गतस्य कबन्धस्य दनोर्नाम दैत्यस्योपदेशतो रामस्य समानव्यसने समानापदि, कलत्रवियोगदुःखिते समानार्तिके इत्यर्थः । हरौ कपौ सुग्रीवे । 'शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः । सख्यं मुमूर्छ ववृधे ॥ ५७ ॥

स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥ ५८ ॥

स इति । वीरः स रामो वालिनं कपीन्द्रं हत्वा चिरकाङ्क्षिते तत्पदे वालिस्थाने । धातोः स्थाने आदेशमिव आदेशभूतं धात्वन्तरमिवेत्यर्थः । सुग्रीवं संन्यवेशयत्स्थापितवान् । यथा "अस्तेर्भूः" इत्यस्तिधातोः स्थाने आदेशो भूधातुरस्तिकार्यमशेषं समश्नुते तद्वदिति भावः । आदेशो नाम शब्दान्तरस्य स्थाने विधीयमानं शब्दान्तरमभिधीयते ॥ ५८ ॥

इतस्ततश्च वैदेहीमन्वेष्टुं भर्तृचोदिताः ।
कपयश्चेरुरार्तस्य रामस्येव मनोरथाः ॥ ५९ ॥

इत इति । वैदेहीमन्वेष्टुं मार्गितुं भर्त्रा सुग्रीवेण चोदिताः प्रेरिताः कपयो हनूमत्प्रमुखा आर्तस्य विरहातुरस्य रामस्य मनोरथाः कामा इव । इतस्ततः सर्वेषु देशेषु चचरुः ॥ ५९ ॥

प्रवृत्तावुपलब्धायां तस्याः संपातिदर्शनात् ।
मारुतिः सागरं तीर्णः संसारमिव निर्ममः ॥ ६० ॥

प्रवृत्तामिति । सम्पातिर्नाम जटायुषो ज्यायान्भ्राता । तस्य दर्शनात् । तस्मादिति भाव । तस्याः सीतायाः प्रवृत्तौ वार्तायाम् । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । उपलब्धायां ज्ञातायां सत्याम् । मारुतस्यापत्यं पुमान्मारुतिः हनूमान् सागरम् । ममेत्येतद्बुद्धिर्ममता तद्रहितो निर्ममो निःस्पृहः संसारमिव भवबन्धनमिव । तीर्णस्ततार । तरतेः कर्तरि क्तः ॥ ६० ॥

दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता ।
जानकी विषवल्लीभिः परीतेव महौषधिः ॥ ६१ ॥

दृष्टेति । लङ्कायां राक्षसराजधान्यां विचिन्वता मृगयमाणेन तेन मारुतिना राक्षसीभिर्वृता जानकी विषवल्लीभिः परीता परिवृता महौषधिः सञ्जीविन्यादिरिव दृष्टा ॥ ६१ ॥

तस्यै भर्तुरभिज्ञानमङ्गुलीयं ददौ कपिः ।
प्रत्युद्गतमिवानुष्णैस्तदानन्दाश्रुबिन्दुभिः ॥ ६२ ॥

तस्या इति । कपिर्हनूमान्भर्तू रामस्य सम्बन्ध्यभिज्ञानं अभिज्ञायत इत्यभिज्ञानं प्रत्यभिज्ञानसाधनमङ्गुलीयमूर्मिकाम् । 'अङ्गुलीयकमूर्मिका' इत्यमरः । 'चिह्ना मूलाङ्गुलेरछः' इति छप्रत्ययः । तस्यै जानक्यै ददौ । किंविधमङ्गुलीयम् । अनुष्णैः शीतलैस्तस्या आनन्दाश्रुबिन्दुभिः प्रत्युद्गतमिव स्थितम् । भर्त्रभिज्ञानदर्शनादानन्दबाष्पो जात इत्यर्थः ॥ ६२ ॥

निर्वाप्य प्रियसन्देशैः सीतामक्षवधोद्धतः ।
स ददाह पुरीं लङ्कां क्षणसोढारिनिग्रहः ॥ ६३ ॥

निर्वाप्येति । स कपिः । प्रियस्य रामस्य सन्देशैर्वाचिकैः सीतां निर्वाप्य सुखयित्वा । अक्षस्य रावणकुमारस्य वधेनोद्धतो दृप्तः सन् । क्षणं सोढोऽरिनिग्रहः शत्रुकृतो निग्रहो बन्धो ब्रह्मास्त्रबन्धरूपो येन स तथोक्तः सन् । लङ्कां पुरीं ददाह भस्मीचकार ॥ ६३ ॥

प्रत्यभिज्ञानरत्नं च रामायादर्शयत्कृती ।
हृदयं स्वयमायातं वैदेह्या इव मूर्तिमत् ॥ ६४ ॥

प्रत्यीति । कृती कृतार्थः कपिः स्वयमायातं मूर्तिमद्वैदेह्या हृदयमिव स्थितं तस्या एव प्रत्यभिज्ञानरत्नं च रामायादर्शयत् ॥ ६४ ॥

स प्राप हृदयन्यस्तमणिस्पर्शनिमीलितः ।
अपयोधरसंसर्गां प्रियालिङ्गननिर्वृतिम् ॥ ६५ ॥

स इति । हस्ते वक्षसि न्यस्तस्य हृतस्य मणेरभिज्ञानरत्नस्य स्पर्शेन विमी मितो मोदितः स रामोऽश्रीयमानः पयोधरसंसर्पः स्तनस्पर्शो यस्यास्तां तथाभूतां प्रियाया आलिङ्गनेन या निर्वृतिरानन्दस्तां प्राप ॥ ६५ ॥

श्रुत्वा रामः प्रियोदन्तं मेने तत्सङ्गमोत्सुकः ।
महार्णवपरिक्षेपं लङ्कायाः परिखालघुम् ॥ ६६ ॥

श्रुत्वेति । प्रियाया उदन्तं वार्त्ताम् । उदन्तः साधुवार्त्तयो इति विश्वः । श्रुत्वा तस्याः सीताया सङ्गम उत्सुको रामो लङ्कायाः सम्बन्धी यो महार्णव एव परिक्षेपः परिवेषस्तं परिखालघुं दुर्गवेष्टनमवस्तुतरं मेने ॥ ६६ ॥

स प्रतस्थेऽरिनाशाय हरिसैन्यैरनुद्रुतः ।
न केवलं भुवः पृष्ठे व्योम्नि सम्बाधवर्तिभिः ॥ ६७ ॥

स इति । केवलमेकं भुव पृष्ठे भूतले न किन्तु व्योम्नि च सम्बाधवर्तिभिः सङ्कटगामिभिर्हरिसैन्यैः कपिबलैरनुद्रुतोऽन्वितः सन् स रामोऽरिनाशाय प्रतस्थे चचाल ॥ ६७ ॥

निविष्टमुदधेः कूले तं प्रपेदे विभीषणः ।
स्नेहाद्राक्षसलक्ष्म्येव बुद्धिमाविश्य चोदितः ॥ ६८ ॥

निविष्टमिति । उदधेः कूले निविष्टं तं रामम् । विभीषण भीषयते यम्पृथिति विभीषणो रावणानुज । राक्षसलक्ष्म्या स्नेहाद् बुद्धिं कर्तव्याज्ञानमाविश्य चोदितः प्रेरित इव । प्रपेदे प्राप्त ॥ ६८ ॥

तस्मै निशाचरैश्वर्यं प्रतिशुश्राव राघवः ।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः ॥ ६९ ॥

तस्मै इति । राघवस्तस्मै विभीषणाय । "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता" इति सम्प्रदानत्वाच्चतुर्थी । निशाचरैश्वर्यं राक्षसाधिपत्यं प्रतिशुश्राव प्रतिज्ञातवान् । तथा हि । कालेऽवसरे समारब्धाः प्रक्रान्ता नीतयः फलं बध्नन्ति गृह्णन्ति खलु । जनयन्तीत्यर्थः ॥ ६९ ॥

स सेतुं बन्धयामास प्लवगैर्लवणाम्भसि ।
रसातलादिवोन्मग्नं शेषं स्वप्नाय शार्ङ्गिणः ॥ ७० ॥

स इति । स रामो लवणं क्षारमम्भो यस्यासौ लवणाम्भास्तस्मिँल्लवणाम्भसि प्लवगैः प्लवगैर्वानरैः । शार्ङ्गिणो विष्णोः स्वप्नाय शयनाय रसातलात्पातालादुन्मग्नमुत्थितं शेषमिव स्थितम् । सेतुं बन्धयामास ॥ ७० ॥

गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः ।
दाशरथ्योः क्षणक्लेशः स्वप्नवृत्त इवाभवत् ॥ ७६ ॥

गरुडेति । गरुडस्यापातेनागमनेन विश्लिष्टं मेघनादस्येन्द्रजितोऽस्त्रेण नागपाशेन बन्धनं ययोस्तयोस्तथोक्तयोः । क्षणक्लेशो दाशरथ्यो रामलक्ष्मणयोः स्वप्नवृत्तः स्वप्नावस्थायां भूत इवाभवत् ॥ ७६ ॥

ततो बिभेद पौलस्त्यः शक्त्या वक्षसि लक्ष्मणम् ।
रामस्त्वनाहतोऽप्यासीद्विदीर्णहृदयः शुचा ॥ ७७ ॥

तत इति । ततः पौलस्त्यो रावणः शक्त्या कासूनामकेनायुधेन । कासूसामर्थ्ययोः शक्तिः इत्यमरः । लक्ष्मणं वक्षसि बिभेद विदारयामास । रामस्त्वनाहतोऽप्यप्रहृतोऽपि शुचा शोकेन विदीर्णहृदय आसीत् ॥ ७७ ॥

स मारुतिसमानीतमहौषधिहतव्यथः ।
लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ॥ ७८ ॥

स इति । स लक्ष्मणो मारुतिना मरुत्सुतेन हनुमता समानीतया महौषध्या सञ्जीविन्या हतव्यथः सन् पुनः शरैर्लङ्कास्त्रीणां विलापे परिदेवने । विलापः परिदेवनम् इत्यमरः । आचार्यकमाचार्यकर्म । योपधाद्गुरूपोत्तमाद्वुञ् इति वुञ् । चक्रे । पुनरपि राक्षसाञ्जघानेति व्यज्यते ॥ ७८ ॥

स नादं मेघनादस्य धनुश्चेन्द्रायुधप्रभम् ।
मेघस्येव शरत्कालो न किंचित्पर्यशेषयत् ॥ ७९ ॥

स इति । स लक्ष्मणः । शरत्काले मेघस्येव । मेघनादस्येन्द्रजितो नादं सिंहनादम् । अन्यत्र गर्जितं च इन्द्रायुधप्रभं शक्रधनुःप्रभं धनुश्च किंचिदल्पमपि न पर्यशेषयदवशेषितवान् । तमवधीदित्यर्थः ॥ ७९ ॥

कुम्भकर्णः कपीन्द्रेण तुल्यावस्थः स्वसुः कृतः ।
रुरोध रामं शृङ्गीव टङ्कच्छिन्नमनःशिलः ॥ ८० ॥

कुम्भकर्ण इति । कपीन्द्रेण सुग्रीवेण स्वसुः शूर्पणखायास्तुल्यावस्थो नासाकर्णच्छेदेन समानदशः कृतः कुम्भकर्णः टङ्केन शिलाभेदकसाधनेन छिन्ना मनःशिला यस्य स तथोक्तः । टङ्कः पाषाणदारणः इति । धातुर्मनःशिलाद्याद्रेः इत्यमरः । शृङ्गी शिखरीव । रामं रुरोध ॥ ८० ॥

अकाले बोधितो भ्रात्रा प्रियस्वप्नो वृथा भवान् ।
रामेषुभिरितीवासौ दीर्घनिद्रां प्रवेशितः ॥ ८१ ॥

अकाल इति । प्रियस्वप्न इति निद्राप्रियो भवान् भ्रात्रा रावणेनाकाले बोधित इतीवासौ कुम्भकर्णो रामेषुभी रामबाणैर्दीर्घनिद्रां मरणं प्रवेशितो गमितः । यथा कश्चिन्निद्रालुरकाले प्रबोधितस्य ततोऽपि भूयिष्ठमुपपादते तद्वदिति भावः ॥ ८१ ॥

इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु ।
रक्षांसि समरस्थानि तच्छोणितनदीष्विव ॥ ८२ ॥

इतराणीति । इतराण्यपि रक्षांस्यपि वानरकोटिषु । समरस्थानि रक्षांसि तेषां शोणितनदीषु रक्षःप्रवाहेष्विव पेतुः । निपत्य मृतानीत्यर्थः ॥ ८२ ॥

निर्ययावथ पौलस्त्यः पुनर्युद्धाय मन्दिरात् ।
अरावणमरामं वा जगदद्येति निश्चितः ॥ ८३ ॥

निर्ययाविति । अथ पौलस्त्यो रावणः । अद्य जगदरावणं रावणशून्यम् अरामं रामशून्यं वा भवेदिति निश्चितो निश्चितवान् । कर्तरि क्तः । विजयमरणयो-रन्यतरनिश्चयवान्पुनर्युद्धाय मन्दिराद्विनिर्गतो निर्ययाम ॥ ८३ ॥

रामं पदातिमालोक्य लङ्केशं च वरूथिनम् ।
हरियुग्यं रथं तस्मै प्रजिघाय पुरन्दरः ॥ ८४ ॥

राममिति । पादाभ्यामततीति पदातिः तं पादचारिणं रामम् । वरूथो रथ-गुप्तिः । 'रथगुप्तिर्वरूथो ना' इत्यमरः । अत्र वरूथेन रथो लक्ष्यते । वरूथिनं रथिनं लङ्केशं चालोक्य पुरन्दर इन्द्रः । युगं वहन्तीति युग्या अश्वाः । 'तद्वहति रथ-युगप्रासङ्गम्' इति यत्प्रत्ययः । हरियुग्यं कपिलवर्णाश्वम् । 'शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमरः । रथं तस्मै रामाय प्रजिघाय प्रहितवान् ॥ ८४ ॥

तमाप्लुतध्वजपटं व्योमगङ्गोर्मिवायुभिः ।
देवसूतभुजालम्बी जैत्रमध्यास्त राघवः ॥ ८५ ॥

तमिति । व्योमगङ्गोर्मिवायुभिराप्लुतध्वजपटम् । मार्गवशादिति भावः । जेतैव जैत्रो जयनशीलः तं जैत्रम् । जेतृशब्दात्तस्मात् "प्रज्ञादिभ्यश्च" इति स्वार्थेऽण्प्रत्ययः । तं रथं देवसूतभुजालम्बी मातलिहस्तावलम्बः सन्नध्यास्त अधि-ष्ठितवान् । आरूढवान् ॥ ८५ ॥

अयःशङ्कुचितां रक्षः शतघ्नीमथ शत्रवे ।
हृतां वैवस्वतस्येव कूटशाल्मलिमक्षिपत् ॥ ९५ ॥

अथ इति । अथ रक्षो रावणोऽयसो लोहस्य शङ्कुभिः कीलैश्चितां व्याप्तां शतघ्नीं लोहकण्टकसंचितयष्टिविशेषाम् । 'शतघ्नी तु चतुर्हस्ता लोहकण्टकसंचिता । यष्टिः' इति केशवः । हृतां विजयसम्पन्नाम् । वैवस्वतस्यान्तकस्य कूटशाल्मलिमिव । शत्रवे रामायाक्षिपत्क्षिप्तवान् । कूटशाल्मलिरिव । कूटशाल्मलिरिति प्रसिद्धत्वाद् वैवस्वतपदस्य गौणी संज्ञा । कूटशाल्मलिर्नाम नीचमूलप्रकृतिः कण्टकी वृक्षविशेषः । 'रोचनः कूटशाल्मलिः' इत्यमरः । तस्य हस्ते च गदास्था अयःशङ्कुचितत्वात्तदुपम्येयम् ॥९५॥

राघवो रथमप्राप्तां तामाशां च सुरद्विषाम् ।
अर्धचन्द्रमुखैर्बाणैश्चिच्छेद कदलीसुखम् ॥ ९६ ॥

राघव इति । राघवो रथमप्राप्तां तां शतघ्नीं सुरद्विषां रक्षसामाशां विजयतृष्णां च । 'आशा तृष्णादिशोः प्रोक्ता' इति विश्वः । अर्धचन्द्र इव मुखं येषां तैर्बाणैः कदलीवत्सुखं यथा तथा चिच्छेद । अथवा कदल्यामिव सुखमक्लेशो यस्मिन्कर्मणि तदिति विग्रहः ॥ ९६ ॥

अमोघं सन्दधे चास्मै धनुष्येकधनुर्धरः ।
ब्राह्ममस्त्रं प्रियाशोकशल्यनिष्कर्षणौषधम् ॥ ९७ ॥

अमोघमिति । एकः प्रधानो धनुर्धरो रामः प्रियायाः शोक एव शल्यं तस्य निष्कर्षणमुद्धारकं यदौषधं तदमोघं सफलं ब्राह्मं ब्रह्मदैवत्यमस्त्रमभिमन्त्रितं बाणमस्मै रावणाय च तद्वधार्थमित्यर्थः । धनुषि सन्दधे ॥ ९७ ॥

तद्व्योम्नि शतधा भिन्नं ददृशे दीप्तिमन्मुखम् ।
वपुर्महोरगस्येव करालफणमण्डलम् ॥ ९८ ॥

तदिति । व्योम्नि शतधा भिन्नं प्रसृतं दीप्तिमन्ति मुखानि यस्य तद्ब्राह्मास्त्रम् । करालं भीषणं तुङ्गं वा फणमण्डलं यस्य तत्तथोक्तम् । 'करालो दन्तुरे तुङ्गे करालो भीषणेऽपि च' इति विश्वः । महोरगस्य शेषस्य वपुरिव । ददृशे दृष्टम् ॥९८॥

तेन मन्त्रप्रयुक्तेन निमेषार्धादपातयत् ।
स रावणशिरःपङ्क्तिमज्ञातव्रणवेदनाम् ॥ ९९ ॥

तेनेति । स रामो मन्त्रप्रयुक्तेन तेनास्त्रेणाज्ञातव्रणवेदनामतिशैघ्र्यादननुभूतव्रणपीडां रावणशिरःपङ्क्तिं निमेषार्धादपातयत्पातयामास ॥ ९९ ॥

बालार्कप्रतिमेवाप्सु वीचिभिन्ना पतिष्यतः ।
रराज रक्षःकायस्य कण्ठच्छेदपरम्परा ॥ १०० ॥

बालार्केति । पतिष्यत आसन्नपातस्य रक्षःकायस्य रावणकलेबरस्य छिद्यन्त इति छेद्याः कण्ठाः । कण्ठानां छेदास्तेषां परम्परा पङ्क्तिः । वीचिभिर्भिन्ना नाना कृताऽप्सु बालार्कस्य प्रतिमा प्रतिबिम्बमिव रराज । अर्कस्य बालविशेषणमारक्त्य सिद्ध्यर्थमिति भावः ॥ १ ॥

मरुतां पश्यतां तस्य शिरांसि पतितान्यपि ।
मनो नातिविशश्वास पुनः सन्धानशङ्किनाम् ॥ १०१ ॥

मरुतामिति । पतितानि तस्य रावणस्य शिरांसि पश्यतामपि पुनः सन्धानशङ्किनाम् । पूर्व तथादर्शनादिति भावः । मरुताममराणाम् । 'मरुतौ पवनामरौ' इत्यमरः । मनो चित्तं नातिविशश्वासातिविश्वासं न प्राप ॥ १ १ ॥

अथ मदगुरुपक्षैर्लोकपालद्विपानामनुगतमलिवृन्दैर्गण्डभित्तीर्विहाय ।
उपनतमणिबन्धे मूर्ध्नि पौलस्त्यशत्रोः सुरभि सुरविमुक्तं पुष्पवर्षं पपात॥१०२

अथेति । अथ मदेन गजमदस्यासारेणातिभरेण गुरुपक्षैर्भारायमाणपक्षैरलि-वृन्दैर्लोकपालद्विपानामैरावतादीनां गण्डवर्तिनीः गण्डभित्तीर्विहायानुगतमनुपतमनु-ह्रतं सुरभि सुगन्धि । 'सुरभिर्घ्राणतर्पणे सर्वे चाम्पेयजातिफलयोः । चम्पके क्षीरमेध्यां शल्लकीमातृभेदयोः ॥ सुगन्धौ च मनोज्ञे च वाच्यवत्सुरभिः स्मृतम्' । इति विश्वः । सुरविमुक्तं पुष्पवर्षमुपनतः प्राप्तो मणिबन्धो राज्याभिषेकसमये माला यस्य तस्मिन्पौलस्त्यशत्रौ रामस्य मूर्ध्नि शिरसि पपात । इदमेव राज्याभिषेकसूचकमिति भावः । मालिनीवृत्तमेतत् ॥ १ २ ॥

यन्ता हरेः सपदि संहृतकार्मुकज्य-
मापृच्छ्य राघवमनुष्ठितदेवकार्यम् ।
नामाङ्करावणशराङ्कितकेतुयष्टि-
मूर्ध्वं रथं हरिसहस्रयुजं निनाय ॥ १०३ ॥

यन्तेति । हरेरिन्द्रस्य यन्ता मातलिः सपदि संहृतकार्मुकज्यमनुष्ठितं देवकार्यं रावणवधरूपं येन तं राघवमापृच्छ्य साधु यामीत्यामन्त्र्य । नामाङ्कैर्नामाक्षरचिह्नै रावणशरैरङ्किता चिह्निता केतुयष्टिर्ध्वजदण्डो यस्य तम् । हरीणां वाजिनां सहस्रेण

पुंस्यपि इति हरिचन्दनमुक्तम् । समानिबिम्बसम्भ्रार्थमिमुधिराम्बुजाभिमु । सुम-
नसिपुष्पेषु हरिणा चपिति मिथुनस्सुमनसास्यमर । रथमूष्प नितान्त मालिनीवृत्तम् ॥ १०३ ॥

रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां
प्रियसुहृदि विभीषणे संगमय्य श्रियं वैरिणः ।
रविसुतसहितेन तेनानुयातः ससौमित्रिणा
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ॥१०४॥

रघुपतिरिति । रघुपतिरपि जातवेदसाग्निना विशुद्धां जातशुद्धिं प्रियां सीतां प्रगृह्य स्वीकृत्य । प्रियसुहृदि विभीषणे वैरिणो रावणस्य श्रियं राज्यलक्ष्मीं संगमय्य संगतां कृत्वा । गमेर्ण्यन्तात्क्त्वो ल्यबादेशः । 'मितां ह्रस्वः' इति ह्रस्वः । "ल्यपि लघुपूर्वात्" इति णेरयादेशः । रविसुतसहितेन सुग्रीवयुक्तेन ससौमित्रिणा सलक्ष्मणेन तेन विभीषणेनानुयातोऽनुगतः सन् । विमानं रत्नमिव विमानरत्नमित्युपमितसमासः । भुजविजितं यद्विमानरत्नं पुष्पकं तदारूढः सन् । पुरीमयोध्यां प्रतस्थे । "समवप्रविभ्यः स्थः" इत्यात्मनेपदम् । अत्र प्रस्थानक्रियाया अकर्मकत्वेऽपि तदङ्गभूतदेशान्तरप्राप्तिक्रियापेक्षया सकर्मकत्वम् । अस्ति च धातूनां क्रियान्तरोपसर्जनकस्वार्थाभिधायकत्वम् । यथा 'कुसूलात्पचति' इत्यादावादानक्रियागर्भः पाको विधीयत इति ॥ १०४ ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये रावणवधो नाम द्वादशः सर्गः ॥ १२ ॥

---

## अथ त्रयोदशः सर्गः

प्रत्यक्षसम्यादरणाय सिम्भोयषमरं वर्ण्यं मरर्मं रिपूणाम् ।
पुण्यप्रणामं भुवनाभिरामं रामं विरामं विपदामुपासे ॥

अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः ।
रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच ॥१॥

अथेति । अथ प्रस्थानानन्तरम् । आत्मनस्तदीयं शः । शब्दगुणकमित्यर्थः ।
इत्यनेन कथ्यते । गुणानां ज्ञो गुणज्ञः । रत्नाकरादिवर्ण्यैः सर्वगुणाभिज्ञ इत्यर्थः ।

तत्राह्ल‍ादं बहिर्बिभर्ति । अपघ्नोऽप्याश्रितं न त्यजतीति भावः । अनेन प्रह्लादन माह्लादकं ज्योतिश्चन्द्रोऽस्तीति चचितम् । अनेर्म्लात्कर्मणि ल्युट् । सौम्य इति भावः ॥ ४ ॥

तां तामवस्थां प्रतिपद्यमानं स्थितं दश व्याप्य दिशो महिम्ना ।
विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा ॥ ५ ॥

तामिति । तां तामवस्थाम् । "नित्यवीप्सयोः" इति वीप्सायां द्विरुक्तिः । अथ स्वामशोमायवस्थाम् । विष्णुपक्षे-सत्त्वाद्यवस्थाम् । प्रतिपद्यमानं भजमानं महिम्ना दश दिशो व्याप्य स्थितं विष्णोरिवास्य रत्नाकरस्य रूपं स्वरूपमुक्तरीत्या बहुप्रकारत्वादुपायपरमाणवैरकमैवं तया वा प्रकारत परिमाणमयानवधारणीयं दुर्निरूपम् ॥ ५ ॥

नाभिप्ररूढाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान्पुरुषोऽधिशेते ॥ ६ ॥

नाभीति । युगान्ते कल्पान्ते उचिता परिचिता योगाः अपरमनिद्रेव निद्रेव यस्य स पुरुषो विष्णुर्लोकान् भूर्भुवादीन्संहृत्य । नाभ्यां प्ररूढं यदम्बुरुहं पद्मं तदासनेन तदधिष्ठानमधरेव प्रथमेन धात्रा ब्रह्मादीनामपि प्रभुः पितामहेन संस्तूयमानः सन् । अमुमधिशेते अमुष्मिन्शेते इत्यर्थः । अस्यामन्तेऽप्यस्तीति भावः ॥ ६ ॥

पक्षच्छिदा गोत्रभिदात्तगन्धाः शरण्यमेनं शतशो महीध्राः ।
नृपा इवोपप्लविनः परेभ्यो धर्मोत्तरं मध्यममाश्रयन्ते ॥ ७ ॥

पक्षच्छिदेति । पक्षच्छिदा गोत्रभिदेन्द्रेण । उभयत्र "सत्सूद्विष -इत्या दिना क्विप् । आत्तगन्धा हृतगर्वाः अभिभूता इत्यर्थः । 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः' इति विश्वः । 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः । महीं धारयन्तीति महीध्राः पर्वताः । मूलविभुजादित्वात्कप्रत्ययः । शतं शतं शतशः शरण्यं रक्षणसमर्थमेनं समुद्रम् । परेभ्यः शत्रुभ्य उपप्लविनो भयवन्तो नृपा धर्मोत्तरं धर्मप्रधानं मध्यमं मध्यमभूपालमिव । आश्रयन्ते । अरेश विजिगीषोश्च मध्यमो भूम्यनन्तरः इति कामन्दकः । आर्तबन्धुरिति भावः ॥ ७ ॥

रसातलादादिभवेन पुंसा भुवः प्रयुक्तोद्वहनक्रियायाः ।
अस्याच्छमम्भः प्रलयप्रवृद्धं मुहूर्तवक्त्राभरणं बभूव ॥ ८ ॥

रसातलादिति । आदिभवेन पुंसाऽऽदिवराहेण रसातलात्प्रयुक्तोद्वहनक्रियायाः उद्धरणक्रियायाः । विवाहक्रिया च व्यज्यते । भुवो भूदेवतायाः अस्य

पूयमानश्च यस्मिंस्तत्संयोगे सागरस्य कूलं तीरं विमानवेगात्पुनरपि विमानवेगाद्बहु-दूरेण प्राप्ताः ॥ १७ ॥

कुरुष्व तावत्करभोरु पश्चान्मार्गे मृगप्रेक्षिणि दृष्टिपातम् ।
एषा विदूरीभवतः समुद्रात्सकानना निष्पततीव भूमिः ॥ १८ ॥

कुरुष्वेति । मणिबन्धादाकनिष्ठं करस्य करभो बहिः इत्यमरः । करभ इवोरू यस्याः सा करभोरूः "ऊरूत्तरपदादौपम्ये" इत्यूङ् । तस्याः सम्बुद्धिः करभोरु । मृगवत्प्रेक्षत इति विग्रहः । हे मृगप्रेक्षिणि । तावत्पश्चान्मार्गे अनुषितान्यपि दृष्टिपातं कुरुष्व एषा सकानना भूमिर्विदूरीभवतः समुद्रान्निष्पततीव निर्गच्छतीव । विदूरत्वाच्छ्लिष्टेष्वनिष्पन्नविवेका ॥१८॥

क्वचित्पथा संचरते सुराणां क्वचिद्घनानां पततां क्वचिच्च ।
यथाविधो मे मनसोऽभिलाषः प्रवर्तते पश्य तथा विमानम् ॥१९॥

क्वचिदिति । हे देवि । विमानं पुष्पकं मे मनसोऽभिलाषो यथाविधस्तथा प्रवर्तते पश्य । क्वचित्सुराणां पथा मार्गेण संचरते । क्वचिद् घनानां क्वचित्पततां पक्षिणां च पथा संचरते । "समस्तृतीयायुक्तात्" इति संपूर्वाच्चरतेरात्मनेपदम् ॥ १९ ॥

असौ महेन्द्रद्विपदानगन्धिस्त्रिमार्गगावीचिविमर्दशीतः ।
आकाशवायुर्दिनयौवनोत्थानाचामति स्वेदलवान्मुखे ते ॥ २० ॥

असाविति । महेन्द्रद्विपदानगन्धिरैरावतमदगन्धिः त्रिभिर्मार्गैर्गच्छतीति त्रिमार्गगा गङ्गा "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेनोत्तरपदसमासः । तस्यास्तरङ्गमाला वीचीनां विमर्देन सम्पर्केण शीतोऽसावाकाशवायुर्दिनयौवनोत्थान्मध्याह्नसम्भवांस्ते मुखे स्वेदकणानाचामति हरति । अनेन सुरपथसंचारो दर्शितः ॥२०॥

करेण वातायनलम्बितेन स्पृष्टस्त्वया चण्डि कुतूहलिन्या ।
आमुञ्चतीवाभरणं द्वितीयमुद्भिन्नविद्युद्वलयो घनस्ते ॥ २१ ॥

करेणेति । हे चण्डि कोपने । "चण्डस्त्वत्यन्तकोपनः" इत्यमरः । कुतूहलिन्या विनोदार्थिन्या त्वया कर्त्र्या वातायने गवाक्षे लम्बितेनावलम्बितेन करेण स्पृष्ट उद्भिन्नविद्युद्वलयो घनस्ते द्वितीयमाभरणं वलयमामुञ्चतीव अर्पयतीव । चण्डीत्यनेन कोपनशीलत्वात्क्षिप्रं त्वां मुञ्चति मेघ इति गम्यते ॥ २१ ॥

अमी जनस्थानमपोढविघ्नं मत्वा समारब्धनवोटजानि ।
अध्यासते चीरभृतो यथास्वं चिरोज्झितान्याश्रममण्डलानि ॥२२॥

भूमौ भवो भौमः स्थानपरिग्रह आश्रमोऽयं दृश्यत इति शेषः । भौम इत्यनेन दिव्योऽप्यस्तीति सूच्यते । परिगृह्यत इति परिग्रहः । स्थानमेव परिग्रह इति विग्रहः ॥ ३६ ॥

त्रेताऽग्निधूमाग्रमनिन्द्यकीर्तेस्तस्येदमाक्रान्तविमानमार्गम् ।
घ्रात्वा हविर्गन्धि रजोविमुक्तः समश्नुते मे लघिमानमात्मा ॥ ३७ ॥

त्रेताऽग्नीति । अनिन्द्यकीर्तेस्तस्यामरस्याक्रान्तविमानमार्गं हविर्गन्धोऽस्यास्तीति हविर्गन्धि त्रेताऽग्निसंभवम् । 'अग्नित्रयमिदं त्रेता' इत्यमरः । पृषोदरादित्वात्साधुः । त्रेताऽग्नेर्धूमाग्रमिदं घ्रात्वाऽऽघ्राय रजसो गुणाद्विमुक्तो मे ममात्माऽन्तःकरणं लघिमानं लघुत्वगुणं समश्नुते प्राप्नोति ॥ ३७ ॥

एतन्मुनेर्मानिनि शातकर्णेः पञ्चाप्सरो नाम विहारवारि ।
आभाति पर्यन्तवनं विदूरान्मेघान्तरालक्ष्यमिवेन्दुबिम्बम् ॥ ३८ ॥

एतदिति । हे मानिनि ! शातकर्णेर्मुनेः सम्बन्धि पञ्चाप्सरो नाम पञ्चाप्सर इति प्रसिद्धम् । पञ्चाप्सरसो यस्मिन्निति विग्रहः । पर्यन्तेषु वनानि यस्य तत्पर्यन्तवनमेतद्विहारवारि क्रीडासरो विदूरात् । मेघानामन्तरे मध्य आलक्ष्यमीषद् दृश्यम् । 'आङीषदर्थेऽभिव्याप्तौ' इत्यमरः । इन्दुबिम्बमिव आभाति ॥ ३८ ॥

पुरा स दर्भाङ्कुरमात्रवृत्तिश्चरन्मृगैः सार्धमृषिर्मघोना ।
समाधिभीतेन किलोपनीतः पञ्चाप्सरोयौवनकूटबन्धम् ॥ ३९ ॥

पुरेति । पुरा पूर्वस्मिन्काले दर्भाङ्कुरमात्रवृत्तिस्तन्मात्राहारो मृगैः सार्धं सह चरन्स ऋषिः समाधेस्तपसो भीतेन मघोनेन्द्रेण पञ्चानामप्सरसां यौवनम् । तद्धितार्थोत्तरपदसमाहारे च इत्युत्तरपदसमासः । तदेव कूटबन्धं कपटयन्त्रमुपनीतः । 'उन्माथः कूटयन्त्रं स्यात्' इत्यमरः । किलेत्यैतिह्ये । मृगसाहचर्यान्मृगवदेव बद्ध इति भावः ॥ ३९ ॥

तस्यायमन्तर्हितसौधभाजः प्रसक्तसंगीतमृदङ्गघोषः ।
वियद्गतः पुष्पकचन्द्रशालाः क्षणं प्रतिश्रुन्मुखराः करोति ॥ ४० ॥

तस्येति । अन्तर्हितसौधभाजो जलान्तर्गतप्रासादवर्तिनस्तस्य शातकर्णेरयं प्रसक्तः सन्ततः संगीतमृदङ्गघोषो वियद्गतः सन्पुष्पकस्य चन्द्रशालाः शिरोगृहाणि । 'चन्द्रशाला शिरोगृहम्' इत्यमरः । क्षणं प्रतिश्रुद्भिः प्रतिध्वानैर्मुखरा वाचालाः करोति । 'स्त्री प्रतिश्रुत्प्रतिध्वाने' इत्यमरः ॥ ४० ॥

हविर्भुजामेधवतां चतुर्णां मध्ये ललाटन्तपसप्तसप्तिः ।
असौ तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दान्तः ॥४१॥

हविरिति । नाम्ना सुतीक्ष्णः सुतीक्ष्णनामा चरितेन दान्तः सौम्योऽसावपरस्तपस्वी एधवतामिन्धनवताम् । "काष्ठं दार्विन्धनं त्वेधः" इत्यमरः । चतुर्णां हविर्भुजामग्नीनां मध्ये ललाटं तपतीति ललाटन्तपः सूर्यः । "असूर्यललाटयोर्दृशितपोः" इति खश्प्रत्ययः । "अरुर्द्विषदजन्तस्य मुम्" इत्यनेन मुमागमः । ललाटन्तपः सप्तसप्तिः सप्ताश्वा यस्य स तथोक्तः सन् तपस्यति तपश्चरति । "कर्मणो रोमन्थतपोभ्यां वर्तिचरोः" इति क्यङ् । "तपसः परस्मैपदं च" इति वक्तव्यम् ॥४१॥

अमुं सहासप्रहितेक्षणानि व्याजार्धसन्दर्शितमेखलानि ।
नालं विकर्तुं जनितेन्द्रशङ्कं सुराङ्गनाविभ्रमचेष्टितानि ॥४२॥

अमुमिति । जनितेन्द्रशङ्कं जनिता इन्द्रस्य शङ्का भयं येन तं तपस्विनमिति शेषः । अमुं सुतीक्ष्णं सहासं प्रहितान्यीक्षणानि दृष्टयो येषु तानि व्याजेन केनचिन्मिषेण । "पुंस्यर्धोऽर्धं समेंऽशके" इति विश्वः । अर्धेनांशेन सन्दर्शिता मेखला काञ्ची येषु तानि सुराङ्गनानामप्सरसां विभ्रमा विलासा एव चेष्टितानि विकर्तुं स्खलयितुमलं समर्थानि न बभूवुरिति शेषः ॥४२॥

एषोऽक्षमालावलयं मृगाणां कण्डूयितारं कुशसूचिलावम् ।
सभाजने मे भुजमूर्ध्वबाहुः सव्येतरं प्राध्वमितः प्रयुङ्क्ते ॥४३॥

एष इति । ऊर्ध्वबाहुरेष सुतीक्ष्णोऽक्षमालैव वलयं यस्य तं मृगाणां कण्डूयितारं कुशा एव सूचयस्ता लुनातीति कुशसूचिलावस्तम् । "कर्मण्यण्" इत्यण् । एभिर्विशेषणैर्जपशीलत्वं भूतदया कर्मठत्वं च द्योत्यते । सव्यादितरं दक्षिणं भुजं मे मम सभाजने सम्माननिमित्ते "निमित्तात्कर्मयोगे" इति सप्तमी । इतः प्राध्वं प्रह्वानुकूलं यथा प्रयुङ्क्ते प्रेरयति । "आनुकूल्यार्थकं प्राध्वम्" इत्यमरः । अव्ययं चैतत् ॥४३॥

वाचंयमत्वात्प्रणतिं ममैष कम्पेन किंचित्प्रतिगृह्य मूर्ध्नः ।
दृष्टिं विमानव्यवधानमुक्तां पुनः सहस्रार्चिषि संनिधत्ते ॥४४॥

वाचंयमत्वादिति । एष सुतीक्ष्णो वाचं यच्छति नियमयतीति वाचंयमो मौनव्रती । "वाचि यमो व्रते" इति खच्प्रत्ययः । "वाचंयमपुरन्दरौ च" इति मुम् । तस्य भावस्तत्त्वान्मम प्रणतिं किंचिन्मूर्ध्नः कम्पेन प्रतिगृह्य विमानेन व्यव-

यानं शिशिरार्त्तं तस्मात् सुखम् । “अपेतापोढमुक्तपतितापत्रस्तैरल्पशः” इत्यनेन पञ्चमीसमासः । यद्वि पुनः सहसाविति सूत्रे सविधये, सन्धयनिवर्त इत्यर्थः । अन्यथाऽनर्थकत्वप्रसङ्गात् ॥ ४४ ॥

अदः शरण्यं शरभङ्गनाम्नस्तपोवनं पावनमाहिताग्नेः ।
चिराय सन्तर्प्य समिद्भिरग्निं यो मन्त्रपूतां तनुमप्यहौषीत् ॥४५॥

अद इति । शरणे रक्षणे साधु शरण्यं पावयतीति पावनम् । अदो इदम् आहिताग्नेः शरभङ्गनाम्नो मुनेः तपोवनम् । यः शरभङ्गश्चिराय चिरमग्निं समिद्भिः सन्तर्प्य तर्पयित्वा ततो मन्त्रैः पूतां शुद्धां तनुमप्यहौषीदहुतवान् जुहोतेर्लुङ् ॥

छायाविनीताध्वपरिश्रमेषु भूयिष्ठसम्भाव्यफलेष्वमीषु ।
तस्यातिथीनामधुना सपर्या स्थिता सुपुत्रेष्विव पादपेषु ॥ ४६ ॥

छायेति । अधुनाऽस्मिन्काले तस्य शरभङ्गस्य स्वर्गमिव्यतिथीनां सपर्याऽतिथिपूजा । ‘पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः’ इत्यमरः । छायाभिर्विनीतोऽध्वपरिश्रमो यैस्तेषु भूयिष्ठानि बहुतमानि सम्भाव्यानि श्लाघ्यानि फलानि येषां तेष्वमीषु पादपेष्वाश्रमवृक्षेषु सुपुत्रेष्विव स्थिता तत्पुत्रैरिव पादपैरनुष्ठीयत इत्यर्थः ॥४६॥

धारास्वनोद्गारिदरीमुखोऽसौ शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः ।
बध्नाति मे बन्धुरगात्रि चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः ॥ ४७ ॥

धारेति । धारा निर्झरधाराः ताः धारया स्वनस्येव स्वनोद्गारि दर्येव मुखं यस्य सः शृङ्गं शिखरं विषाणं च तस्याग्रे लग्नोऽम्बुद एव वप्रपङ्कः वप्रक्रीडासक्तपङ्को यस्य सः असौ चित्रकूटो हे बन्धुरगात्रि । उन्नतानतगात्रि ! 'बन्धुरं तून्नतानतम्' इत्यमरः । दृप्तः ककुद्मान्वृषभ इव मे चक्षुर्बध्नात्यासक्तं करोति ॥ ४७ ॥

एषा प्रसन्नस्तिमितप्रवाहा सरिद्विदूरान्तरभावतन्वी ।
मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः ॥४८॥

एषेति । प्रसन्नो निर्मलः स्तिमितो निःस्पन्दः प्रवाहो यस्याः सा विदूरस्यान्तरस्यावकाशस्य भावेन भावात्तन्वी दूरदेशवर्तित्वात्सूक्ष्मत्वेनावभासमाना मन्दाकिनी नाम चित्रकूटनिकटगैषा सरिन्नगोपकण्ठे भूमेः कण्ठगता मुक्तावलीव भाति । अत्र नगस्य शिरस्त्वं तदुपकण्ठस्य च गम्यते ॥ ४८ ॥

अयं सुजातोऽनुगिरं तमालः प्रवालमादाय सुगन्धि यस्य ।
यवाङ्कुरापाण्डुकपोलशोभी मयाऽवतंसः परिकल्पितस्ते ॥४९॥

अयमिति। गिरेः समीपेऽनुगिरम्। 'गिरेश्च सेनकस्य' इति समासान्तष्टच्-प्रत्ययः। सुजातः स तमालोऽयं दृश्यते यस्य तमालस्य शोभनो गन्धो यस्य तत्सुगन्धि। 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इत्यनेनेकारः समासान्तः। प्रवालं पल्लवमादाय मया ते यवाङ्कुरवदापाण्डुनी कपोले शोभी शोभते वा सोऽवतंसः कर्ण-पूरः परिकल्पितः ॥ ४९ ॥

अनिग्रहत्रासविनीतसत्त्वमपुष्पलिङ्गात्फलबन्धिवृक्षम् ।
वनं तपःसाधनमेतदत्रेराविष्कृतोदग्रतरप्रभावम् ॥ ५० ॥

अनिग्रहेति। अनिग्रहत्रासाः दण्डभयरहिता अपि विनीताः सत्त्वा जन्तवो यस्मिंस्तत्। अपुष्पलिङ्गात्पुष्परूपनिमित्तं विनैव फलबन्धिनः फलग्राहिणो वृक्षा यस्मिंस्तत्। अत एवाविष्कृतोदग्रतरप्रभावमत्रेर्मुनेस्तपसः साधनं वनमेतत् ॥ ५० ॥

अत्राभिषेकाय तपोधनानां सप्तर्षिहस्तोद्धृतहेमपद्माम् ।
प्रवर्तयामास किलानुसूया त्रिस्रोतसं त्र्यम्बकमौलिमालाम् ॥ ५१ ॥

अत्रेति। अत्र वनेऽनुसूयात्रिपत्नी यस्य च त्र्यम्बकस्य सप्तर्षयः। 'दिक्संख्ये संज्ञायाम्' इति तत्पुरुषसमासः। तेषां हस्तैरुद्धृतानि हेमपद्मानि यस्यास्तां त्र्यम्बकमौलिमालां हरशिरःसक्तां त्रिस्रोतसं भागीरथीं तपोधनानामृषीणामभिषेकस्य स्नानाय प्रवर्तयामास प्रवाहयामास। किलेत्यैतिह्ये ॥ ५१ ॥

वीरासनैर्ध्यानजुषामृषीणाममी समध्यासितवेदिमध्याः ।
निवातनिष्कम्पतया विभान्ति योगाधिरूढा इव शाखिनोऽपि ॥ ५२ ॥

वीरासनैरिति। वीरासनैर्ध्यानसाधनैः ध्यानं जुषन्ते सेवन्त इति ध्यानजुषः समाधिनिष्ठेन इत्यर्थः। तेषां वीरासनस्य ध्यानजुषामृषीणां सम्बन्धिनः समध्यासित-वेदिमध्याः इदं वीरासनस्थानीयम्। अमी शाखिनोऽपि निवाते निष्कम्पतया योगाधिरूढा इव ध्यानमाज इव विभान्ति ध्यानस्थाऽपि निश्चला भवन्ति। वीरासनं वसिष्ठः — एकपादमथैकस्मिन्विन्यस्योरुणि संस्थितम्। इतरस्मिंस्तथा चान्यं वीरासनमुदाहृतम् ॥ इति ॥ ५२ ॥

त्वया पुरस्तादुपयाचितो यः सोऽयं वटः श्याम इति प्रतीतः ।
राशिर्मणीनामिव गारुडानां सपद्मरागः फलितो विभाति ॥ ५३ ॥

त्वयेति। त्वया पुरस्तात्पूर्वं च उपयाचितः प्रार्थितः। तथा च रामायणे— न्यग्रोधं समुपागम्य वैदेही वाक्यमब्रवीत्। नमस्तेऽस्तु महावृक्ष पारयेन्मे पतिर्व

यतिः ॥" इति । श्याम इति प्रतीतः वटोऽयं कथितः सन् । उपभरामो मारकतानां मणीनां भरम्भा राशिरिव विभाति ॥ ५३ ॥

क्वचित्—इत्यादिभिश्चतुर्भिः श्लोकैः प्रयागे गङ्गायमुनासङ्गमं वर्णयति—

क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव ॥ ५४ ॥

क्वचित्खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः ।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ॥ ५५ ॥

क्वचित्प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव ।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा ॥ ५६ ॥

क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य ।
पश्यानवद्याङ्गि विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः ॥ ५७ ॥

क्वचिदित्यादि । हे अनवद्याङ्गि । यमुनातरङ्गैर्भिन्नप्रवाहा व्यामिश्रौघा गङ्गा जाह्नवी विभाति । त्वं पश्य । केन क्वचित्प्रदेशे प्रभया लिम्पन्ति इति प्रभालेपिभिरिन्द्रनीलैरनुविद्धा सह गुम्फिता मुक्तामयी यष्टिरिव हारावलिरिव विभाति । अन्यत्र प्रदेशे इन्दीवरैर्नीलोत्पलैरुत्खचितान्तरा सह ग्रथिता सितपङ्कजानां पुण्डरीकाणां मालेव विभातीति सर्वत्र सम्बन्धः । क्वचित्कादम्बसंसर्गवती नीलहंससंसर्गवती प्रियं मानसं नाम सरो येषां तेषां खगानां राजहंसानां पङ्क्तिरिव । "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः । अन्यत्र कालागुरुणा दत्तपत्रा रचितपत्ररचना भुवश्चन्दनकल्पिता भक्तिरिव क्वचिच्छायासु विलीनैः स्थितैस्तमोभिः शबलीकृता कर्बुरीकृता चान्द्रमसी प्रभा चन्द्रिकेव । अन्यत्र रन्ध्रेष्वालक्ष्यनभःप्रदेशा शुभ्रा शरदभ्रलेखा शरन्मेघपङ्क्तिरिव क्वचित्कृष्णोरगभूषणा भस्माङ्गरागेश्वरस्य तनुरिव विभाति । वेणी व्याख्याता । चतुष्कम् ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

समुद्रपत्न्योर्जलसंनिपाते पूतात्मनामत्र किलाभिषेकात् ।
तत्त्वावबोधेन विनाऽपि भूयस्तनुत्यजां नास्ति शरीरबन्धः ॥ ५८ ॥

समुद्रेति । अत्र समुद्रपत्न्योर्गङ्गायमुनयोर्जलसंनिपाते सङ्गमे अभिषेकात्स्नानात् पूतात्मनां शुद्धात्मनां पुंसां तत्त्वावबोधेन तत्त्वज्ञानेन विनाऽपि तनुत्यजां प्रारब्धशरीरत्यागानन्तरं भूयः पुनः शरीरबन्धः शरीरयोगो नास्ति किल । अन्यत्र ज्ञानादेव मुक्तिः । अत्र तु स्नानादेव मुक्तिरित्यर्थः ॥ ५८ ॥

सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता ।
दूरे वसन्तं शिशिरानिलैर्मां तरङ्गहस्तैरुपगूहतीव ॥ ६३ ॥

सेयमिति । मदीया जननी कौसल्येव मान्येन पूज्येन तेन राज्ञा दशरथेन वियुक्ता सेयं सरयूर्दूरे वसन्तम् प्रोष्यागच्छन्तमित्यर्थः । मां पुत्रभूतं शिशिरानिलैस्तरङ्गैरेव हस्तैरुपगूहतीवालिङ्गतीव ॥ ६३ ॥

विरक्तसन्ध्याकपिशं पुरस्ताद्यतो रजः पार्थिवमुज्जिहीते ।
शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥ ६४ ॥

विरक्तेति । विरक्ता अतिरक्ता या सन्ध्या तद्वत्कपिशं ताम्रवर्णम् । पृथिव्या इदं पार्थिवम् । रजो धूलिः पुरस्तादग्रे यतो यस्मात्कारणादुज्जिहीते उद्गच्छति । तस्मात् हनुरस्यास्तीति हनूमान् । "शरादीनां च" इति दीर्घः । तेन कथिता प्रवृत्तिरस्मदागमनवार्ता यस्मै स भरतः ससैन्यः सन्मां प्रत्युद्गत इति शङ्के तर्कयामि । "शङ्का भयवितर्कयोः" इति शब्दार्णवे । अत्र भरतोर्नित्यसम्बन्धात्-ऽनुमानम् ॥ ६४ ॥

अद्धा श्रियं पालितसङ्गराय प्रत्यर्पयिष्यत्यनघां स साधुः ।
हत्वा निवृत्ताय मृधे खरादीन्संरक्षितां त्वामिव लक्ष्मणो मे ॥ ६५ ॥

अद्धेति । किंच साधुः सज्जनः स भरतः । "साधुर्वार्धुषिके चारौ सज्जने चापि वाच्यवत्" इति विश्वः । पालितसङ्गराय पालितपितृप्रतिज्ञाय मे मह्यमनघामदोषां भोग्यामनास्वादितां किंतु संरक्षितां श्रियम् । मृधे युद्धे खरादीन्हत्वा निवृत्ताय मे लक्ष्मणः संरक्षितामनघां त्वामिव प्रत्यर्पयिष्यत्यद्धा सत्यम् । "तत्त्वे त्वद्धाऽञ्जसा द्वयम्" इत्यमरः ॥ ६५ ॥

असौ पुरस्कृत्य गुरुं पदातिः पश्चादवस्थापितवाहिनीकः ।
वृद्धैरमात्यैः सह चीरवासा मामर्घ्यपाणिर्भरतोऽभ्युपैति ॥ ६६ ॥

असाविति । असौ पदातिः पादाभ्यामततीति पदातिः पादचारी चीरवासा वल्कलवसनो भरतः पश्चात्पृष्ठभागेऽवस्थापिता वाहिनी सेना येन स तथोक्तः सन् । "नद्यृतश्च" इति कप् । गुरुं वसिष्ठं पुरस्कृत्य वृद्धैरमात्यैः सहार्घ्यपाणिः सन्मामभ्युपैति ॥ ६६ ॥

पित्रा विसृष्टां मदपेक्षया यः श्रियं युवाप्यङ्कगतामभोक्ता ।
इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् ॥ ६७ ॥

पित्रेति । यो भरतः पित्रा विसृष्टां दत्तामप्युत्सृष्टां च गतामपि यो श्रियं युवाऽपि मदपेक्षया मद्भक्त्याऽभोक्ता सन् । युवन्तत्वात् "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इति षष्ठीनिषेधः । इयन्ति वर्षाण्येतावतो वत्सरान् । अत्यन्तसंयोगे द्वितीया । तया श्रिया सह स्त्रियेति च गम्यते । उग्रं दुष्करमसिधारं नाम व्रतमभ्यस्यतीव वर्तयतीव । युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरेत् । अन्तर्निवृत्तसङ्गः स्यादसिधारव्रतं हि तत् ॥ इति यादवः । इदं चासिधारव्रतमनुष्ठिता-दसिधारव्रतमित्युक्तम् ॥ ६७ ॥

एतावदुक्तवति दाशरथौ तदीयामिच्छां विमानमधिदेवतया विदित्वा ।
ज्योतिष्पथादवततार सविस्मयाभिरुद्वीक्षितं प्रकृतिभिर्भरतानुगाभिः ॥ ६८ ॥

एतावदिति । दाशरथौ रामे एतावदुक्तवति सति विमानं पुष्पकं कर्तृ, तदीयां रामसम्बन्धिनीमिच्छामधिदेवतया निजेन विदित्वा, तत्प्रेरितं सविस्मयैः । सविस्मयाभिर्भरतानुगाभिः प्रकृतिभिः प्रजाभिरुद्वीक्षितम् ऊर्ध्वं दृष्टं सत् ज्योतिष्पथादाकाशादवततार ॥ ६८ ॥

तस्मात्पुरःसरविभीषणदर्शितेन सेवाविचक्षणहरीश्वरदत्तहस्तः ।
यानादवातरददूरमहीतलेन मार्गेण भङ्गिरचितस्फटिकेन रामः ॥ ६९ ॥

तस्मादिति । रामः सेवायां विचक्षणः कुशलो हरीश्वरः सुग्रीवस्तेन दत्तो हस्तो हस्तावलम्बो यस्य तादृशः सन् । स्वयं पुरःसरो विभीषणस्तेन दर्शितेनादूरमासन्नं महीतलं यस्य तेन भङ्गिभिर्विच्छित्तिभी रचितस्फटिकेन बद्धस्फटिकेन सोपानपर्वणा मार्गेण तस्माद्यानात्पुष्पकादवातरदवतीर्णवान् । तरतेर्लङ् ॥ ६९ ॥

इक्ष्वाकुवंशगुरवे प्रयतः प्रणम्य स भ्रातरं भरतमर्घ्यपरिग्रहान्ते ।
पर्यश्रुरस्वजत मूर्धनि चोपजघ्रौ तद्भक्त्यपोढपितृराज्यमहाभिषेके ॥ ७० ॥

इक्ष्वाकिति । प्रयतः स रामः इक्ष्वाकुवंशगुरवे वसिष्ठाय प्रणम्य नमस्कृत्यार्घ्यस्य परिग्रहः स्वीकारस्तस्यान्ते पर्यश्रुः परिगतानन्दबाष्पः सन् भ्रातरं भरतम् अस्वजताश्लिष्यत् । तस्मिन्रामे भक्त्यापोढः परिहृतः पितृराज्यमहाभिषेको येन तस्मिन्मूर्धन्युपजघ्रौ च । घ्रा गन्धोपादाने" इति रूपम् ॥ ७० ॥

श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च प्लक्षान्प्ररोहजटिलानिव मन्त्रिवृद्धान् ।
अन्वग्रहीत्प्रणमतः शुभदृष्टिपातैर्वार्तानुयोगमधुराक्षरया च वाचा ॥ ७१ ॥

श्मश्र्विति । श्मश्रूणां मुखरोम्णां प्रवृद्ध्या दैर्घ्यरूपयाऽभिवृद्ध्या जनिता-

गतेषु विविधा विकृतिर्येषां तावत एव प्रार्थ। शाखामृगसम्भिन्नमिरयोमुखैर्मुखैर्दिक्षु पदार्थतः प्लवङ्गान्यमयेपानिव स्थितान् । प्रथमतो मनिनाथोन सुमेः कृपार्द्रविषा- तैरपमेकजैर्योर्दस्याहुमोगेन कृपकपूर्वेण मधुरतरया वाचा काममपीदमुपरतिनामय॥

दुर्जातबन्धुरयमृक्षहरीश्वरो मे पौलस्त्य एष समरेषु पुरःप्रहर्ता ।
इत्यादृतेन कथितौ रघुनन्दनेन व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥७२॥

दुर्जातेति । अयं मे दुर्जातबन्धुरापद्बन्धुः । 'दुर्जातं व्यसनं प्रोक्तम्' इति विश्वः । ऋक्षहरीश्वरः सुग्रीवः । एष समरेषु पुरः प्रहर्ता पौलस्त्यो विभीषण इत्यादृतेनादरवता । कर्तरि क्तः । रघूणां नन्दनेन रामेण कथितावुभौ विभीषणसुग्रीवौ लक्ष्मणमनुजमपि व्युत्क्रम्याभिवादनादिभिरसम्भाव्य भरतो ववन्दे ॥ ७२ ॥

सौमित्रिणा तदनु संससृजे स चैनमुत्थाप्य नम्रशिरसं भृशमालिलिङ्ग ।
रूढेन्द्रजित्प्रहरणव्रणकर्कशेन क्लिश्यन्निवास्य भुजमध्यमुरःस्थलेन ॥७३॥

सौमित्रिणेति । तदनु सुग्रीवादिवन्दनानन्तरं स भरतः सौमित्रिणा संससृजे सङ्गतः । 'सृज विसर्गे' दैवादिकात्कर्तरि लिट् । नम्रशिरसं प्रणतमेनं सौमित्रिमुत्थाप्य भृशं गाढमालिलिङ्ग च । किं कुर्वन् । रूढेन्द्रजित्प्रहरणव्रणे कर्कशेनास्य सौमित्रेरुरःस्थलेन भुजमध्यं स्वकीयं क्लिश्यन्निव पीडयन्निव क्लिश्नातिरयं सकर्मकः । 'क्लिश्नाति मुखमक्षरम्' इति दर्शनात् । ननु रामायणे—"ततो लक्ष्मणमासाद्य वैदेहीं च परन्तपः । अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत् ॥" इति भरतस्य ज्यायसं प्रत्यभिवादनमवगम्यते । अतः कथमिदं व्याख्यानम् । सत्यम् । किन्तु रामायणस्थोऽयमर्थो भरतस्य भूयताम् । ततो लक्ष्मणमासाद्य—इत्यादि श्लोके आसादनं लक्ष्मणवैदेह्योः अभिवादनं तु वैदेह्या एव अन्यथा पूर्वोक्तभरतस्य ज्येष्ठत्व विरुध्येतेति ॥ ७३ ॥

रामाज्ञया हरिचमूपतयस्तदानीं कृत्वा मनुष्यवपुरारुरुहुर्गजेन्द्रान् ।
तेषु क्षरत्सु बहुधा मदवारिधाराः शैलाधिरोहणसुखान्युपलेभिरे ते ॥

रामेति । तदानीं हरिचमूपतयो रामाज्ञया मनुष्यवपुः कृत्वा गजेन्द्रानारुरुहुः । बहुधा मदवारिधाराः क्षरत्सु वर्षत्सु तेषु गजेन्द्रेषु ते कपियूथनाथाः शैलाधिरोहणसुखान्युपलेभिरेऽनुबभूवुः ॥ ७४ ॥

सानुप्लवः प्रभुरपि क्षणदाचराणां भेजे रथान्दशरथप्रभवानुशिष्टः ।
मायाविकल्परचितैरपि ये तदीयैर्न स्यन्दनैस्तुलितकृत्रिमभक्तिशोभाः ॥

कोशार्धं प्रकृतिपुरःसरेण गत्वा काकुत्स्थः स्तिमितजवेन पुष्पकेण ।
शत्रुघ्नप्रतिविहितोपकार्यमार्यः साकेतोपवनमुदारमध्युवास ॥ ७९ ॥

कोशार्धमिति । आर्यः पूज्यः काकुत्स्थो रामः प्रकृतयः प्रजाः पुरःसरा यस्य तेन स्तिमितजवेन मन्दवेगेन पुष्पकेण । क्रोशोऽध्वपरिमाणविशेषः । क्रोशार्धं क्रोशैकदेशं गत्वा शत्रुघ्नेन प्रतिविहिताः सज्जिता उपकार्याः पटभवनानि यस्मिंस्तदुदारं महत्साकेतस्यायोध्याया उपवनमध्युवासाधितष्ठौ । 'साकेतः स्यादयोध्यायां कोसलानन्दिनी तथा' इति यादवः ॥ ७९ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये दण्डकाप्रत्यागमनो नाम त्रयोदशः सर्गः ॥ १३ ॥

---

## चतुर्दशः सर्गः ।

सर्वोत्तमं मैथिलकन्यकायाः सौन्दर्यसर्वस्वमहानिधानम् ।
सुधाद्यपदैकसद्मोः समार्थं रामस्य वन्दे रमणीयमास्यम् ॥

भर्तुः प्रणाशादथ शोचनीयं दशान्तरं तत्र समं प्रपन्ने ।
अपश्यतां दाशरथी जनन्यौ छेदादिवोपघ्नतरोर्व्रतत्यौ ॥ १ ॥

भर्तुरिति । अथोपवनाधिष्ठानानन्तरं दाशरथी रामलक्ष्मणौ । उपघ्नतरोराश्रयवृक्षस्य । 'उपघ्न आश्रये' इति निपातः । तस्य छेदाद् व्रतत्यौ लते इव । 'वल्ली तु व्रततिर्लता' इत्यमरः । भर्तुर्दशरथस्य प्रणाशाच्छोचनीयं दशान्तरमवस्थान्तरम् । 'अवस्थायां दशान्ते स्याद्दशापि' इति विश्वः । प्रपन्ने प्राप्ते जनन्यौ कौसल्यासुमित्रे तत्र साकेतोपवने समं युगपदपश्यताम् । दृशेः कर्तरि लङ् ॥ १ ॥

उभावुभाभ्यां प्रणतौ हतारी यथाक्रमं विक्रमशोभिनौ तौ ।
विस्पष्टमस्रान्धतया न दृष्टौ ज्ञातौ सुतस्पर्शसुखोपलम्भात् ॥ २ ॥

उभाविति । यथाक्रमं ज्येष्ठानुपूर्व्येण प्रणतौ नमस्कुर्वन्तौ हतारी हतशत्रू विक्रमशोभिनौ तावुभौ रामलक्ष्मणावुभाभ्यां मातृभ्यामस्रैरश्रुभिरन्धतया हेतुना । 'अस्रमश्रु च शोणितम्' इति यादवः । विस्पष्टं न दृष्टौ किन्तु सुतस्पर्शेन यत्सुखं तस्योपलम्भादनुभवाज्ज्ञातौ ॥ २ ॥

आनन्दजः शोकजमश्रु बाष्पस्तयोरशीतं शिशिरो बिभेद ।
गङ्गासरय्वोर्जलमुष्णतप्तं हिमाद्रिनिस्यन्द इवावतीर्णः ॥ ३ ॥

आनन्दज इति । तयोर्मात्रोरानन्दजः शिशिरः शीतलः, बाष्पः शोकजम् अशीतमुष्णमश्रु । उष्णतप्तं ग्रीष्मतप्तं गङ्गासरय्वोर्जलं कर्म अवतीर्णो हिमाद्रेर्निस्यन्दो निर्झर इव बिभेद । आनन्देन शोकस्तिरस्कृत इत्यर्थः ॥ ३ ॥

ते पुत्रयोर्नैरृतशस्त्रमार्गानार्द्रानिवाङ्गे सदयं स्पृशन्त्यौ ।
अपीप्सितं क्षत्रकुलाङ्गनानां न वीरसूशब्दमकामयेताम् ॥ ४ ॥

ते इति । ते मातरौ पुत्रयोरङ्गे शरीरे नैरृतशस्त्राणां राक्षसशस्त्राणां मार्गान् प्रहारव्रणानार्द्रानिव सदयं स्पृशन्त्यौ क्षत्रकुलाङ्गनानामीप्सितमिष्टमपि वीरसूर्वीरमातेति शब्दं नाकामयेताम् । वीरप्रसवो दुःखहेतुरिति भावः ॥ ४ ॥

क्लेशावहा भर्तुरलक्षणाऽहं सीतेति नाम स्वमुदीरयन्ती ।
स्वर्गप्रतिष्ठस्य गुरोर्महिष्यावभक्तिभेदेन वधूर्ववन्दे ॥ ५ ॥

क्लेशावहा इति । भर्तुर्वधूः सीता भर्तुः क्लेशावहा क्लेशकारिणी अत एवालक्षणाऽहं सीतेति स्वं नामोदीरयन्ती स्वर्गः प्रतिष्ठाऽऽस्पदं यस्य तस्य स्वर्गस्थितस्य गुरोः श्वशुरस्य महिष्यौ समम् । वधूः स्नुषा "वधूर्जाया स्नुषा" इत्यमरः । अभक्तिभेदेन ववन्दे । स्वर्गप्रतिष्ठस्येत्यनेन श्वशुरस्य दर्शनदुःखं सूचितम् ॥ ५ ॥

उत्तिष्ठ वत्से ननु सानुजोऽसौ वृत्तेन भर्ता शुचिना तवैव ।
कृच्छ्रं महत्तीर्ण इति प्रियार्हां तामूचतुस्ते प्रियमप्यमिथ्या ॥ ६ ॥

उत्तिष्ठेति । ननु वत्से ! उत्तिष्ठ । असौ सानुजो भर्ता तवैव शुचिना वृत्तेन महत्कृच्छ्रं दुःखं तीर्णस्तीर्णवान् इति प्रियार्हां तां वधूं प्रियमप्यमिथ्या सत्यं ते श्वश्र्वावूचतुः । तथ्यं दुर्लभमिति भावः ॥ ६ ॥

अथाभिषेकं रघुवंशकेतोः प्रारब्धमानन्दजलैर्जनन्योः ।
निर्वर्तयामासुरमात्यवृद्धास्तीर्थाहृतैः काञ्चनकुम्भतोयैः ॥ ७ ॥

अथेति । अथ जनन्योरानन्दजलैरानन्दबाष्पैः प्रारब्धं प्रक्रान्तं रघुवंशकेतो रामस्याभिषेकममात्यवृद्धास्तीर्थेभ्यो गङ्गाप्रमुखेभ्य आहृतैरानीतैः काञ्चनकुम्भतोयै-र्निर्वर्तयामासुर्निष्पादयामासुः ॥ ७ ॥

सरित्समुद्रान्सरसीश्च गत्वा रक्षःकपीन्द्रैरुपपादितानि ।
तस्यापतन्मूर्ध्नि जलानि जिष्णोर्विन्ध्यस्य मेघप्रभवा इवापः ॥ ८ ॥

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।
अनन्यजानेः सैवासीद्यस्माज्जाया हिरण्मयी ॥ ६१ ॥

श्लाघ्य इति । वैदेह्यास्त्यागोऽपि श्लाघ्यो वर्ण्य एव । कुतः । यस्मात् । प्राग्वंशः प्राचीनस्थूणो यजमानगृहविशेषः तद्वासिनः । नास्त्यन्या जाया यस्य तस्यानन्यजानेः । "जायाया निङ्" इति समासान्तो निङादेशः । पत्यू रामस्य हिरण्मयी सौवर्णी । "दाण्डिनायन-" इत्यादिसूत्रेण निपातः । सा सीतैव जाया पत्न्यासीत् । कविवाक्यमेतत् ॥ ६१ ॥

विधेरधिकसम्भारस्ततः प्रववृते मखः ।
आसन्यत्र क्रियाविघ्ना राक्षसा एव रक्षिणः ॥ ६२ ॥

विधेरिति । ततो विधेः शास्त्रादधिकसम्भारोऽतिरिच्यमानपरिकरो मखः प्रववृते प्रवृत्तः । यत्र मखे विघ्नन्त्येभिरिति विघ्नाः प्रत्यूहाः । "घञर्थे कविधानम्" इति कः । क्रियाविघ्ना अनुष्ठानविघातका राक्षसा एव रक्षिणो रक्षका आसन् ॥ ६२ ॥

अथ प्राचेतसोपज्ञं रामायणमितस्ततः ।
मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ ॥ ६३ ॥

अथेति । अथ मैथिलेयौ मैथिलीतनयौ । "स्त्रीभ्यो ढक्" । कुशलवौ गुरुणा वाल्मीकिना चोदितौ प्रेरितौ सन्तौ । प्राचेतसो वाल्मीकिः । उपज्ञायत इत्युपज्ञा । "आतश्चोपसर्गे" इति कर्मण्यङ्प्रत्ययः । प्राचेतसस्योपज्ञा प्राचेतसोपज्ञम् । प्राचेतसेनादौ ज्ञातमित्यर्थः । "उपज्ञा ज्ञानमाद्यं स्यात्" इत्यमरः । "उपज्ञोपक्रमं तदाद्याचिख्यासायाम्" इति नपुंसकत्वम् । अय्यते ज्ञायतेऽनेनेत्ययनं रामस्यायनं चरितं रामायणं रामायणसंज्ञं काव्यम् । "पूर्वपदात्संज्ञायामगः" इति णत्वम् । तत्रतत्र-मितिवत् । इतस्ततो जगतुः । गायतेर्लिट् ॥ ६३ ॥

वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किन्नरस्वनौ ।
किं तद्येन मनो हर्तुमलं स्यातां न शृण्वताम् ॥ ६४ ॥

वृत्तमिति । रामस्य वृत्तं वर्ण्यम् । अस्तीति शेषः । वाल्मीकेः कृतिः काव्यम् गेयमिति शेषः । तौ कुशलवौ किन्नरस्वनौ किन्नरकण्ठौ गायकौ पुनरिति शेषः । अत एव तत्किं येन निमित्तेन तौ शृण्वतां मनो हर्तुमलं पर्याप्तौ न स्याताम् । सर्वं सरसमित्यर्थः ॥ ६४ ॥

रूपे गीते च माधुर्यं तयोस्तज्ज्ञैर्निवेदितम् ।
ददर्श सानुजो रामः शुश्राव च कुतूहली ॥ ६५ ॥

रूप इति । ते जानन्तीति तज्ज्ञाः । तैस्तज्ज्ञैरभिज्ञैर्निवेदितं तयोः कुमारयो रूपे माधुर्यं गीते च माधुर्यं तमन्वीयर्क सानुजो रामः कुतूहली सानन्दः सन् यथासंख्यं ददर्श शुश्राव च ॥ ६५ ॥

तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ ।
हिमनिष्यन्दिनी प्रातर्निर्वातेव वनस्थली ॥ ६६ ॥

तदिति । तयोर्गीतश्रवणे एकाग्रा अश्रुमुखी । आनन्दादिति भावः । संसत्सभा प्रातर्हिमनिष्यन्दिनी निर्वाता वातरहिता वनस्थलीव । बभौ शुशुभे । आनन्दपारवश्यादनिस्पन्दमासीदित्यर्थः ॥ ६६ ॥

वयोवेषविसंवादि रामस्य च तयोस्तदा ।
जनता प्रेक्ष्य सादृश्यं नाक्षिकम्पं व्यतिष्ठत ॥ ६७ ॥

वय इति । जनता जनानां समूहः । "ग्रामजनबन्धुसहायेभ्यस्तल्" इति तल्प्रत्ययः । वयोवेषाभ्यामेव विसंवादि विसदृशं तदा तयोः कुमारयो रामस्य च सादृश्यं प्रेक्ष्य । नास्त्यक्षिकम्पं यस्मिन्कर्मणि तद्यथा तथा । अनर्थकस्य बहुव्रीहिः । व्यतिष्ठत । "समवप्रविभ्यः स्थः" इत्यात्मनेपदम् । विस्मयादनिमिषमतिष्ठदित्यर्थः ॥ ६७ ॥

उभयोर्न तथा लोकः प्रावीण्येन विसिष्मिये ।
नृपतेः प्रीतिदानेषु वीतस्पृहतया यथा ॥ ६८ ॥

उभयोरिति । लोको जन उभयोः कुमारयोः प्रावीण्येन नैपुण्येन तथा न विसिष्मिये न विस्मितवान् यथा नृपतेः प्रीतिदानेषु वीतस्पृहतया नैःस्पृह्येन विसिष्मिये ॥ ६८ ॥

गेये को नु विनेता वां कस्य चेयं कृतिः कवेः ।
इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम् ॥ ६९ ॥

गेय इति । गेये गीते को नु वां युवयोर्विनेता शिक्षकः । नुशब्दः प्रश्ने । 'नु पृच्छायां विकल्पे च' इत्यमरः । इयं च कस्य कवेः कृतिरिति राज्ञा स्वयं पृष्टौ तौ कुमारौ वाल्मीकिमशंसतामुक्तवन्तौ विनेतारं कविं चेत्यर्थः । 'गेये केन विनीतौ वाम्' इति पाठे वामिति युष्मदर्थप्रतिपादकमव्ययं द्रष्टव्यम् । तथा चामरः—

येन पुत्रा वा पुत्री गेये गीतविषये विनीतौ शिक्षितौ । धर्मेण निग्रहसमः ॥६९॥

अथ सावरजो रामः प्राचेतसमुपेयिवान् ।
ऊरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत् ॥ ७० ॥

अथेति । अथ सावरजो रामः प्राचेतसं वाल्मीकिमुपेयिवान्प्राप्तः सन् । देहमात्मानम् ऊरीकृत्य आत्मानं स्वाधीनविशेषणैः । राज्यमस्मै प्राचेतसाय न्यवेदयत्समर्पितवान् ॥ ७० ॥

स तावाख्याय रामाय मैथिलेयौ तदात्मजौ ।
कविः कारुणिको वव्रे सीतायाः सम्परिग्रहम् ॥ ७१ ॥

स इति । करुणा प्रयोजनमस्य कारुणिको दयालुः । "प्रयोजनम्" इति ठञ् । स्यात्दयालुः कारुणिकः इत्यमरः । स कवी रामाय मैथिलेयौ तदात्मजौ रामपुत्रावाख्याय सीतायाः सम्परिग्रहं स्वीकारं वव्रे ययाचे ॥ ७१ ॥

तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि ।
दौरात्म्याद्रक्षसस्तां तु नात्रत्याः श्रद्दधुः प्रजाः ॥ ७२ ॥

तातेति । हे तात । ते स्नुषा सीता नोऽस्माकमक्ष्णोः समीपं समक्षम् । "अव्ययीभावे शरत्प्रभृतिभ्यः" इति समासान्तष्टच् । जातवेदसि वह्नौ शुद्धा नात्मा कमलिनाश इत्यर्थः । किन्तु रक्षसो रावणस्य दौरात्म्याद्दुष्टात्मत्वात्तां प्रजास्तां न श्रद्दधुः विश्वसमुः ॥ ७२ ॥

ताः स्वचारित्रमुद्दिश्य प्रत्याययतु मैथिली ।
ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया ॥ ७३ ॥

ता इति । मैथिली स्वचारित्रमुद्दिश्य ताः प्रजाः प्रत्याययतु विश्वासयतु । विश्वासस्य बुद्धिरूपत्वात् । "णौ गमिरबोधने" इति इणो गम्यादेशो नास्ति । ततोऽनन्तरं पुत्रवतीमेनां सीतां त्वदाज्ञया प्रतिपत्स्ये स्वीकरिष्ये ॥ ७३ ॥

इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः ।
शिष्यैरानाययामास स्वसिद्धिं नियमैरिव ॥ ७४ ॥

इतीति । राज्ञेति प्रतिश्रुते प्रतिज्ञाते सति मुनिराश्रमाज्जानकीं शिष्यैः प्रयोज्यैः स्वसिद्धिं स्वार्थसिद्धिं नियमैस्तपोभिरिव आनाययामास ॥ ७४ ॥

अन्येद्युरथ काकुत्स्थः संनिपात्य पुरौकसः ।
कविमाह्वाययामास प्रस्तुतप्रतिपत्तये ॥ ७५ ॥

अन्येद्युरिति । अथ काकुत्स्थो रामः । अन्येद्युरन्यस्मिन्नहनि प्रस्तुतप्रतिपत्तये प्रस्तुतकार्योपसम्पादनाय पुरौकसः पौरान् प्रतिपाद्य मेलयित्वा कविं वाल्मीकिमाह्वापयामासाह्वानमकारयामास ॥ ७५ ॥

स्वरसंस्कारवत्यासौ पुत्राभ्यामथ सीतया ।
ऋचेवोदर्चिषं सूर्यं रामं मुनिरुपस्थितः ॥ ७६ ॥

स्वरेति । अथ । स्वर उदात्तादिः । संस्कारः वर्णशुद्धिः तद्वत्या ऋचा सावित्र्योदर्चिषं सूर्यमिव पुत्राभ्यामुपलक्षितया सीतया ऋचेवोदर्चिषं राममसौ मुनिरुपस्थित उपतस्थे ॥ ७६ ॥

काषायपरिवीतेन स्वपदार्पितचक्षुषा ।
अन्वमीयत शुद्धेति शान्तेन वपुषैव सा ॥ ७७ ॥

काषायेति । कषायेण रक्तं काषायम् । 'तेन रक्तं रागात्' इत्यण् । तेन परिवीतेन संवीतेन स्वपदार्पितचक्षुषा शान्तेन प्रसन्नेन वपुषैव सा सीता शुद्धा साध्वीत्यन्वमीयतानुमिता ॥ ७७ ॥

जनास्तदालोकपथात्प्रतिसंहृतचक्षुषः ।
तस्थुस्तेऽवाङ्मुखाः सर्वे फलिता इव शालयः ॥ ७८ ॥

जना इति । तस्याः सीतायाः कर्मणि आलोकपथाद्दर्शनमार्गात्प्रतिसंहृतचक्षुषो निवर्तितदृष्टयः सर्वे जनाः । फलिताः शालय इव । अवाङ्मुखा अवनतमुखास्तस्थुः ॥

तां दृष्टिविषये भर्तुर्मुनिरास्थितविष्टरः ।
कुरु निःसंशयं वत्से स्ववृत्ते लोकमित्यशात् ॥ ७९ ॥

तामिति । आस्थितविष्टरोऽधिष्ठितासनो मुनिः । हे वत्से । भर्तुर्दृष्टिविषये समक्षं स्ववृत्ते स्वचरिते विषये लोकं निःसंशयं कुरु । इति तां सीतामशाच्छास्ति स्म ॥

अथ वाल्मीकिशिष्येण पुण्यमावर्जितं पयः ।
आचम्योदीरयामास सीता सत्यां सरस्वतीम् ॥ ८० ॥

अथेति । अथ वाल्मीकिशिष्येणावर्जितं दत्तं पुण्यं पूतं पयो जलमाचम्य सीता सत्यां सरस्वतीं वाचमुदीरयामासोच्चारयामास ॥ ८० ॥

वाङ्मनःकर्मभिः पत्यौ व्यभिचारो यथा न मे ।
तथा विश्वम्भरे देवि मामन्तर्धातुमर्हसि ॥ ८१ ॥

वागिति । वाङ्मनःकर्मभिः पत्यौ विषये मे व्यभिचारः स्खलितं न यथा

नास्ति यदि तथा तर्हि । विश्वं बिभर्तीति विश्वम्भरा भूमिः । "संज्ञायां भृतृ—" इत्यादिना खच्प्रत्ययः । "अरुर्द्विषद्—" इत्यादिना मुमागमः । हे विश्वम्भरे देवि ! मामन्तर्धातुं गर्भे वासयितुमर्हसि ॥ ८१ ॥

एवमुक्ते तया साध्व्या रन्ध्रात्सद्योभवाद् भुवः ।
शातह्रदमिव ज्योतिः प्रभामण्डलमुद्ययौ ॥ ८२ ॥

एवमिति । साध्व्या पतिव्रतया तया सीतयैवमुक्ते सति सद्योभवाद् भुवो रन्ध्राच्छातह्रदं वैद्युतं ज्योतिरिव प्रभामण्डलमुद्ययौ ॥ ८२ ॥

तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी ।
समुद्ररशना साक्षात्प्रादुरासीद्वसुन्धरा ॥ ८३ ॥

तत्रेति । तत्र प्रभामण्डले नागफणोत्क्षिप्ते सिंहासने निषेदुष्यासीना समुद्ररशना समुद्रमेखला साक्षात् । वसूनि धारयतीति वसुन्धरा भूमिः । "खचि ह्रस्वः" इति ह्रस्वः । प्रादुरासीत् ॥ ८३ ॥

सा सीतामङ्कमारोप्य भर्तृप्रणिहितेक्षणाम् ।
मा मेति व्याहरत्येव तस्मिन्पातालमभ्यगात् ॥ ८४ ॥

सेति । सा वसुन्धरा भर्तरि प्रणिहितेक्षणां दत्तदृष्टिं सीतामङ्कमारोप्य तस्मिन् भर्तरि रामे मामेति मा हरेति व्याहरति सत्येव व्याहरन्तमनादृत्यैवेत्यर्थः । "षष्ठी चानादरे" इति सप्तमी । पातालमभ्यगात् ॥ ८४ ॥

धरायां तस्य संरम्भं सीताप्रत्यर्पणैषिणः ।
गुरुर्विधिबलापेक्षी शमयामास धन्विनः ॥ ८५ ॥

धरायामिति । सीताप्रत्यर्पणमिच्छतीति तथोक्तस्य धन्विन आत्तधनुष्कस्य रामस्य धरायां विषये संरम्भं विधिबलापेक्षी दैवबलदर्शी गुरुर्वसिष्ठः शमयामास । अवश्यम्भावी विधिरिति भावः ॥ ८५ ॥

ऋषीन्विसृज्य यज्ञान्ते सुहृदश्च पुरस्कृतान् ।
रामः सीतागतं स्नेहं निदधे तदपत्ययोः ॥ ८६ ॥

ऋषीनिति । रामो यज्ञान्ते पुरस्कृतान्पूजितानृषीन्वाल्मीकिप्रभृतीन्सुहृदश्च विभीषणादीन् विसृज्य सीतागतं स्नेहं तदपत्ययोः कुशलवयोर्निदधे ॥ ८६ ॥

युधाजितश्च सन्देशात्स देशं सिन्धुनामकम् ।
ददौ दत्तप्रभावाय भरताय भृतप्रजः ॥ ८७ ॥

युधेति । किञ्च । भृतप्रजः स रामो युधाजितो भरतमातुलस्य सन्देशात्सिन्धुनामकं देशं दत्तप्रभावाय दत्तैश्वर्याय रामेणेति शेषः । भरताय ददौ ॥ ८७ ॥

> भरतस्तत्र गन्धर्वान्युधि निर्जित्य केवलम् ।
> आतोद्यं ग्राहयामास समत्याजयदायुधम् ॥ ८८ ॥

भरत इति । तत्र सिन्धुदेशे भरतोऽपि युधि गन्धर्वान्निर्जित्य केवलमातोद्यं वीणाम् । 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥ चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ॥' इत्यमरः । ग्राहयामास । आयुधं समत्याजयत्त्याजितवान् । ग्रहिसन्त्यज्योर्ण्यन्तयोर्द्विकर्मकत्वमित्यनुसन्धेयम् ॥ ८८ ॥

> स तक्षपुष्कलौ पुत्रौ राजधान्योस्तदाख्ययोः ।
> अभिषिच्याभिषेकार्हौ रामान्तिकमगात्पुनः ॥ ८९ ॥

स इति । स भरतः । अभिषेकार्हौ तक्षपुष्कलौ नाम पुत्रौ तदाख्ययोः तक्षपुष्कलाख्ययोरित्यर्थः । पुष्कलं पुष्कलावती तक्षं तक्षशिलामिति राजधान्योर्नगर्योरभिषिच्य पुना रामान्तिकमगात् ॥ ८९ ॥

> अङ्गदं चन्द्रकेतुं च लक्ष्मणोऽप्यात्मसम्भवौ ।
> शासनाद्रघुनाथस्य चक्रे कारापथेश्वरौ ॥ ९० ॥

अङ्गदमिति । लक्ष्मणोऽपि रघुनाथस्य रामस्य शासनादङ्गदं चन्द्रकेतुं च तदाख्यावात्मसम्भवौ पुत्रौ । कारापथो नाम देशः । तस्येश्वरौ चक्रे ॥ ९ ॥

> इत्यारोपितपुत्रास्ते जननीनां जनेश्वराः ।
> भर्तृलोकप्रपन्नानां निवापान्विदधुः क्रमात् ॥ ९१ ॥

इतीति । इत्यारोपितपुत्रास्ते जनेश्वरा रामादयो भर्तृलोकप्रपन्नानां स्वर्यातानां जननीनां क्रमान्निवापाञ्छ्राद्धादीन्विदधुश्चक्रुः । 'पितृदानं निवापः स्यात्' इत्यमरः ॥ ९१ ॥

> उपेत्य मुनिवेषोऽथ कालः प्रोवाच राघवम् ।
> रहःसंवादिनौ पश्येदावां यस्तं त्यजेरिति ॥ ९२ ॥

उपेत्येति । अथ कालोऽन्तको मुनिवेषः सन्नुपेत्य राघवं प्रोवाच । किमित्याह—रहस्येकान्ते संवादिनौ सम्भाषिणावावां यः पश्येत् । रहस्यभङ्गं कुर्यादित्यर्थः । तं त्यजेरिति ॥ ९२ ॥

तथेति प्रतिपन्नाय विवृतात्मा नृपाय सः ।
आचख्यौ दिवमध्यास्व शासनात्परमेष्ठिनः ॥ ९३ ॥

तथेतीति । स कालस्तथेति प्रतिपन्नाय नृपाय रामाय विवृतात्मा प्रकाशितनिजस्वरूपः सन् । परमेष्ठिनो ब्रह्मणः शासनाद्दिवमध्यास्वेत्याचख्यौ ॥ ९३ ॥

विद्वानपि तयोर्द्वाःस्थः समयं लक्ष्मणोऽभिनत् ।
भीतो दुर्वाससः शापाद्रामसन्दर्शनार्थिनः ॥ ९४ ॥

विद्वानिति । द्वाःस्थो द्वारि नियुक्तो लक्ष्मणो विद्वानपि पूर्वस्मिन्भेदे वधम-पि रामसन्दर्शनार्थिनो दुर्वाससो मुनेः शापाद्भीतः सन् । तयोः कालरामयोः समयं संवादमभिनद्बिभेद ॥ ९४ ॥

स गत्वा सरयूतीरं देहत्यागेन योगवित् ।
चकारावितथां भ्रातुः प्रतिज्ञां पूर्वजन्मनः ॥ ९५ ॥

स इति । योगविद्ध्यानमार्गवेदी स लक्ष्मणः सरयूतीरं गत्वा देहत्यागेन पूर्वजन्मनो भ्रातुः प्रतिज्ञामवितथां सत्यां चकार ॥ ९५ ॥

तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि ।
राघवः शिथिलं तस्थौ भुवि धर्मस्त्रिपादिव ॥ ९६ ॥

तस्मिन्निति । चतुर्थो भागश्चतुर्भागः । संख्यापन्नस्य इतिमिमते पूरणार्थत्वं प्रतापवत् । आत्मचतुर्भागे तस्मिंल्लक्ष्मणे प्राङ्नाकमधितस्थुषि पूर्वं स्वर्गं गतवति सति राघवो रामः । भुवि त्रिपाद्धर्म इव शिथिलं तस्थौ । पादविकलत्वे हि शिथिलं तिष्ठतीति भावः । त्रेतायां धर्मस्त्रिपादित्यागमः । पादश्चतुर्थांशः चरणश्च कथ्यते । पादा रश्म्यङ्घ्रितुर्यांशा इत्यमरः । त्रयः पादा यस्यासौ त्रिपात् । "संख्यासुपूर्वस्य" इत्यकारलोपः समासान्तः ॥ ९६ ॥

स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम् ।
शरावत्यां सतां सूक्तैर्जनिताश्रुलवं लवम् ॥ ९७ ॥

उदक्प्रतस्थे स्थिरधीः सानुजोऽग्निपुरःसरः ।
अन्वितः पतिवात्सल्याद्गृहवर्जमयोध्यया ॥ ९८ ॥

स इत्यादीति । कुलकम् । स्थिरधीः स रामः । रिपव एव नागा गजास्तेषामङ्कुशं निवारकं कुशं कुशावत्यां पुर्यां निवेश्य स्थापयित्वा । सूक्तैः समीचीनवचनैः सतां जनिता अश्रुलवा अश्रुलेशा येन तं लवं शरावत्यां पुरम् । "लवो लेशे विलासे च छे-

चतुर्भुजांशप्रभव इति । चतुर्भुजो विष्णुः तस्यांशा रामादयः । ते प्रभवाः कारणानि यस्य स तथोक्तः । वर्णं स्थाने मतम् । 'वर्यं पक्षमदे स्थाने' इति विश्वः । प्रकृतिभ्योऽधिकः प्रजाश्च । दानप्रवृत्तेरनुपारतानां तेषां कुशलवादीनां च वंशः । दान योनिः दानवेदप्रभवो दानप्रवृत्तेरनुपारतानां सुरद्विपानां दिग्गजानां वंश इव अवध्य मिथः सन् । विश्वसार विस्तृतोऽभूत् । दानयोनिरित्यत्र पालकाप्य:— सर्वेषा मरुणाभे हि समानीय प्रजापतिः । हस्ताभ्यां परिगृह्याथ सप्त सामान्यगायत । गायतो ब्रह्मणस्तस्मात्समुत्पेतुर्मतङ्गजाः ॥ इति ॥ ३ ॥

अथार्धरात्रे स्तिमितप्रदीपे शय्यागृहे सुप्तजने प्रबुद्धः ।
कुशः प्रवासस्थकलत्रवेषामदृष्टपूर्वां वनितामपश्यत् ॥ ४ ॥

अथेति । अथ । अर्धं रात्रेरर्धरात्रः । 'अर्धं नपुंसकम्' इत्येकदेशिसमासः । "अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः" इति समासान्तोऽच्प्रत्ययः । 'रात्राह्नाहाः पुंसि' इति नियमात्पुंस्त्वम् । अर्धरात्रे निशीथे स्तिमितप्रदीपे सुप्तजने शय्यागृहे प्रबुद्धः न तु सुप्तः । कुशः प्रवासस्थकलत्रवेषां प्रोषितभर्तृकावेषाम् । अदृष्ट पूर्वं मिति अदृष्टपूर्वां । सुप्सुपेति समासः । वनितामपश्यत् ॥ ४ ॥

सा साधुसाधारणपार्थिवर्द्धेः स्थित्वा पुरस्तात्पुरुहूतभासः ।
जेतुः परेषां जयशब्दपूर्वं तस्याञ्जलिं बन्धुमतो बबन्ध ॥ ५ ॥

सेति । सा वनिता साधुसाधारणपार्थिवर्द्धेः सज्जनसाधारणराजश्रियः पुरुहूतभास इन्द्रतेजसः परेषां शत्रूणां जेतुर्बन्धुमतस्तस्य कुशस्य पुरस्तात्स्थित्वा जय शब्दः पूर्वं यथा तथाऽञ्जलिं बबन्ध ॥ ५ ॥

अथानपोढार्गलमप्यगारं छायामिवादर्शतलं प्रविष्टाम् ।
सविस्मयो दाशरथेस्तनूजः प्रोवाच पूर्वार्धविसृष्टतल्पः ॥ ६ ॥

अथेति । अथ सविस्मयः पूर्वार्धेन शरीरपूर्वभागेन विसृष्टतल्पस्त्यक्तशय्यो दाशरथेस्तनूजः कुशः । अनपोढार्गलमनुद्घाटितविष्कम्भमपि । 'तद्विष्कम्भोऽर्गलं न ना' इत्यमरः । अगारम् । आदर्शतलं छायामिव प्रविष्टां तां वनितां प्रोवाचावदत् ॥ ६ ॥

लब्धान्तरा सावरणेऽपि गेहे योगप्रभावो न च लक्ष्यते ते ।
बिभर्षि चाकारमनिर्वृतानां मृणालिनी हैममिवोपरागम् ॥ ७ ॥

का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते ।
आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ॥ ८ ॥

निशासु भास्वत्कलनूपुराणां यः संचरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्काविचितामिषाभिः स वाह्यते राजपथः शिवाभिः ॥१२॥

निशास्विति । निशासु भास्वन्ति दीप्तिमन्ति कलान्यव्यक्तमधुराणि नूपुराणि यासां तासामभिसारिकाणाम् । 'कान्तार्थिनी तु या याति संकेतं साऽभिसारिका' इत्यमरः । यो राजपथः । संचरत्यनेनेति संचरः । संचारसाधनमभूत् । 'गोचरसंचरवहव्रजव्यजापणनिगमाश्च' इत्यनेन घप्रत्ययान्तो निपातः । नदत्सु मुखेषु या उल्कास्ताभिर्विचितान्यामिषाणि याभिस्ताभिः शिवाभिः क्रोष्ट्रीभिः स राजपथो वाह्यते गम्यते । महोरग्यो वल्मीकादुरगस्तीत्युपदेशः ॥ १२ ॥

आस्फालितं यत्प्रमदाकराग्रैर्मृदङ्गधीरध्वनिमन्वगच्छत् ।
वन्यैरिदानीं महिषैस्तदम्भः शृङ्गाहतं क्रोशति दीर्घिकाणाम् ॥१३॥

आस्फालितमिति । यदम्भः प्रमदाकराग्रैरास्फालितं ताडितं सत् । जलक्रीडास्विति शेषः । मृदङ्गानां यो धीरध्वनिस्तमन्वगच्छदन्वकरोत् । तद्दीर्घिकाणामम्भ इदानीं वन्यैर्महिषैः शृङ्गैर्विषाणैराहतं सत्क्रोशति न तु मृदङ्गध्वनिमनुकरोतीत्यर्थः ॥ १३ ॥

वृक्षेशया यष्टिनिवासभङ्गान्मृदङ्गशब्दापगमादलास्याः ।
प्राप्ता दवोल्काहतशेषबर्हाः क्रीडामयूरा वनबर्हिणत्वम् ॥ १४ ॥

वृक्षेशया इति । यष्टिरेव निवासः स्थानं तस्य भङ्गात् । वृक्षे शेरत इति वृक्षेशयाः । "अधिकरणे शेतेः" इत्यच्प्रत्ययः । "शयवासवासिष्वकालात्" इत्यलुक्समासः । मृदङ्गशब्दानामपगमादपगमान्नृत्यरहिता अलास्याः । दवोऽरण्यवह्निः । दवदावौ वनारण्यवह्नी इत्यमरः । तस्योल्काभिः स्फुलिङ्गैर्हतेभ्यः शेषाणि बर्हाणि येषां ते क्रीडामयूरा वनबर्हिणत्वं वनमयूरत्वं प्राप्ताः ॥ १४ ॥

सोपानमार्गेषु च येषु रामा निक्षिप्तवत्यश्चरणान्सरागान् ।
सद्यो हतन्यङ्कुभिरस्रदिग्धं व्याघ्रैः पदं तेषु निधीयते मे ॥ १५ ॥

सोपानेति । किंच । येषु सोपानमार्गेषु रामा रमण्यः सरागाँल्लाक्षारसार्द्रांश्चरणान्निक्षिप्तवत्यः । तेषु मे मम मार्गेषु व्याघ्रैः सद्यो हतन्यङ्कुभिर्मारितमृगैर्व्याघ्रैरस्रदिग्धं रुधिरलिप्तं पदं निधीयते ॥ १५ ॥

चित्रद्विपाः पद्मवनावतीर्णाः करेणुभिर्दत्तमृणालभङ्गाः ।
नखाङ्कुशाघातविभिन्नकुम्भाः संरब्धसिंहप्रहृतं वहन्ति ॥ १६ ॥

चित्रेति । पद्मवनमवतीर्णाः प्रविष्टाः तथा लिखिता इत्यर्थः । करेणुभिः क-रिणीभिः । चित्रगताभिरेव । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । दत्तमृणालभङ्गाश्चित्रद्विपा आलेख्यमातङ्गाः । नखा एवाङ्कुशाः तेषामाघातैर्विभिन्नकुम्भाः सन्तः संरब्धसिंहप्रहृतं कुपितसिंहप्रहारं वहन्ति ॥ १६ ॥

स्तम्भेषु योषित्प्रतियातनानामुत्क्रान्तवर्णक्रमधूसराणाम् ।
स्तनोत्तरीयाणि भवन्ति सङ्गान्निर्मोकपट्टाः फणिभिर्विमुक्ताः ॥१७॥

स्तम्भेष्विति । उत्क्रान्तवर्णक्रमा विशीर्णवर्णविन्यासास्ताश्च धूसराश्च यास्ता-सां स्तम्भेषु योषित्प्रतियातनानां स्त्रीप्रतिकृतीनां दारुमयीनां फणिभिर्विमुक्ता नि-र्मोकाः कञ्चुका एव पट्टाः । 'समौ कञ्चुकनिर्मोकौ' इत्यमरः । सङ्गात्सम्पर्कात्स्तनो-त्तरीयाणि स्तनाच्छादनवस्त्राणि भवन्ति ॥ १७ ॥

कालान्तरश्यामसुधेषु नक्तमितस्ततो रूढतृणाङ्कुरेषु ।
त एव मुक्तागुणशुद्धयोऽपि हर्म्येषु मूर्च्छन्ति न चन्द्रपादाः ॥१८॥

कालान्तरेति । कालान्तरेण कालक्षेपेण श्यामसुधेषु मलिनचूर्णेष्वितस्त-तो रूढतृणाङ्कुरेषु हर्म्येषु गेहेषु नक्तं रात्रौ मुक्तागुणवच्छुद्धिरिव शुद्धिः स्वाच्छ्यं येषां तादृशा अपि । ततः पूर्वं ये मूर्च्छन्ति स्म त एव चन्द्रपादाश्चन्द्ररश्मयः । 'पा-दा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । न मूर्च्छन्ति न प्रतिफलन्तीत्यर्थः ॥ १८ ॥

आवर्ज्य शाखाः सदयं च यासां पुष्पाण्युपात्तानि विलासिनीभिः ।
वन्यैः पुलिन्दैरिव वानरैस्ताः क्लिश्यन्त उद्यानलता मदीयाः ॥१९॥

आवर्ज्येति । किञ्च । विलासिनीभिः सदयं शाखा आवर्ज्य आनमय्य यासां लतानां पुष्पाण्युपात्तानि गृहीतानि ता मदीया उद्यानलताः वन्यैः पुलिन्दैः म्लेच्छविशेषैरिव वानरैः शाखामृगैरित्यर्थः । क्लिश्यन्ते पीड्यन्ते । क्लिशधातोः कर्मणि लट् । 'भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः' इत्यमरः ॥ १९ ॥

रात्रावनाविष्कृतदीपभासः कान्तामुखश्रीवियुता दिवाऽपि ।
तिरस्क्रियन्ते कृमितन्तुजालैर्विच्छिन्नधूमप्रसरा गवाक्षाः ॥ २० ॥

रात्राविति । रात्रावनाविष्कृतदीपभासः अप्रकटीकृतदीपदीप्तयः दीपप्रभा-शून्या इत्यर्थः । दिवाऽपि दिवसेऽपि कान्तामुखश्रिया कान्तामुखकान्त्या वियुता रहिता विच्छिन्नो नष्टो धूमप्रसरो येषां ते गवाक्षाः कृमितन्तुजालैर्लूतातन्तुवितानैस्तिर-स्क्रियन्ते छाद्यन्ते ॥ २० ॥

बलिक्रियावर्जितसैकतानि स्नानीयसंसर्गमनाप्नुवन्ति ।
उपान्तवानीरगृहाणि दृष्ट्वा शून्यानि दूये सरयूजलानि ॥ २१ ॥

बलीति । "बलिः पूजोपहारः स्यात्" इति यादवः । बलिक्रियावर्जितानि सैकतानि येषां तानि । स्नानीयानि स्नानसाधनानि चूर्णादीनि । "कृत्यल्युटो बहुलम्" इति करणेऽनीयर्प्रत्ययः । स्नानीयसंसर्गमनाप्नुवन्ति सरयूजलानि शून्यानि रिक्तान्युपान्तेषु वानीरगृहाणि येषां तानि च दृष्ट्वा दूये परितप्ये ॥ २१ ॥

तदर्हसीमां वसतिं विसृज्य मामभ्युपैतुं कुलराजधानीम् ।
हित्वा तनुं कारणमानुषीं तां यथा गुरुस्ते परमात्ममूर्तिम् ॥२२॥

तदिति । तत्तस्मादिमां वसतिं कुशावतीं विसृज्य कुलराजधानीं राज्ञा धीयतेऽस्यामिति राजधानी तामयोध्यां मामभ्युपैतुमर्हसि । कथमिव । ते गुरुः पिता रामस्तां प्रसिद्धां कारणवशान्मानुषीं तनुं मानुषमूर्तिं हित्वा परमात्ममूर्तिं यथा विष्णुमूर्तिमिव ॥ २२ ॥

तथेति तस्याः प्रणयं प्रतीतः प्रत्यग्रहीत्प्राग्रहरो रघूणाम् ।
पूरप्यभिव्यक्तमुखप्रसादा शरीरबन्धेन तिरोबभूव ॥ २३ ॥

तथेतीति । रघूणां प्राग्रहरः श्रेष्ठः कुशस्तस्याः पुरः प्रणयं याच्ञां प्रतीतो हृष्टः संस्तथेति प्रत्यग्रहीत्स्वीकृतवान् । पूः पुराधिदेवताप्यभिव्यक्तमुखप्रसादा सती । कृतार्थत्वादिति भावः । शरीरबन्धेन शरीरयोगेन करणेन तिरोबभूवान्तर्दधे । मानवं रूपं विहाय दैवं रूपमग्रहीदित्यर्थः ॥ २३ ॥

तदद्भुतं संसदि रात्रिवृत्तं प्रातर्द्विजेभ्यो नृपतिः शशंस ।
श्रुत्वा त एनं कुलराजधान्या साक्षात्पतित्वे वृतमभ्यनन्दन् ॥२४॥

तदिति । नृपतिः कुशस्तदद्भुतं रात्रिवृत्तं रात्रिवृत्तान्तं प्रातः संसदि सभायां द्विजेभ्यः शशंस । ते द्विजाः श्रुत्वैनं कुशं कुलराजधान्या साक्षात्स्वयमेव पतित्वे विषये वृतमभ्यनन्दन् । पतित्वेन वृतोऽसीत्यपूजयन् । आशीर्भिरिति शेषः । अत्र मार्कण्डेयः— दृष्ट्वा स्वप्नं शोभनं नैव सुप्यात्पश्चाद्दृष्टो यः स पाकं विधत्ते । शंसेदिष्टं तत्र साधुद्विजेभ्यस्ते चाशीर्भिः प्रीणयेयुर्नरेन्द्रम् ॥ अद्भुतमपि स्वप्नतुल्यमिति भावः ॥२४॥

कुशावतीं श्रोत्रियसात्स कृत्वा यात्रानुकूलेऽहनि सावरोधः ।
अनुद्रुतो वायुरिवाभ्रवृन्दैः सैन्यैरयोध्याभिमुखः प्रतस्थे ॥ २५ ॥

कुशावतीमिति । स कुशः कुशावतीं श्रोत्रियेभ्यश्छान्दसेभ्योऽधीनां श्रोत्रियसात् ।

'तदधीनवचने' इति सातिप्रत्ययः। "श्रोत्रियंश्छन्दोऽधीते" इति निपातः। "श्रोत्रिय-च्छान्दसौ समौ" इत्यमरः। कृत्वा मात्राश्च कुशोऽपि सावरोधः सान्तःपुरः सन्। सा-नुरजनैरिव। सैन्यैरनुद्रुतोऽनुगतः स्वसीमाऽभिमुखः प्रतस्थे ॥ २५ ॥

सा केतुमालोपवना बृहद्भिर्विहारशैलानुगतेव नागैः।
सेना रथोदारगृहा प्रयाणे तस्याभवज्जङ्गमराजधानी ॥ २६ ॥

सेति। केतुमाला एवोपवनानि यस्याः सा बृहद्भिर्नागैर्गजैर्विहारशैलैः क्रीडा-पर्वतैरनुगतेव स्थिता। रथा एवोदारगृहा यस्याः सा सा सेना तस्य कुशस्य प्रयाणे जङ्गमराजधानी सञ्चारिणी नगरीवाभवदभूत् ॥ २६ ॥

तेनातपत्रामलमण्डलेन प्रस्थापितः पूर्वनिवासभूमिम्।
बभौ बलौघः शशिनोदितेन वेलामुदन्वानिव नीयमानः ॥ २७ ॥

तेनेति। आतपत्रमेवामलं मण्डलं बिम्बं यस्य तेन तेन कुशेन पूर्वनिवासभू-मिमयोध्यां प्रति प्रस्थापितो बलौघः। आतपत्रवदमलमण्डलेनोदितेन शशिना वेलां नीयमानः प्राप्यमाणः। उदकमस्यास्तीत्युदन्वान् उदधिरिव बभौ। "उदन्वानुदधौ च" इति निपातनात्साधुः ॥ २७ ॥

तस्य प्रयातस्य वरूथिनीनां पीडामपर्याप्तवतीव सोढुम्।
वसुन्धरा विष्णुपदं द्वितीयमध्यारुरोहेव रजश्छलेन ॥ २८ ॥

तस्येति। प्रयातस्य प्रस्थितस्य तस्य कुशस्य वरूथिनीनां सेनानां कर्त्रीणाम्। "कर्तृकर्मणोः कृति" इति कर्तरि षष्ठी। पीडां सोढुमपर्याप्तवतीवासमर्थेव वसुन्धरा रजश्छलेन द्वितीयं विष्णुपदमाकाशमध्यारुरोहेव। उत्प्रेक्षा ॥ २८ ॥

उद्यच्छमाना गमनाय पश्चात्पुरो निवेशे पथि च व्रजन्ती।
सा यत्र सेना ददृशे नृपस्य तत्रैव सामग्र्यमतिं चकार ॥ २९ ॥

उद्यच्छमानेति। पश्चात्प्रयाणसमये गमनाय प्रयाणाय तथा पुरोऽपि निवेशे शिबिरे निवेष्टुं सेना। उद्यच्छमानोद्योगं कुर्वती। "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यस्य सकर्मकविषयत्वादात्मनेपदम्। पथि च व्रजन्ती नृपस्य कुशस्य सा सेना यत्र पश्चात्पुरो मध्ये वा ददृशे तत्रैव सामग्र्यमतिं इयत्ताबुद्धिं चकार, अपरिमिता तस्य सेनेत्यर्थः ॥ २९ ॥

तस्य द्विपानां मदवारिसेकात्खुराभिघाताच्च तुरङ्गमाणाम्।
रेणुः प्रपेदे पथि पङ्कभावं पङ्कोऽपि रेणुत्वमियाय नेतुः ॥ ३० ॥

तस्येति । नेतुस्तस्य कुशस्य द्विपानां मदवारिभिः सेकात्तुरङ्गमाणां खुराभि-घाताच्च यथाक्रमं पथि रेणू रजः पङ्कभावं पङ्कतां प्रपेदे पङ्कोऽपि रेणुत्वमियाय तस्य तावदश्वोत्सर्पः ॥ ३० ॥

मार्गैषिणी सा कटकान्तरेषु वैन्ध्येषु सेना बहुधा विभिन्ना ।
चकार रेवेव महाविरावा बद्धप्रतिश्रुन्ति गुहामुखानि ॥ ३१ ॥

मार्गैषिणीति । वैन्ध्येषु विन्ध्यसम्बन्धिषु कटकान्तरेषु नितम्बावकाशेषु । "कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः । मार्गैषिणी मार्गान्वेषिणी । अत एव बहुधा विभिन्ना । महाविरावा दीर्घघोषा सा सेना । रेवेव नर्मदेव । "रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका" इत्यमरः । गुहामुखानि बद्धप्रतिश्रुन्ति प्रतिध्वानवन्ति चकार ॥ ३१ ॥

स धातुभेदारुणयाननेमिः प्रभुः प्रयाणध्वनिमिश्रतूर्यः ।
व्यलङ्घयद्विन्ध्यमुपायनानि पश्यन्पुलिन्दैरुपपादितानि ॥ ३२ ॥

स इति । धातूनां गैरिकादीनां भेदैश्चूर्णैरारुणा याननेमयो रथचक्रधारा यस्य । प्रयाणे ये ध्वनयः स्वे स्वे शब्दाः तैर्मिश्राणि तूर्याणि यस्यैवंविधः स प्रभुः कुशः । पुलिन्दैः किरातैरुपपादितानि समर्पितान्युपायनानि पश्यन् । विन्ध्यं व्यलङ्घयत् ॥ ३२ ॥

तीर्थे तदीये गजसेतुबन्धात्प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।
अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः ॥ ३३ ॥

तीर्थ इति । तदीये विन्ध्ये तीर्थेऽवतारे गजा एव सेतुस्तस्य बन्धात्प्रतीपगां पश्चिमवाहिनीं गङ्गामुत्तरतोऽस्य कुशस्य नभोलङ्घनेन लोलपक्षा हंसा अयत्नेन बालव्यजनीबभूवुश्चामराण्यभूवन् । अभूततद्भावे च्विः ॥ ३३ ॥

स पूर्वजानां कपिलेन रोषाद्भस्मावशेषीकृतविग्रहाणाम् ।
सुरालयप्राप्तिनिमित्तमम्भस्त्रैस्रोतसं नौलुलितं ववन्दे ॥ ३४ ॥

स इति । स कुशः कपिलेन मुनिना रोषाद्भस्मावशेषीकृता विग्रहा देहा येषां तेषां पूर्वजानां सगराणां सुरालयस्य स्वर्गस्य प्राप्तौ निमित्तं नौभिर्लुलितं क्षुभितम् । त्रिस्रोतस इदं त्रैस्रोतसं गाङ्गमम्भो ववन्दे ॥ ३४ ॥

इत्यध्वनः कैश्चिदहोभिरन्ते कूलं समासाद्य कुशः सरय्वाः ।
वेदिप्रतिष्ठान्वितताध्वराणां यूपानपश्यच्छतशो रघूणाम् ॥ ३५ ॥

इतीति । इति कैश्चिदहोभिरध्वनोऽन्तेऽवसाने कुशः सरय्वाः कूलं समासाद्य

विततामरण्यं विस्तृतमकरोद् रघूणाम् । येषां प्रतिष्ठास्पदं येषां तासाम् । पूर्णम्कण्ठोऽपस्मरत् ॥ १५ ॥

आधूय शाखाः कुसुमद्रुमाणां स्पृष्ट्वा च शीताम्सरयूतरङ्गान् ।
तं क्लान्तसैन्यं कुलराजधान्याः प्रत्युज्जगामोपवनान्तवायुः ॥ १६ ॥

आधूयेति । कुलराजधान्या उपवनान्तवायुः कुसुमद्रुमाणां शाखा आधूय कम्पयित्वा सुरभिर्मन्दश्चेत्यर्थः । शीताम्सरयूतरङ्गांश्च स्पृष्ट्वा । अनेन शैत्योक्तिः । क्लान्तसैन्यं तं कुशं प्रत्युज्जगाम ॥ १६ ॥

अथोपशल्ये रिपुमग्नशल्यस्तस्याः पुरः पौरसखः स राजा ।
कुलध्वजस्तानि चलध्वजानि निवेशयामास बली बलानि ॥ १७ ॥

अथेति । अथ रिपुषु मग्नं शल्यं शङ्कुः शरो वा यस्य सः । शल्यं शङ्कौ शरे वंशे इति विश्वः । पौराणां सखा पौरसखः । राजाहःसखिभ्यष्टच् इत्यनेन टच् प्रत्ययः । कुलस्य ध्वजश्चिह्नभूतो बली स राजा चलाश्चलन्तो वा ध्वजा येषां तानि तानि बलानि सैन्यानि तस्याः पुरः पुर्या उपशल्ये ग्रामान्ते । ग्रामान्त उपशल्यं स्यात् इत्यमरः । निवेशयामास ॥ १७ ॥

तां शिल्पिसङ्घाः प्रभुणा नियुक्तास्तथागतां सम्भृतसाधनत्वात् ।
पुरं नवीचक्रुरपां विसर्गान्मेघा निदाघग्लपितामिवोर्वीम् ॥ १८ ॥

तामिति । प्रभुणा नियुक्ताः शिल्पिनां तक्षादीनां सङ्घाः सम्भृतसाधनत्वा त्सिद्धोपकरणत्वात् तथागतां पूर्वोक्तामित्यर्थः । पुरमयोध्याम् । मेघा अपां विसर्गान्निदाघग्लपितां ग्रीष्मतप्तामुर्वीमिव । नवीचक्रुः परिपूर्णां चक्रुः ॥ १८ ॥

ततः सपर्यां सपशूपहारां पुरः परार्ध्यप्रतिमागृहायाः ।
उपोषितैर्वास्तुविधानविद्भिर्निर्वर्तयामास रघुप्रवीरः ॥ १९ ॥

तत इति । ततो रघुप्रवीरः कुशः प्रतिमा देवताप्रतिकृतयः अर्चा इत्यर्थः । परार्ध्यप्रतिमागृहायाः प्रशस्तदेवतायतनायाः पुरः उपोषितैर्वास्तुविधानविद्भिः प्रयोज्यैः पशूपहारैः सहितां सपशूपहारां सपर्यां पूजां निर्वर्तयामास कारयामास । अत्र ण्यन्तात् ण्यन्तात्पुनरित्यनुसन्धेयम् । अन्यथा स्वेतरकर्मकस्य करोतेरर्थत्वे कारक-स्वभावाभावप्रसङ्गात् । सति तस्य स्वेतरकर्तृकर्त्री प्रयोज्यत्वेन तद्विवेचनप्रयोगस्यान्तर-स्यापेक्षितत्वात् ॥ १९ ॥

तस्याः स राजोपपदं निशान्तं कामीव कान्ताहृदयं प्रविश्य ।
यथार्हमन्यैरनुजीविलोकं सम्भावयामास यथाप्रधानम् ॥ ४० ॥

तस्या इति । स कुशस्तस्याः पुरः सम्बन्धि राजोपपदं राजशब्दपूर्वं निशान्तं राजभवनमित्यर्थः । निशान्तं भवनोषसोः इति विश्वः । कामी कान्ता हृदयमिव प्रविश्य । अन्यैर्निशान्तैरनुजीविलोकमनुजीविजनमासनादिकं यथाप्रधानं मान्यानुसारेण । यथार्हं यथोचितं तत्तदुचितपदैरित्यर्थः । सम्भावयामास सम्भावितवान् ॥ ४० ॥

सा मन्दुरासंश्रयिभिस्तुरङ्गैः शालाविधिस्तम्भगतैश्च नागैः ।
पूराबभासे विपणिस्थपण्या सर्वाङ्गनद्धाभरणेव नारी ॥ ४१ ॥

सेति । विपणिस्थानि पण्यानि क्रयविक्रयार्हवस्तूनि यस्याः सा । 'विपणिः पण्यवीथिका' इत्यमरः । सा पूरयोध्या मन्दुरासंश्रयिभिरश्वशालासंश्रयवद्भिः । 'वाजिशाला तु मन्दुरा' इत्यमरः । 'विप्रि—' इत्यादिनेनिप्रत्ययः । तुरङ्गैरश्वैः । शालासु गृहेषु ये विधिना स्थापिताः स्तम्भास्तान्गतैः प्राप्तैर्नागैश्च । सर्वाङ्गेषु नद्धान्याभरणानि यस्याः सा नारीव । आबभासे ॥ ४१ ॥

वसन्स तस्यां वसतौ रघूणां पुराणशोभामधिरोपितायाम् ।
न मैथिलेयः स्पृहयाम्बभूव भर्त्रे दिवो नाप्यलकेश्वराय ॥ ४२ ॥

वसन्निति । स मैथिलेयः कुशः पुराणशोभां पूर्वशोभामधिरोपितायां तस्यां रघूणां वसतावावासभूतायां वसन् । दिवो भर्त्रे देवेन्द्राय तथाऽलकेश्वराय कुबेरायापि न स्पृहयाम्बभूव तावपि न गणयामासेत्यर्थः । "स्पृहेरीप्सितः" इति सम्प्रदानत्वाच्चतुर्थी । एतेनायोध्याया अन्यनगरातिशायित्वं गम्यते ॥ ४२ ॥

कुशस्य कुमुद्वतीसङ्गमं प्रस्तौति—

अथास्य रत्नग्रथितोत्तरीयमेकान्तपाण्डुस्तनलम्बिहारम् ।
निःश्वासहार्यांशुकमाजगाम घर्मः प्रियावेषमिवोपदेष्टुम् ॥ ४३ ॥

अथास्येति । अथास्य कुशस्य । रत्नैर्मुक्तामणिभिर्ग्रथितान्युत्तरीयाणि यस्मिंस्तम् । एकान्तमत्यन्तं पाण्ड्वोः स्तनयोर्लम्बिनो हारा यस्मिंस्तम् । निःश्वासहार्याण्यतिसूक्ष्माण्यंशुकानि यत्र तम् । एवं शीतलक्षणं प्रियाया वेषं वेषग्रहमुपदेष्टुमिव घर्मो ग्रीष्म आजगाम ॥ ४३ ॥

अगस्त्यचिह्नादयनात्समीपं दिगुत्तरा भास्वति संनिवृत्ते ।
आनन्दशीतामिव बाष्पवृष्टिं हिमस्रुतिं हैमवतीं ससर्ज ॥ ४४ ॥

अगस्त्येति । अगस्त्यः चिह्नं यस्य तस्मादयनान्मार्गाद्दक्षिणमार्गात् भास्वति समीपं संनिवृत्ते सति । उत्तरा दिक् । आनन्दशीतां बाष्पवृष्टिमिव । हैमवतीं हिमवत्सम्बन्धिनीं हिमस्रुतिं हिमनिष्यन्दं ससर्ज । अत्र प्रोषितप्रियासमागमसमाधिर्गम्यते ॥ ४४ ॥

प्रवृद्धतापो दिवसोऽतिमात्रमत्यर्थमेव क्षणदा च तन्वी ।
उभौ विरोधक्रियया विभिन्नौ जायापती सानुशयाविवास्ताम् ॥ ४५ ॥

प्रवृद्ध इति । अतिमात्रं प्रवृद्धतापो दिवसः । अत्यर्थमेवात्यन्तं तन्वी कृशा क्षणदा च इत्येतावुभौ । विरोधक्रियया प्रणयकलहादिना विरोधाचरणेन विभिन्नौ सानुशयौ सानुतापौ जायापती दम्पती इव आस्ताम् । तयोरपि तापकार्श्यसम्भवा-त्तत्सदृशावभूतामित्यर्थः ॥ ४५ ॥

दिने दिने शैवलवन्त्यधस्तात्सोपानपर्वाणि विमुञ्चदम्भः ।
उद्दण्डपद्मं गृहदीर्घिकाणां नारीनितम्बद्वयसं बभूव ॥ ४६ ॥

दिने दिन इति । दिने दिने प्रतिदिनं शैवलवन्त्यधस्तात्स्थानि सोपानानां पर्वाणि भङ्गपदानि विमुञ्चत् । अत एवोद्दण्डपद्मं गृहदीर्घिकाणामम्भः । नारीनितम्बः प्रमाणमस्य नारीनितम्बद्वयसं बभूव विहारयोग्यमभूदित्यर्थः । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति द्वयसच्प्रत्ययः ॥ ४६ ॥

वनेषु सायन्तनमल्लिकानां विजृम्भणोद्गन्धिषु कुड्मलेषु ।
प्रत्येकनिक्षिप्तपदः सशब्दं संख्यामिवैषां भ्रमरश्चकार ॥ ४७ ॥

वनेष्विति । वनेषु विजृम्भणेन विकासेनोद्गन्धिषूत्कटसौरभेषु । "गन्धस्य—" इत्यादिना समासान्त इकारादेशः । सायन्तनमल्लिकानां कुड्मलेषु सशब्दं यथा तथा प्रत्येकमेकैकस्मिन्निक्षिप्तपदः मकरन्दलोभादित्यर्थः । भ्रमर एषां कुड्मलानां संख्यां गणनां चकारेव ॥ ४७ ॥

स्वेदानुविद्धार्द्रनखक्षताङ्के भूयिष्ठसंदष्टशिखं कपोले ।
च्युतं न कर्णादपि कामिनीनां शिरीषपुष्पं सहसा पपात ॥ ४८ ॥

स्वेदानुविद्धेति । स्वेदानुविद्धमार्द्रं नूतनं नखक्षतमङ्को यस्य तस्मिन्कामिनीनां कपोले भूयिष्ठमत्यर्थं संदष्टशिखं श्लिष्टकेसरम् । अत एव कर्णाच्च्युतमपि शिरीषपुष्पं सहसा न पपात ॥ ४८ ॥

यन्त्रप्रवाहैः शिशिरैः परीतान्रसेन धौतान्मलयोद्भवस्य ।
शिलाविशेषानधिशय्य निन्युर्धारागृहेष्वातपमृद्धिमन्तः ॥ ४९ ॥

यन्त्रप्रवाहैरिति । ऋद्धिमन्तो धनिनः धारागृहेषु यन्त्रधारागृहेषु शिशिरैर्यन्त्रप्रवाहैर्यन्त्रपयःप्रवाहैः परीतान्व्याप्तान्मलयोद्भवस्य रसेन चन्दनोदकेन धौतान्क्षालिताञ्छिलाविशेषानधिशय्याधिशय्य तेषु शयित्वाऽऽतपं निन्युरातपपरिहारं चक्रुः ॥ ४९ ॥

स्नानार्द्रमुक्तेष्वनुधूपवासं विन्यस्तसायन्तनमल्लिकेषु ।
कामो वसन्तात्ययमन्दवीर्यः केशेषु लेभे बलमङ्गनानाम् ॥ ५० ॥

स्नानार्द्रेति । वसन्तस्यात्ययः परिणामोऽत्ययेनातिक्रमेण मन्दवीर्योऽल्पवीर्यकः कामः स्नानार्द्राश्च ते मुक्ताश्च धूपसंस्कारार्थमिति सर्वं । तेषु अनुधूपवासं धूपवासानन्तरं विन्यस्ताः सायन्तनमल्लिका येषु तेषु । अङ्गनानां केशेषु बलं लेभे वैरशोधित इत्यर्थः ॥ ५० ॥

आपिञ्जरा बद्धरजःकणत्वान्मञ्जर्युदारा शुशुभेऽर्जुनस्य ।
दग्ध्वाऽपि देहं गिरिशेन रोषात्खण्डीकृता ज्येव मनोभवस्य ॥५१॥

आपिञ्जरेति । बद्धरजः कणत्वाद् व्याप्तरेणुकणत्वादापिञ्जरोदारा प्रशस्ताऽर्जु- नस्य ककुभवृक्षस्य । इन्द्रद्रुः ककुभोऽर्जुनः इत्यमरः । मञ्जरी देहं दग्ध्वाऽपि रोषाद्गिरिशेन गिरिरस्यास्य निवासत्वेन गिरिशस्तेन । लोमादित्वाच्छप्रत्ययः । गिरौ शेत इति विग्रहे तु । "गिरौ डश्छन्दसि" इत्यस्य छन्दसि विधानाल्लोके प्रयोगानुपपत्तिः स्यात् । तस्मात्पूर्वोक्तमेव विग्रहवाक्यं न्याय्यम् । खण्डीकृता मनोभवस्य ज्येव मौर्वीव शुशुभे ॥ ५१ ॥

मनोज्ञगन्धं सहकारभङ्गं पुराणशीधु नवपाटलं च ।
सम्बध्नता कामिजनेषु दोषाः सर्वे निदाघावधिना प्रमृष्टाः ॥५२॥

मनोज्ञेति । मनोज्ञगन्धमिति सर्वत्र सम्बध्यते । सहकारभङ्गं चूतपल्लवम् । पुराणं चिरस्थितं शीधुः पक्वेक्षुरसकृतः सुराविशेषस्तम् । "शीङो धुक्" इत्युणादिसूत्रेण शीङ् स्वप्ने इत्यस्माद्धातोर्धुक्प्रत्ययः । 'पक्वैरिक्षुरसैः सिद्धः शीधुः पक्वरसः स्मृतः' इति यादवः । नवं पाटलायाः पुष्पं पाटलं च सम्बध्नता घटयता निदाघावधिना ग्रीष्मकालेन । अवधिस्त्ववधाने स्यात्सीम्नि काले बिलेऽपि च इति विश्वः । कामिजनेषु विषये सर्वे दोषास्तापादयः प्रमृष्टाः परिहृताः ॥ ५२ ॥

जनस्य तस्मिन्समये विगाढे बभूवतुर्द्वौ सविशेषकान्तौ ।
तापापनोदक्षमपादसेवौ स चोदयस्थौ नृपतिः शशी च ॥ ५३ ॥

जनस्येति । तस्मिन्समये ग्रीष्मे विगाढे कठिने सति जनस्य द्वौ सविशेषं सातिशयं यथा तथा कान्तौ बभूवतुः । कौ द्वौ । तापापनोदे क्षमा योग्या पाद-सेव्यन्ताः पादानां रश्मीनां च सेवा ययोस्तावुदयस्थावभ्युदयस्थौ स च नृपतिः शशी च ॥ ५३ ॥

अथोर्मिलोलोन्मदराजहंसे रोधोलतापुष्पवहे सरय्वाः ।
विहर्तुमिच्छा वनितासखस्य तस्याम्भसि ग्रीष्मसुखे बभूव ॥ ५४ ॥

अथेति । अथोर्मिषु लोलाः सतृष्णा उन्मदा राजहंसा यस्मिंस्तस्मिन् । "लोलश्चलसतृष्णयोः" इत्यमरः । रोधोलतापुष्पाणां वहे प्रापके । पचाद्यच् । ग्रीष्मेषु सुखे सुखकरे सरय्वा अम्भसि पयसि तस्य कुशस्य वनितासखस्य वनिताभिः सहितस्य विहर्तुमिच्छा बभूव ॥ ५४ ॥

स तीरभूमौ विहितोपकार्यामानायिभिस्तामपकृष्टनक्राम् ।
विगाहितुं श्रीमहिमानुरूपं प्रचक्रमे चक्रधरप्रभावः ॥ ५५ ॥

स इति । चक्रधरप्रभावो विष्णुतेजाः स कुशस्तीरभूमौ विहितोपकार्या यस्यास्ताम् । आनायो जालमेषामस्तीत्यानायिनो धीवराः । "आनायः पुंसि जालं स्यात्" इत्यमरः । "जालमानायः" इति निपातः । तैरपकृष्टनक्रामपनीतग्राहां तां सरयूं श्रीमहिम्नोः सम्पत्प्रभावयोरनुरूपं योग्यं यथा तथा विगाहितुं प्रचक्रमे । अत्र कामन्दकः— "परितापिषु वासरेषु पयःस्वटकैराप्तसमाप्तधन्वकम् । सुविशोधितनक्रमीनजालं व्यवगाहेत जलं सुखस्पृहः ॥" इति ॥ ५५ ॥

सा तीरसोपानपथावतारादन्योन्यकेयूरविघट्टिनीभिः ।
सनूपुरक्षोभपदाभिरासीदुद्विग्नहंसा सरिदङ्गनाभिः ॥ ५६ ॥

सेति । सा सरित्सरयूस्तीरसोपानपथेनावतारादवतरणादन्योन्यं केयूरविघट्टिनीभिः सनूपुरक्षोभाणि सनूपुरस्वनानि पदानि यासां ताभिरङ्गनाभिरुद्विग्नहंसा भीतहंसाऽऽसीत् ॥ ५६ ॥

परस्पराभ्युक्षणतत्पराणां तासां नृपो मज्जनरागदर्शी ।
नौसंश्रयः पार्श्वगतां किरातीमुपात्तबालव्यजनां बभाषे ॥ ५७ ॥

परस्परेति । नौसंश्रयः परस्परमभ्युक्षणे सेचने तत्पराणामासक्तानां तासां

कीर्णा मज्जने रामोऽभिलापस्तद्दर्शी नृपः पार्श्वमतामुपात्तामचामरां प्रहीतचामरां किराती चामरग्राहिणी समीपे । 'किरातस्तु कुमान्तरे । स्त्रियां चामरधारिण्यां मत्स्यमांसान्तरे द्वयोः ॥' इति केशवः ॥ ५७ ॥

पश्यावरोधैः शतशो मदीयैर्विगाह्यमानो गलिताङ्गरागैः ।
सन्ध्योदयः साभ्र इवैष वर्णं पुष्यत्यनेकं सरयूप्रवाहः ॥ ५८ ॥

पश्यति । गलिताङ्गरागैर्मदीयैः शतशोऽवरोधैर्विगाह्यमानो विलोड्यमान एष सरयूप्रवाहः । साभ्रः समेघः सन्ध्योदयः सन्ध्याऽऽविर्भाव इव । अनेकं नानाविधं वर्णं रक्तपीतादिकं पुष्यति पश्य । वाक्यार्थः कर्म ॥ ५८ ॥

विलुप्तमन्तःपुरसुन्दरीणां यदञ्जनं नौलुलिताभिरद्भिः ।
तद्बध्नतीभिर्मदरागशोभां विलोचनेषु प्रतिमुक्तमासाम् ॥ ५९ ॥

विलुप्तमिति । नौलुलिताभिर्नौक्षुभिताभिरद्भिरन्तःपुरसुन्दरीणां यदञ्जनं कज्जलं विलुप्तं हृतं तदञ्जनं विलोचनेषु नयनेषु मदेन या रागशोभा तां बध्नतीभिर्बध्नन्तीभिरद्भिरासां प्रतिमुक्तं प्रत्यर्पितम् । प्रतिनिधिदानमपि तत्समर्थधरित्वात्प्रत्यर्पणमेवेति भावः ॥ ५९ ॥

एता गुरुश्रोणिपयोधरत्वादात्मानमुद्वोढुमशक्नुवत्यः ।
गाढाङ्गदैर्बाहुभिरप्सु बालाः क्लेशोत्तरं रागवशात्प्लवन्ते ॥ ६० ॥

एता इति । गुरु दुर्वहं श्रोणिपयोधरं यस्यासौ गुरुश्रोणिपयोधरः तस्य भावस्तत्त्वम् इति विग्रहः । गुरुश्रोणिपयोधरत्वादात्मानं शरीरमुद्वोढुमशक्नुवत्य एता बालाः गाढाङ्गदैः श्लिष्टाङ्गदैर्बाहुभिः क्लेशोत्तरं दुःखप्रायं यथा तथा रागवशात्प्रेमविशेषपारतन्त्र्यात्प्लवन्ते तरन्ति ॥ ६० ॥

अमी शिरीषप्रसवावतंसाः प्रभ्रंशिनो वारिविहारिणीनाम् ।
पारिप्लवाः स्रोतसि निम्नगायाः शैवाललोलांश्छलयन्ति मीनान् ॥ ६१ ॥

अमी इति । वारिविहारिणीनामासां प्रभ्रंशिनो भ्रष्टा निम्नगायाः स्रोतसि पारिप्लवाश्चञ्चलाः । 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे' इत्यमरः । अमी शिरीषप्रसवा एवावतंसाः कर्णपूराः शैवाललोलाञ्छैवालप्रियान् । 'जलनीली तु शैवालम्' इत्यमरः । मीनांश्छलयन्ति प्रतारयन्ति । शैवालविलासलिप्सुमीनेषु शैवालभ्रममुन्मेषयन्तीत्यर्थः ॥ ६१ ॥

आसां जलास्फालनतत्पराणां मुक्ताफलस्पर्धिषु शीकरेषु ।
पयोधरोत्सर्पिषु शीर्यमाणः संलक्ष्यते न च्छिदुरोऽपि हारः ॥ ६२ ॥

आसामिति । जलास्फालने तत्पराणामासक्तानामासां स्त्रीणां मुक्ताफलस्पर्धिषु मौक्तिकानुकारिषु पयोधरेषु स्तनेषूत्सर्पिषूपसर्पत्सु तेषु शीकरेषु शीकराणां मध्ये शीर्यमाणो गलन्हारोऽस्य एव छिदुरः स्वयं छिन्नोऽपि न संलक्ष्यते । 'विदिभिदिच्छिदेः कुरच्' इति कुरच्प्रत्ययः । शीकरसंपर्कात्तद्भिन्न इति न ज्ञायत इति भावः ॥ ६२ ॥

आवर्तशोभा नतनाभिकान्तेर्भङ्गो भ्रुवां द्वन्द्वचराः स्तनानाम् ।
जातानि रूपावयवोपमानान्यदूरवर्तीनि विलासिनीनाम् ॥ ६३ ॥

आवर्तशोभेति । विलासिनीनां विलसनशीलानां स्त्रीणाम् । "वौ कषलसकत्थस्रम्भः" इति घिनुण्प्रत्ययः । रूपावयवानामुपमेयानां यान्युपमानानि प्रसिद्धानि तान्यदूरवर्तीन्यन्तिकगतानि जातानि । तत्र किमुपमानमित्याह—नतनाभिकान्तेर्निम्ननाभिशोभाया आवर्तशोभा । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । भ्रुवां भङ्गस्तरङ्गः । स्तनानां द्वन्द्वचराश्चक्रवाकाः । उपमानमिति सर्वत्र सम्बध्यते ॥ ६३ ॥

तीरस्थलीबर्हिभिरुत्कलापैः प्रस्निग्धकेकैरभिनन्द्यमानम् ।
श्रोत्रेषु सम्मूर्छति रक्तमासां गीतानुगं वारिमृदङ्गवाद्यम् ॥ ६४ ॥

तीरस्थलीति । उत्कलापैरुद्बर्हैः प्रस्निग्धा मधुराः केका येषां तैस्तीरस्थलीषु बर्हिभिर्मयूरैरभिनन्द्यमानं रक्तं श्राव्यं गीतानुगं गीतानुसार्यासां स्त्रीणां सम्बन्धि वारिणि मृदङ्ग इव तस्य वाद्यं वादनानि श्रोत्रेषु सम्मूर्छति व्याप्नोति ॥ ६४ ॥

सन्दष्टवस्त्रेष्वबलानितम्बेष्विन्दुप्रकाशान्तरितोडुतुल्याः ।
अमी जलापूरितसूत्रमार्गा मौनं भजन्ते रशनाकलापाः ॥ ६५ ॥

सन्दष्टेति । सन्दष्टवस्त्रेषु वस्त्रैः संश्लिष्टेष्वबलानितम्बेष्विन्दुप्रकाशेन ज्योत्स्नयाऽन्तरितान्याच्छादितानि यान्युडूनि नक्षत्राणि तत्तुल्याः । शुभ्रत्वान्निष्प्रभत्वाच्चेति भावः । अमी जलापूरितसूत्रमार्गाः, निःशब्दा इत्यर्थः । रशना एव कलापा भूषाः । 'कलापो भूषणे बर्हे' इत्यमरः । मौनं निःशब्दतामित्यर्थः । भजन्ते ॥ ६५ ॥

एताः करोत्पीडितवारिधारा दर्पात्सखीभिर्वदनेषु सिक्ताः ।
वक्रेतराग्रैरलकैस्तरुण्यश्चूर्णारुणान्वारिलवान्वमन्ति ॥ ६६ ॥

एता इति । दर्पात्सखीजनं प्रति करैरुत्पीडिता उत्क्षिप्ता वारिधारा याभि-स्ताः । स्वयमपि पुनस्ताभिः सखीभिर्वदनेषु सिक्ता एतास्तरुण्यो वक्रेतराग्रैरलकैश्च

न्यभेत्सीत् करपेषूर्भ कुङ्कुमादिभिरम्भसामारिभ्याकुलत्वभिन्नत्वमस्ति वर्धन्ति ॥६६॥

उद्वृत्तकेशश्च्युतपत्रलेखो विश्लेषिमुक्ताफलपत्रवेष्टः ।
मनोज्ञ एव प्रमदामुखानामम्भोविहाराकुलितोऽपि वेषः ॥ ६७ ॥

उद्वृत्तकेशेति । उद्वृत्ता उद्भ्रान्ताः केशा यस्मिन्सः । च्युतपत्रलेखः च्युत पत्ररचनम् । विश्लेषिणो विस्रंसिनो मुक्ताफलपत्रवेष्टा मुक्तामयताटङ्का यस्मिन्सः । एवमम्भोविहाराकुलितोऽपि प्रमदामुखानां वेषो नेपथ्यं मनोज्ञ एव । 'रम्याणां विकृतिरपि श्रियं तनोति' इति भावः ॥ ६७ ॥

स नौविमानादवतीर्य रेमे विलोलहारः सह ताभिरप्सु ।
स्कन्धावलग्नोद्धृतपद्मिनीकः करेणुभिर्वन्य इव द्विपेन्द्रः ॥ ६८ ॥

स इति । स कुशो नौर्विमानमिव नौविमानम् । उपमितसमासः । तस्माद् अवतीर्य विलोलहारः संस्ताभिः स्त्रीभिः सह करेणुभिः सह स्कन्धावलग्नादुद्धृतपद्मिनीकः उद्धृता नलिनी यस्य स तथोक्तः सन् । "नद्यृतश्च" इति कप्प्रत्ययः । वन्यो द्विपेन्द्र इव । अप्सु रेमे ॥ ६८ ॥

ततो नृपेणानुगताः स्त्रियस्ता भ्राजिष्णुना सातिशयं विरेजुः ।
प्रागेव मुक्ता नयनाभिरामाः प्राप्येन्द्रनीलं किमुतोन्मयूखम् ॥६९॥

तत इति । ततो भ्राजिष्णुना प्रकाशनशीलेन । 'भुवश्च' इति चकारादिष्णुच् । नृपेणानुगतास्ताः स्त्रियः सातिशयं यथा तथा विरेजुः । प्रायेण इन्द्रनीलस्तोमात्पूर्वमेव केवलं श्लोकार्थः । मुक्ता मणयो नयनाभिरामाः उन्मयूखमिन्द्रनीलं प्राप्य किमुत अभिरामा इति किमु वक्तव्यमित्यर्थः ॥ ६९ ॥

वर्णोदकैः काञ्चनशृङ्गमुक्तैस्तमायताक्ष्यः प्रणयादसिञ्चन् ।
तथागतः सोऽतितरां बभासे सधातुनिष्यन्द इवाद्रिराजः ॥ ७० ॥

वर्णोदकैरिति । तं कुशमायताक्ष्यः काञ्चनस्य शृङ्गैर्मुक्तानि तैर्वर्णोदकैः कुङ्कुमादिवर्णद्रव्यमिश्रितैः प्रणयात्स्नेहादसिञ्चन् । तथागतस्तथाविधः वर्णोदक सिक्त इत्यर्थः । स कुशः सधातुनिष्यन्दो गैरिकादिद्रवयुक्तोऽद्रिराज इव । अतितरां बभासे ॥ ७० ॥

तेनावरोधप्रमदासखेन विगाहमानेन सरिद्वरां ताम् ।
आकाशगङ्गारतिरप्सरोभिर्वृतो मरुत्वाननुयातलीलः ॥ ७१ ॥

तेनेति । अवरोधप्रमदासखेनान्तःपुरसुन्दरीसहचरेण तां सरिद्वरां सरयूं

मेव चाद्रीसमत्वमविवेकः। 'द्वितीया श्रित—' इत्यत्र गम्यादीनामुपसंख्यानाद् द्वितीयेति योगविभागाद्वा समासः। गाम्भीर्यमहिमाभिव इत्यर्थः। कुमुदः। अयो लोकस्ते लोकपम्। चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः। नैमित्तिकमायो रामः प्रभवो जन्मभूमिर्यस्य तम्। अत एव प्रभावाद् हितमकृत्वा निवारकं मूर्धाभिषिक्तं राजानं कुमुदं मानोद्धतेनापि मूर्ध्नाऽभिगम्य प्रणम्य ययाचे ॥ ८१ ॥

अवैमि कार्यान्तरमानुषस्य विष्णोः सुताख्यामपरां तनुं त्वाम् ।
सोऽहं कथं नाम तवाचरेयमाराधनीयस्य धृतेर्विघातम् ॥ ८२ ॥

अवैमीति। त्वाम्। भोदमानन्तरस्तत्कारम इतिपरमर्थान्तरः कार्यार्थः। रघावासीभाम्यतावर्ण्यरभ्यान्तर्येषु चान्तरम्' इति शाश्वतः। स चासौ मानुषश्चेति तस्य विष्णो रामस्य सुताख्यां पुत्रसंज्ञामपरां तनुं मूर्तिमवैमि। 'आत्मा वै पुत्रनामासि' इति श्रुतेरित्यर्थः। स चाहमाराधनीयस्योपास्यस्य तव धृतेः प्रीतेः। 'धृ प्रीतौ' इति धातोः स्त्रियां क्तिन्। विघातं कथं नामाचरेयम्, अयुक्तमित्यर्थः ॥ ८२ ॥

कराभिघातोत्थितकन्दुकेयमालोक्य बालातिकुतूहलेन ।
ह्रदात्पतज्ज्योतिरिवान्तरिक्षादादत्त जैत्राभरणं त्वदीयम् ॥ ८३ ॥

कराभिघातेति। कराभिघातेनोत्थित ऊर्ध्वं गतः कन्दुको यस्याः सा। कन्दुकार्थमूर्ध्वं पश्यन्तीत्यर्थः। इयं बालातिकुतूहलेनान्तरिक्षात्पतदुल्कान्तरिक्षाज्ज्योतिर्नक्षत्रमिव। 'ज्योतिर्भद्योतदृष्टिषु' इत्यमरः। ह्रदात्पतत्त्वदीयं जैत्रमाभरणमादत्त ॥ ८३ ॥

तदेतदाजानुविलम्बिना ते ज्याघातरेखाकिणलाञ्छनेन ।
भुजेन रक्षापरिघेण भूमेरुपैतु योगं पुनरंसलेन ॥ ८४ ॥

तदेतदिति। तदेतदाभरणमाजानुविलम्बिना दीर्घेण। ज्याघातेन या रेखा रेखाकाराऽऽमन्त्रयस्तासां किणं चिह्न तदेव लाञ्छनं यस्य तेन। भूमे रक्षायां परिघेण रक्षाऽयमन। 'परिघो योगभेदास्त्रमुद्गरेऽर्गलघातयोः' इत्यमरः। अंसलेन बलवता ते भुजेन पुनर्योगं सङ्गतिमुपैतु। एतेनास्य धर्मसाम्यमपराधपरिहारार्थत्वमवगम्यते ॥

इमां स्वसारं च यवीयसीं मे कुमुद्वतीं नार्हसि नानुमन्तुम् ।
आत्मापराधं नुदतीं चिराय शुश्रूषया पार्थिव पादयोस्ते ॥ ८५ ॥

इमामिति। किंच। हे पार्थिव! ते तव पादयोश्चिराय शुश्रूषया परिचर्यया।

तत्र तीर्थसलिलेन दीर्घिकास्तल्पमन्तरितभूमिभिः कुशैः ।
सौधवासमुटजेन विस्मृतः संचिकाय फलनिःस्पृहस्तपः ॥ २ ॥

तत्रेति । तत्र नैमिषे तीर्थसलिलेन दीर्घिका विहारवापीरन्तरितभूमिभिः कुशैस्तल्पं शय्यामुटजेन पर्णशालया सौधवासं अट्टमन्दिरं विस्मृतो विस्मृतवान्सः । कर्तरि क्तः । फले स्वर्गादिफले निःस्पृहस्तपः संचिकाय संचितवान् ॥ २ ॥

लब्धपालनविधौ न तत्सुतः खेदमाप गुरुणा हि मेदिनी ।
भोक्तुमेव भुजनिर्जितद्विषा न प्रसाधयितुमस्य कल्पिता ॥ ३ ॥

लब्धपालनविधाविति । तत्सुतः सुदर्शनपुत्रोऽग्निवर्णो लब्धस्य राज्यस्य पालनकर्मणि खेदं नाप अक्लेशेनानायासेनारक्षदित्यर्थः । कुतः । हि यस्माद् भुजनिर्जितद्विषा गुरुणा पित्रा मेदिनी अस्याग्निवर्णस्य भोक्तुमेव कल्पिता । प्रसाधयितुं न । प्रसाधनं कण्टकशोधनम् । अकण्टकीकृतिर्मन्यते । तथा च यथाऽन्यकृत्या सुमतिः वैभवमुपभुज्यते तद्वदिति भावः ॥ ३ ॥

सोऽधिकारमभिकः कुलोचितं काश्चन स्वयमवर्तयत्समाः ।
संनिवेश्य सचिवेष्वतःपरं स्त्रीविधेयनवयौवनोऽभवत् ॥ ४ ॥

स इति । अभिकः कामुकः । 'अनुकाभिकाभीकः कमिता' इति निपातः । 'कम्रः कामयिताभीकः कमनः कामनोऽभिकः' इत्यमरः । सोऽग्निवर्णः कुलोचितमधिकारं प्रजापालनं काश्चन समाः कतिचिद्वत्सरान्स्वयमवर्तयदकरोत् । अतः परं सचिवेषु संनिवेश्य निधाय स्त्रीविधेयं स्त्र्यधीनं नवं यौवनं यस्य सोऽभवत् स्त्र्यासक्तोऽभूदित्यर्थः ॥ ४ ॥

कामिनीसहचरस्य कामिनस्तस्य वेश्मसु मृदङ्गनादिषु ।
ऋद्धिमन्तमधिकर्द्धिरुत्तरः पूर्वमुत्सवमपोहदुत्सवः ॥ ५ ॥

कामिनीसहचरस्येति । कामिनीसहचरस्य कामिनस्तस्य मृदङ्गनादिषु मृदङ्गनादवत्सु वेश्मसु अधिकर्द्धिः पूर्वस्मादधिकसम्भार उत्तर उत्सवः । ऋद्धिमन्तं सम्पन्नसम्भारं पूर्वमुत्सवमपोहदपानुदत् । उत्तरमुत्तरमधिका तस्योत्सवपरम्परा इति भावः ॥ ५ ॥

इन्द्रियार्थपरिशून्यमक्षमः सोढुमेकमपि स क्षणान्तरम् ।
अन्तरेव विहरन्दिवानिशं न व्यपैक्षत समुत्सुकाः प्रजाः ॥ ६ ॥

इन्द्रियार्थपरिशून्यमिति । इन्द्रियार्थपरिशून्यं शब्दादिविषयरहितमेकमपि

अभ्यन्तरं तस्यैव योऽनुमतस्तोऽसाधारणः सोऽग्निवर्णो दिवा च निशा च निशान्तसमन्तरेण विहरन्नसुलभ दर्शनाकाङ्क्षिणीः प्रजा न व्यपेक्षत नापेक्षितवान् ॥ ६ ॥

गौरवाद्यदपि जातु मन्त्रिणां दर्शनं प्रकृतिकाङ्क्षितं ददौ ।
तद्गवाक्षविवरावलम्बिना केवलेन चरणेन कल्पितम् ॥ ७ ॥

गौरवादिति । जातु कदाचिन्मन्त्रिणां गौरवाद् गुरुत्वहेतोः मन्त्रिवचनानुरोधादित्यर्थः । प्रकृतिभिः प्रजाभिः काङ्क्षितं यदपि दर्शनं ददौ तदपि गवाक्षविवरावलम्बिना केवलेन चरणेन चरणमात्रेण कल्पितं सम्पादितम् । न तु मुखावलोकनप्रदानेनेत्यर्थः ॥ ७ ॥

तं कृतप्रणतयोऽनुजीविनः कोमलात्मनखरागरूषितम् ।
भेजिरे नवदिवाकरातपस्पृष्टपङ्कजतुलाऽधिरोहणम् ॥ ८ ॥

तमिति । कोमलेन मृदुनात्मनखानां रागेणारुण्येन रूषितं छुरितम् । अत एव नवदिवाकरातपेन स्पृष्टं व्याप्तं यत्पङ्कजं तस्य तुलां साम्यतामधिरोहति प्राप्नोतीति तुलाऽधिरोहणम् । तं चरणमनुजीविनः कृतप्रणतयः कृतनमस्काराः सन्तो भेजिरे सिषेविरे ॥ ८ ॥

यौवनोन्नतविलासिनीस्तनक्षोभलोलकमलाश्च दीर्घिकाः ।
गूढमोहनगृहास्तदम्बुभिः स व्यगाहत विगाढमन्मथः ॥ ९ ॥

यौवनेति । विगाढमन्मथः प्रौढमदनः सोऽग्निवर्णो यौवनेन हेतुनोन्नतानां विलासिनीस्तनानां क्षोभेणाघातेन लोलानि चञ्चलानि कमलानि यासां ताः । तदम्बुभिस्तासां दीर्घिकाणामम्बुभिर्गूढान्यन्तरितानि मोहनगृहाणि सुरतभवनानि यासु ताश्च दीर्घिका व्यगाहत व्यलोडयत् । ताभिः सह दीर्घिकासु विजहारेत्यर्थः ॥ ९ ॥

तत्र सेकहृतलोचनाञ्जनैर्धौतरागपरिपाटलाधरैः ।
अङ्गनास्तमधिकं व्यलोभयन्नर्पितप्रकृतकान्तिभिर्मुखैः ॥ १० ॥

तत्रेति । तत्र दीर्घिकास्वङ्गना सेकेन हृतं लोचनाञ्जनं नेत्रकज्जलं येषां तैः । रज्यतेऽनेनेति रागो रागद्रव्यं लाक्षादि । धौतस्य परिपाटलोऽरुणः । गुणे शुक्लादयः पुंसि इत्यमरः । धौतो रागपरिपाटलश्चाधरो येषां तैस्तथोक्ता अधरा येषां तै निरञ्जनत्वादभिरामैरित्यर्थः । अत एवार्पितप्रकृतकान्तिभिः अभिव्यञ्जितस्वाभाविकशोभैरित्यर्थः । एवम्भूतैर्मुखैस्तमग्निवर्णमधिकं व्यलोभयन् प्रलोभितवत्यः ॥ १० ॥

चार्विति। किञ्च। चारु सुन्दरं नृत्यविगमे नृत्यावसाने परिश्रमान्नर्तनप्रया-सात्स्वेदेन भिन्नतिलकं विशीर्णतिलकं तन्मुखं नर्तकीमुखं प्रेम्णा दत्तवदनानिलः प्रवर्तितमुखमारुतः पिबन्। अमरानमरेश्वरमलकेश्वरं कुबेरं चातिक्रम्याजीवत्। ताभ्यामप्युत्कृष्टजीवित आसीदित्यर्थः। इन्द्रकुबेरयोरपि दुर्लभमीदृशं सौभाग्यमिति भावः ॥ १५ ॥

तस्य सावरणदृष्टसन्धयः काम्यवस्तुषु नवेषु सङ्गिनः ।
वल्लभाभिरुपसृत्य चक्रिरे सामिभुक्तविषयाः समागमाः ॥ १६ ॥

तस्येति। उपसृत्यान्तिकं गत्वा नवेषु नूतनेषु काम्यवस्तुषु अभ्यर्थितविषयेषु सङ्गिनः आसक्तिमतः सतस्तस्य सावरणाः प्रच्छन्नाः दृष्टाः प्रकाशाश्च सन्धयः साधनानि येषु ते समागमाः सङ्गमा वल्लभाभिः प्रेयसीभिः सामिभुक्तविषया अर्धो-पभुक्तेन्द्रियार्थाश्चक्रिरे। नवेषु सुखेष्वेतासां निःस्पृहः सन्नस्य समीपं नागच्छतीति भावः। अत्र गोनर्दीयः—"सन्धिर्द्विविधः सावरणः प्रकाशश्च। सावरणो भिक्षु-क्यादिना। प्रकाशः स्वयमुपेत्य केनापि" इति। "इतः स्वयमुपसृत्य विरोधार्थं तत्र स्थिताऽनुकल्पं स्वयं दर्शयेत् इति नाट्यशास्त्रम्। अन्यत्र गतं चमत्कृत्य पुनरुपगमनायार्धोपभोगमेवाभिलाषवृद्ध्यै चक्रुरित्यर्थः ॥ १६ ॥

अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलं च वीक्षितम् ।
मेखलाभिरसकृच्च बन्धनं वञ्चयन्प्रणयिनीरवाप सः ॥ १७ ॥

अङ्गुलीकिसलयेति। सोऽग्निवर्णः प्रणयिनीः प्रेयसीर्वञ्चयन्नन्यासक्त्या प्रतारयन् अङ्गुल्यः किसलयानीव तेषामग्रैस्तर्जनं भर्त्सनं भ्रूविभङ्गेन भ्रूभेदेन कुटिलं वक्रं वीक्षितं वीक्षणं चासकृन्मेखलाभिर्बन्धनं चावाप। अपराधिनो दण्ड्या इति भावः ॥ १७ ॥

तेन दूतिविदितं निषेदुषा पृष्ठतः सुरतवाररात्रिषु ।
शुश्रुवे प्रियजनस्य कातरं विप्रलम्भपरिशङ्किनो वचः ॥ १८ ॥

तेनेति। सुरतस्य वारो वासरः तस्य रात्रिषु दूतीभिर्विदितं यथा तथा पृष्ठतः प्रियजनस्य पश्चाद्भागे निषेदुषा तेनाग्निवर्णेन विप्रलम्भपरिशङ्किनो विरहशङ्किनः। प्रियभाषी जनश्च प्रियजनः। तस्य कातरं वचः प्रियागमनेन मां पाहीत्येवमादि दीनवचनं शुश्रुवे ॥ १८ ॥

लौल्यमेत्य गृहिणीपरिग्रहान्नर्तकीष्वसुलभासु तद्वपुः ।
वर्तते स्म स कथंचिदालिखन्नङ्गुलीक्षरणसन्नवर्तिकः ॥ १९ ॥

प्रयुज्यमानमिस्त्याद्यनेनास्य पेलवमतासुरुत्कमलद्वेन यौ वेपथुः कम्पस्तदुत्तरं त स्मधानं यथा तथा परिजनाङ्गनास्ते दासीत्वमन्वभूत् । परिजनशब्दाङ्गना वेति विग्रहः । अत्र यौवनस्यापि दासीत्वस्य कम्पोमङ्गमशाहृतस्तत्पं कृतम् । अपि चार्यं मर्यं कुर्याज्जयोमतं सखीत्वम्' इत्युपदेशात् ॥ २३ ॥

नाम वल्लभजनस्य ते मया प्राप्य भाग्यमपि तस्य काङ्क्ष्यते ।
लोलुपं ननु मनो ममेति तं गोत्रविस्खलितमूचुरङ्गनाः ॥ २४ ॥

नामेति । मया ते वल्लभजनस्य प्रियजनस्य नाम प्राप्य तन्नाम्नाऽऽह्वानं क-र्मणा तस्य वल्लभजनस्य भाग्यमपि । तत्परिग्रहमपरमिति शेषः । तदपि काङ्क्ष्यते । ननु यत मम मनो लोलुपं पश्य । इत्यनेन प्रकारेण अङ्गनाः गोत्रे नाम्नि विस्खलितं स्खलितवन्तं तमग्निवर्णमूचुः । गोत्रं नाम्नि कुलेऽचले इति यादवः । तन्नामश्रवणे सति तद्भाग्यमपि काङ्क्षति मनः । अहो लुब्धेति सोल्लुण्ठमुपालम्भन्तीत्यर्थः ॥ २४ ॥

चूर्णबभ्रु लुलितस्रगाकुलं छिन्नमेखलमलक्तकाङ्कितम् ।
उत्थितस्य शयनं विलासिनस्तस्य विभ्रमरतान्यपावृणोत् ॥ २५ ॥

चूर्णबभ्रुमित्यादि । चूर्णैः बभ्रु चूर्णैर्मालतकपरैर्योगुत्पापदिपताया: क्रियाभि कुरयसितैः कुङ्कुमादिभिर्बभ्रु पिङ्गलम् । 'बभ्रुः स्यात्पिङ्गले त्रिषु' इत्यमरः । लुलितस्रगाकुलं करिपदाम्बवन्धे क्रिया भूमिपतमस्तकतया पतिताभिर्लुलितस्रभिराकुलम् । छिन्नमेखलं हरिविक्रमबन्धः क्रिया सम्मुखतैकपरतस्ताद्रछिन्नमेखलम् । अलक्तका-ङ्कितं वेणुबन्धे भूतलनिहितबाह्यावरणस्यालक्तकारागपरस्विरं शयनं कर्तृ । उत्थि-तस्य । शयनादिति भावः । विलासिनस्तस्याग्निवर्णस्य विभ्रमरतानि सविभ्रमरतानि सुरतबन्धविशेषाननिरवर्य । अपावृणोत्प्रकटीचकार । व्यासमतसीमो बन्धनं रतिरह-स्ये— व्यानतं रतमिदं प्रिया यदि स्यादधोमुखचतुष्पदाकृतिः । तत्कटिं समधिरुह्य वल्लभः स्यात् यथाविपशुवत्स्थितस्तिति ॥ भूगतस्तनभुजास्यमस्तकामुन्नतस्फिजमधो-मुखीं स्त्रियम् । क्रामति स्वकरकृष्टमेहने वल्लभे करिपदं तदुच्यते ॥ योषिदेकचरणे समुत्थिते जायते हि हरिविक्रमाह्वयम् । व्यस्तहस्तयुगला प्रिये परे योषिदिति कटि-बद्धमस्तका ॥ अग्रतो यदि कमीरयोमुखी वेणुकं तदनुकम्पते प्रिये ॥" इति ॥२५॥

स स्वयं चरणरागमादधे योषितां न च तथा समाहितः ।
लोभ्यमाननयनः श्लथांशुकैर्मेखलागुणपदैर्नितम्बिभिः ॥ २६ ॥

स इति । सोऽग्निवर्णः स्वयमेव चोदितो यत्नतो रागं व्याहरसमाप्य देऽर्पयामास । किञ्च । स्वयोरुभिः प्रियाकरस्पर्शानिति शेषः । नितम्बिनीभिर्नितम्बवतीभिर्वेव चाटुमयोक्तैर्वचोभिः । ‘वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी’ इत्यमरः । प्रेमपात्रतया नम्रस्तुतिप्रियोऽभूत् सन् । तथा समाहितोऽवहितो वादयेद् यथा सम्यगायत्तमा स्यादिति भावः ॥ २६ ॥

चुम्बने विपरिवर्तिताधरं हस्तरोधि रशनाविघट्टने ।

विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतम् ॥ २७ ॥

चुम्बन इति । चुम्बने प्रवृत्ते सति विपरिवर्तिताधरं परिहृतोष्ठम् । रशनाविघट्टने ग्रन्थिविश्लेषणे प्रसक्ते सति हस्तं रुणद्धि वारयतीति हस्तरोधि । इत्थं सर्वतः सर्वत्र विघ्नितेच्छं प्रतिहतमनोरथमपि वधूनां रतं सुरतं तस्याग्निवर्णस्य मन्मथेन्धनं कामोद्दीपनमभूत् ॥ २७ ॥

दर्पणेषु परिभोगदर्शिनीर्नर्मपूर्वमनुपृष्ठसंस्थितः ।

छायया स्मितमनोज्ञया वधूर्ह्रीनिमीलितमुखीश्चकार सः ॥ २८ ॥

दर्पणेष्विति । सोऽग्निवर्णो दर्पणेषु परिभोगदर्शिनीः सम्भोगचिह्नानि पश्यन्तीर्वधूर्नर्मपूर्वं परिहासपूर्वमनुपृष्ठं तासां पृष्ठभागे संस्थितः सन् । स्मितेन मनोज्ञया छायया दर्पणगतेन स्वप्रतिबिम्बेन ह्रीनिमीलितमुखीर्लज्जयाऽवनतमुखीश्चकार । तमागतं दृष्ट्वा लज्जिता इत्यर्थः ॥ २८ ॥

कण्ठसक्तमृदुबाहुबन्धनं न्यस्तपादतलमग्रपादयोः ।

प्रार्थयन्त शयनोत्थितं प्रियास्तं निशात्ययविसर्गचुम्बनम् ॥ २९ ॥

कण्ठसक्तेति । प्रियाः शयनादुत्थितं तमग्निवर्णं कण्ठसक्तं कण्ठार्पितं मृदु बाहुबन्धनं यस्मिंस्तत् । अग्रपादयोः स्वाग्रिमयोर्न्यस्ते पादतले यस्मिंस्तत् । निशात्यये विसर्गो विसर्जनं यस्य तत् तच्चुम्बनं प्रार्थयन्त । ‘दुहाच्’ इत्यादिना द्विकर्मकत्वम् । अत्र घोटकमुखः— ‘रजन्यन्ते यदि चुम्बनानि प्रयुज्य यायात्प्रियतमोऽस्य दासाः’ इति ॥ २९ ॥

प्रेक्ष्य दर्पणतलस्थमात्मनो राजवेषमतिशक्रशोभिनम् ।

पिप्रिये न स तथा यथा युवा व्यक्तलक्ष्म परिभोगमण्डनम् ॥ ३० ॥

प्रेक्ष्येति । युवा सोऽग्निवर्णोऽतिशक्रं यथा तथा शोभमानमतिशक्रशोभिनं दर्पणतलस्थं दर्पणसङ्क्रान्तमात्मनो राजवेषं प्रेक्ष्य तथा न पिप्रिये न तुतोष यथा व्यक्तलक्ष्म प्रकटचिह्नं परिभोगमण्डनं प्रेक्ष्य पिप्रिये ॥ ३० ॥

एवमिन्द्रियसुखानि निर्विशन्नन्यकार्यविमुखः स पार्थिवः ।
आत्मलक्षणनिवेदितानृतूनत्यवाहयदनङ्गवाहितः ॥ ४७ ॥

एवमिति । एवमनङ्गवाहितः कामप्रेरितोऽन्यकार्यविमुखः स पार्थिव इन्द्रियाणां सुखानि सुखकराणि वस्तूनि निर्विशन्ननुभवन्नात्मनो लक्षणैः कुसुमाकारादिचिह्नैर्निवेदितान् । वयमृतुरिदानीं वर्तत इति ज्ञापितान् । ऋतूनत्यवाहयदत्यगमयत् ॥ ४७ ॥

तं प्रमत्तमपि न प्रभावतः शेकुराक्रमितुमन्यपार्थिवाः ।
आमयस्तु रतिरागसम्भवो दक्षशाप इव चन्द्रमक्षिणोत् ॥४८॥

तमिति । प्रमत्तं व्यसनासक्तमपि तं नृपं प्रभावतोऽन्यपार्थिवा आक्रमितुमभिभवितुं न शेकुर्न शक्ताः । रतिरागसम्भव आमयो व्याधिस्तु, क्षयरोग इत्यर्थः । दक्षस्य दक्षप्रजापतेः शापश्चन्द्रमिव । अक्षिणोदकर्शयत् । शापोऽपि रतिराग सम्भव इति । अत्र दक्षः किलात्मनः स्वकन्यास्वपि रोहिण्यामेव रममाणं राजानं क्षयं शशाप । शापव्याधि क्षयरूपेण तं क्षिणोतीत्युपमासङ्गतिः ॥ ४८ ॥

दृष्टदोषमपि तन्न सोऽत्यजत्सङ्गवस्तु भिषजामनाश्रवः ।
स्वादुभिस्तु विषयैर्हृतस्ततो दुःखमिन्द्रियगणो निवार्यते ॥४९॥

दृष्टदोषमपीति । भिषजां वैद्यानामनाश्रवो वचसि न स्थितः । 'वचने स्थित आश्रवः' इत्यमरः । अविधेय इत्यर्थः । स दृष्टदोषमपि । रोगहेतुत्वेन ज्ञातमिति शेषः । तत्सङ्गस्य वस्तु सङ्गवस्तु स्त्रीमद्यादिकं सङ्गजनकं वस्तु नात्यजत् । तथा हि । इन्द्रियगणः स्वादुभिर्मधुरैर्विषयैर्हृतस्तु हृतश्चेत्ततस्तेभ्यो विषयेभ्यो दुःखं कृच्छ्रेण निवार्यते । यदि वार्यत इति शेषः । दुस्त्यजाः खलु विषया इत्यर्थः ॥ ४९ ॥

तस्य पाण्डुवदनाल्पभूषणा सावलम्बगमना मृदुस्वना ।
राजयक्ष्मपरिहाणिराययौ कामयानसमवस्थया तुलाम् ॥५०॥

तस्येति । तस्य राज्ञः पाण्डुवदना । अल्पभूषणा परिमिताभरणा सावलम्बं दासादिहस्तावलम्बनसहितं गमनं यस्याः सा सावलम्बगमना । मृदुस्वना दीनस्वरा । राज्ञः सोमस्य यक्ष्मा राजयक्ष्मा क्षयरोगः तेन या परिहाणिः क्षीणावस्था सा । कामयते विषयानिच्छतीति कामयानः । कमेर्णिङभावपक्षे शानच् । "अनित्यमागमशासनम्" इति मुगभावः । एतदेवाभिप्रेत्योक्तं वामनेनापि—"कामयानशब्दः सिद्धोऽनादिश्चेत्" इति । तस्य समवस्थया कामुकावस्थया तुलां साम्यमाययौ प्राप । अवस्थाकालिको विशेषोऽवस्था । 'विशेषः कालिकोऽवस्था' इत्यमरः ॥ ५० ॥

व्योम पश्चिमकलास्थितेन्दु वा पङ्कशेषमिव घर्मपल्वलम् ।
राज्ञि तत्कुलमभूत्क्षयातुरे वामनार्चिरिव दीपभाजनम् ॥५१॥

व्योमेति । राज्ञि क्षयातुरेऽसति तत्कुलं पश्चिमकलया स्थित इन्दुर्यस्मिंस्तत्पश्चिमकलास्थितेन्दु व्योम वा व्योमेव । वाशब्द इवार्थे । यथाह दण्डी— इववद्वायथाशब्दा इति । पङ्कशेषं घर्मपल्वलमिव । वामनार्चिरल्पशिखं दीपभाजनं दीपपात्रमिवाभूत् ५१

बाढमेष दिवसेषु पार्थिवः कर्म साधयति पुत्रजन्मने ।
इत्यदर्शितरुजोऽस्य मन्त्रिणः शश्वदूचुरघशङ्किनीः प्रजाः ॥५२॥

बाढमिति । बाढं सत्यमेष पार्थिवो दिवसेषु पुत्रजन्मने पुत्रोदयार्थं कर्म व्रतादिकं साधयति । इत्येवमदर्शितरुजो निगूहितरोगाः सन्तोऽस्य राज्ञो मन्त्रिणोऽघशङ्किनीरनिष्टशङ्किनीः प्रजाः शश्वदूचुः ॥ ५२ ॥

स त्वनेकवनितासखोऽपि सन्पावनीमनवलोक्य सन्ततिम् ।
वैद्ययत्नपरिभाविनं गदं न प्रदीप इव वायुमत्यगात् ॥५३॥

स इति । स त्वग्निवर्णोऽनेकवनितासखः सन्नपि । पावनीं पितृऋणमोचनीं सन्ततिमनवलोक्य, पुत्रमनवाप्येत्यर्थः । वैद्ययत्नपरिभाविनं गदं रोगम् । प्रदीपो वायुमिव । नात्यगान्नातिचक्राम ममारेत्यर्थः ॥ ५३ ॥

तं गृहोपवन एव संगताः पश्चिमक्रतुविदा पुरोधसा ।
रोगशान्तिमपदिश्य मन्त्रिणः सम्भृते शिखिनि गूढमादधुः ॥५४॥

तमिति । पश्चिमक्रतुविदान्त्येष्टिविधिविदा पुरोधसा संगताः समेता मन्त्रिणस्तं गृहोपवन एव गृहाराम एव । आरामः स्यादुपवनम् इत्यमरः । रोगशान्तिमपदिश्य व्याजीकृत्य सम्भृते समिद्धे शिखिन्यग्नौ गूढमप्रकाशमादधुर्निदधुः अग्निसंस्कारं चक्रुरित्यर्थः ॥ ५४ ॥

तैः कृतप्रकृतिमुख्यसंग्रहैराशु तस्य सहधर्मचारिणी ।
साधुदृष्टशुभगर्भलक्षणा प्रत्यपद्यत नराधिपश्रियम् ॥५५॥

तैरिति । आशु शीघ्रं कृतः प्रकृतिमुख्यानां पौरजनप्रधानानां संग्रहः संनिपातनं यैस्तैर्मन्त्रिभिः साधु निपुणं दृष्टशुभगर्भलक्षणा परीक्षितशुभगर्भचिह्ना तस्याग्निवर्णस्य सहधर्मचारिणी नराधिपश्रियं प्रत्यपद्यत राज्यलक्ष्मीं प्राप ॥ ५५ ॥

तस्यास्तथाविधनरेन्द्रविपत्तिशोका-
दुष्णैर्विलोचनजलैः प्रथमाभितप्तः ।

अपूर्व अवसर। अपूर्व अवसर।

# परीक्षार्थियों के लिये सुवर्णसुयोग

# चन्द्रालोक—

## गागाभट्ट कृत राकागम टीका सहित।

संस्कृतसाहित्य से जिसका कुछ भी परिचय है उसको बतलाने की आवश्यकता नहीं कि पीयूषवर्ष जयदेव का चन्द्रालोक अलङ्कार का कैसा विलक्षण ग्रन्थ है। बड़ी आनन्दकी बात है कि काशिक राजकीय संस्कृतपाठशाला की साहित्यमध्यमा परीक्षा में यह ग्रन्थ निर्धारित किया गया है। परीक्षा में निर्धारित ग्रन्थ कैसे अच्छी तरह पढ़े जाने चाहिये यह बात विद्वज्जन से छिपी नहीं है। चन्द्रालोक वैसे बहुत ही सरस ग्रन्थ है किन्तु परीक्षार्थियों को केवल मूलग्रन्थ पढ़नेसे पूर्ण प्रसन्नता अनिश्चित रूप से प्रतीत होगी। यद्यपि इस ग्रन्थ की दो एक टीकाएं उपलब्ध हैं तथापि उनसे विद्यार्थियों को पूर्णतया लाभ होगा या नहीं इस विषय में सन्देह ही है। इन्हीं सब बातों का विचार कर हमने उपर्युक्त टीका सहित इस ग्रन्थ का नवीन संस्करण निकालने की आयोजना की और ईश्वर की कृपासे आज यह कार्य सुचारु रूप से सम्पन्न भी होगया।

प्रायः यह देखने में आता है कि अति अर्वाचीन टीकाओं पर लोगों की अच्छी श्रद्धा नहीं होती। इस बातको ध्यान में रख कर हम ऐसी एक चन्द्रालोक की टीका के खोज में थे जो प्राचीन होकर भी हमारे विद्यार्थियों के सर्वथा उपयोगी हो। सौभाग्य से ऐसी टीका हम लोगों को उपलब्ध हुई और उस का योग्य सम्पादन भी योग्य व्यक्ति के हाथ से हुआ।

इस टीका का नाम राकागम है इसके लिखने वाले अपने समय के अपूर्व पण्डित छत्रपति शिवाजी के समकालीन श्री पं० गागाभट्ट महोदय हैं। ऐसा कहा जाता है कि छत्रपति शिवाजी का राज्याभिषेक इन्हीं के करकमलों से सुसम्पन्न हुआ था। यह टीका ग्रन्थके भावों को स्पष्ट करने में बहुत ही सफल हुई है। इस टीका को खोज निकालने का तथा सुचारु रूपसे इस ग्रन्थ के सम्पादन करनेका श्रेय काशी के सुप्रसिद्ध विद्वान् श्री पं० अनन्तरामशास्त्रीवेतालसाहित्याचार्यजीको है। सम्पादक ने इसमें कितना परिश्रम किया है यह ग्रन्थके देखनेही से विदित होगा। सर्वसाधारण इससे लाभ उठा सकें इसलिये [illegible] मूल्य १) रुपया ही रक्खा गया है।

---

प्राप्तिस्थान—चौखम्बा-संस्कृत-पुस्तकालय बनारस सिटी।